किराततिक्तममृता-द्राक्षामामलकीशटीम्।
निष्क्वाथ्य पित्तानिलजे क्वाथं तं सगुड़ं पिबेत्॥ १०५॥
निदिग्धिकाबलारास्ना-त्रायमाणामृतायुतैः।
मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत्॥ १०६॥
पञ्चभद्रम्।—गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम्।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम्॥ १०७॥
मधुकं शारिवे द्राक्षा मधूकं चन्दनोत्पलम्।
काश्मरी पद्मकं लोध्रं त्रिफलां पद्मकेशरम्॥
परूषकं मृणालञ्च न्यसेदुत्तमवारिणि।
मधुलाजसितायुक्तं तत् पीतमुषितं निशि॥
वातपित्तज्वरं दाह-तृष्णामूर्च्छा-वमिभ्रमान्।
शमयेद्रक्तपित्तञ्च जीमूतानिव मारुतः॥ १०८॥

अथ पित्तश्लेष्मज्वरचिकित्सा।

पटोलादि।—पटोलं चन्दनं मूर्वा तिक्ता पाठामृता गणः।

---

किराततिक्तमित्यादि।—सुगमम्। अमृता गुडूची॥ १०५॥

निदिग्धिकेत्यादि। निदिग्धिका कण्टकारी। मसूरविदलैरिति।—व्रीहिमसूर-विदलैरिति पक्कल। अन्ये तु मसूरविदलं श्यामलतामाहुः, यद्यप्यस्याः पर्याये मसूरविदला पठ्यते, तथापि विदलमिह लोकाप्रसिद्धत्वात् इति निश्चि समादर। अत्रायं द्रव्यगुणे ज्वरानुकूलमस्ति, व्यवहारस्तु क्वचिदनया क्वचिद्व्रीहिमसूरेणेति॥ १०६॥

पञ्चभद्रस्य पित्तकफघ्नत्वमपि बोध्यम्, यदाह हारीत,—"किरात पर्पटं मुस्त गुडूची विश्वभेषजम्। पित्तश्लेष्मज्वरे कुर्यात् पाचनं ज्वरनाशनम्" इति॥ १०७॥

मधुकमित्यादि।—द्वे शारिवे श्यामलतानन्तमूले; मधूकं मधूकपुष्पम्, उत्पलं नीलोत्पलम्, काश्मरी गाम्भारी, अस्या फलं हृद्योपदेशात्। पद्मस्य केशरं किञ्जल्कं, मृणालमुत्पलम्, उत्तमवारिणि तण्डुलोदके। एतत् सर्वं शीतकषायविधिना गृहीत्वा पेयम्॥ १०८॥

पित्तश्लेष्मारुचिच्छर्दि-ज्वरकण्डविषापहः ॥ १०९ ॥

गुडूच्यादिः ।—गुडूची निम्बधन्याकं पद्मकं चन्दनानि च ।
एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ॥
हृल्लासारोचकच्छर्दि-पिपासादाहनाशनः ॥ ११० ॥

चातुर्भद्रक पाठासप्तकौ ।

किरातं नागरं मुस्तं गुडूचीञ्च कफाधिके ।
पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत् ॥ १११ ॥

कण्टकार्य्यादिः ।—कण्टकार्य्यमृताभार्गी-नागरेन्द्रयवासकम् ।
भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी ॥
कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम् ।
दाहतृष्णारुचिच्छर्दि-कासहृत्पार्श्वशूलनुत् ॥ ११२ ॥
मधवपुष्पवासाया रसः क्षौद्रसितायुतः ।
कफपित्तज्वरं हन्ति सास्रपित्तं सकामलम् ॥ ११३ ॥

---

पित्तकफज्वरचिकित्सामाह, पटोलमित्यादि ।—सुगमम् । गर्भोक्तत्वात् क्वाथ-धान्यादिकाम्यनासे बोध्या १०९ ॥

गुडूचीत्यादि ।—पद्मकं पद्मकाष्ठम् । यत्र पद्मनिर्देशस्तत्र प्रायः पद्मकोऽयमेव गृह्यते । अत्र यच्छर्दिदाहपिपासाया ग्रहाः शीतोक्त्या अपु प्रविशन्ति । तत्र मधुधा हृल्लासम् ॥ ११० ॥

किरातमित्यादि ।—"पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्" इति किरा-तादिचतुर्भिः सह मिलयित्वा पिबेत् ; अत. पाठासप्तकत्वम् । मृणालमुशीरम् । पित्ता-धिके इत्यत्र कफ इति शेषः । अतुकर्णेऽप्युक्तं—"भूनिम्ब-घन-गुडूची-यवासाम्बुशालक-भार्ग्यभयाधात्रा" इति ॥ १११ ॥

कण्टकार्य्यादि ।—भार्गी वामनहाटी ; इन्द्र इन्द्रयवः ; यवासकं दुरालभा । एष योगः पित्तोत्तरे कफ इति केचित् ॥ ११२ ॥

मधवेत्यादि ।—रसः स्वरसः तस्य गुरुत्वात् कर्षमेव मात्रैवोपयुज्यते । सिता-मधुनोस्तु प्रत्येकं षड्भिकं प्रक्षेप इति ॥ ११३ ॥

पटोलं पिचुमर्दश्च त्रिफला मधुकं बला ।
साधितोऽयं कषायः स्यात् पित्तश्लेष्मोद्भवे ज्वरे ॥ ११४ ॥

अमृताष्टक ।—गुडूचीन्द्रयवारिष्ट-पटोलं कटुरोहिणी ।
नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम् ॥
अमृताष्टक इत्येष पित्तश्लेष्मज्वरापहः ।
हृल्लासारोचकच्छर्दि-तृष्णादाहनिवारणः ॥ ११५ ॥
पटोलयवधन्याकं मुस्तामलकचन्दनम् ।
पैत्तिके श्लेष्मपित्तोत्थे ज्वरे तृट्छर्दिदाहनुत् ॥ ११६ ॥

पञ्चतिक्तम् ।

क्षुद्रामृताभ्यां सह नागरेण सपौष्करञ्चैव किराततिक्तम् ।
पिबेत् कषायन्त्विह पञ्चतिक्तं ज्वरं निहन्त्यष्टविधं समग्रम् ॥११७॥

मगधरामठमात्रां कटुकामुष्णवारिणा ।
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ॥ ११८ ॥
दीपनं कफविच्छेदि वातपित्तानुलोमनम् ।

---

पटोलमित्यादौ—पिचुमर्दो निम्बः ॥ ११४ ॥

अमृताष्टके—अरिष्टो निम्बः ॥ ११५ ॥

पटोलेत्यादि ।—स्पष्टम् ॥ ११६ ॥

क्षुद्रेत्यादि ।—क्षुद्रा कण्टकारी, नागरस्य कटुत्वेऽपि अविरोधो गन्धभौमि स्यात् पञ्चतिक्तकसंज्ञा ॥ ११७ ॥

मगधेत्यादि ।—सुगमम् । मात्रकान्यनेयम । शर्कराकटुरोहिण्यौ, भिन्निना समभागेन कार्यः । वैद्यसमाचारेऽपि समभाग एवोक्तः । अत्रात्र सर्वासां तत्समानत्वान कटुकायाः प्राधान्यात् कटुकायाः प्रदत्तमात्रका: सितायास्तत्र इति, तत्र, चक्र-वैद्यमाते—"सिता कटुकया युक्ता पीता श्रोतेन वारिणा । जीर्णज्वरं हन्त्येवेयं कफपित्तकृतं ज्वरम्" इत्यत्र सिताया एव प्राधान्येन निर्देशात् । तस्मात् "भागेऽप्यनुक्ते समता विधेया" इति वचनात् समभागतैव युक्ता ॥ ११८ ॥

ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः ॥ ११९ ॥

वातश्लेष्मज्वरचिकित्सा ।

कफवातज्वरे स्वेदान् कारयेद्रूक्षनिर्मितान् ।
स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम् ।
हृत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति ॥ १२० ॥

खर्परभृष्टपटस्थितकाञ्जिकसिक्तो हि वालुकास्वेदः ।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ १२१ ॥

मुस्तनागरभूनिम्बं त्रयमेतत् त्रिकार्षिकम् ।
कफवातामशमनं पाचनं ज्वरनाशनम् ॥ १२२ ॥

पञ्चकोलः—पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरम् ।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः ॥ १२३ ॥

पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम् ।
वातश्लेष्मविकारघ्नं प्लीहज्वरविनाशनम् ॥ १२४ ॥

---

दीपनमित्यादि।—अत्र धन्याकस्य दश माषकाः, पटोलस्य दशमाषकाः। पटोलस्य तु षण्माषका इति केचित्, तन्न, समभागबाधकाभावात्। मतं ज्ञेयं, व्यवहारस्तु व्यञ्जनेनैव ॥ ११९ ॥

वातश्लेष्मज्वरचिकित्सामाह, कफवातेत्यादि।—रूक्षनिर्मितेत्यादि।—रूक्षनिर्मिता-निति करीषपांशुवालुकादिनिर्मितान्। यद्यपि वातेऽपि स्निग्ध एव स्वेदो युक्तः, यदुक्तम्—"स्निग्धोऽग्निभिः स्निग्धरूक्षो वातश्लेष्मणि शस्यते" इति, तथापि आमाशयगतत्वेन दोषस्य ज्वरारम्भकत्वात् वातेऽपि रूक्ष एव स्वेदः कृतः। उक्तं हि—"आमाशयगते वाते कफपूर्वः प्रशस्यते" ॥ १२० ॥

तमेव रूक्षस्वेदमाह खर्परेत्यादि।—स्विद्यते अनेनेति स्वेदः, वालुका एव स्वेदः, वालुकास्वेदः, तेन खर्परभृष्टेत्यादि विशेषणं सङ्गच्छते। वालुकाप्रकर इत्यपि पाठः ॥१२१॥

मुस्तेत्यादि।—प्रत्येकं कर्षः ॥ १२२ ॥

पिप्पल्यादि।—शोधितश्चाभावात् कार्यमपि क्रियते; प्रत्येकं कोलप्रमाण-योगादस्य पञ्चकोल इति संज्ञा ज्ञेया ॥ १२३ ॥

पिप्पलीभिः शृतमित्यादि।—पिप्पल्यादीनामल्पवीर्यत्वात् छायाजलवत् चास्य कर्त-

आरग्वधग्रन्थिकमुस्ततिक्ता-हरीतकीभिः क्वथितः कषायः ।
सामे सशूले कफवातयुक्ते ज्वरे हितो दीपनपाचनश्च ॥ १२५ ॥

क्षुद्रादिः ।

क्षुद्रामृतानागरपुष्कराह्वयैः कृतः कषायः कफमारुतोद्भवे ।
सश्वासकासारुचिपार्श्वरुक्करे ज्वरे त्रिदोषप्रभवे च शस्यते ॥१२६॥

दशमूलीरसः पेयः कणायुक्तः कफानिले ।
अविपाकेऽतिनिद्रायां पार्श्वरुक्श्वासकासके ॥ १२७ ॥
मुस्तं पर्पटकः शुण्ठी गुडूची सदुरालभा ।
कफवातारुचिच्छर्दि-दाहशोषज्वरापहः ॥ १२८ ॥
दारुपर्पटभार्ग्यब्द-वचाधान्यककट्फलैः ।
साभयाविश्वपूतीकैः क्वाथो हिङ्गुमधूत्कटः ॥
कफवातज्वरे पीतो हिक्काश्वासगलग्रहान् ।
कासश्वासप्रसेकांश्च हन्यात् तरुमिवाशनिः ॥
मात्रा चोद्दिष्टनादीनां स्नेहकार्येषु चूर्णवत् ।

---

प्रभादिमानेन क्वाथो न दुष्यते । अत कर्षमितमात्र वा गृहीत्वा कषायं कार्यं । प्रसृते ग्रैष्मदि पर्नि च धीमद् । इदानीं क्वाथेन व्यवहरन्ति, षडङ्गपलं गृहीत्वा षडङ्गद्रव्यसमानामन्यद्रव्याणामपि कुर्वन्ति ॥ १२४ ॥

आरग्वधेत्यादि ।—आरग्वधः शोणालुफलं, ग्रन्थिकं पिप्पलीमूलं, तिक्ता कटुकी । दीपनपाचनश्चेत्यत्र, "दीपनश्चोष्णो" इत्यपि पाठः ॥ १२५ ॥

क्षुद्रेत्यादि ।—क्षुद्रा कण्टकारी ॥ १२६ ॥

दशमूलीत्यादि ।—रसः क्वाथः । अविपाके दीपनाभावेऽपाके, तेन पाचन-लक्षणम् ॥ १२७ ॥

मुस्तेत्यादि ।—क्वाथेन ॥ १२८ ॥

दार्वित्यादि ।—पूतिको लताकरञ्ज इति विदग्ध । किन्तु कुत्रचित् दृश्यते, न च दोषदा न व्याप्यात । पूतीकस्य दर्भाणो । हिङ्गु-षोडशो मदेदयं परिमितमात्र, मात्रेत्यादि ।—चूर्णवदिति चूर्णं इष्यते । [illegible]

माषिकं हिङ्गुसिन्धूत्थ-अरण्याख्यास्तु शाणिकाः ॥ १२९ ॥
मातुलुङ्गफलकेशरो घृतः सिन्धुजन्ममरिचान्वितो मुखे ।
हन्ति वातकफरोगमास्यगं शोषमाशु जड़तामरोचकम् ॥१३०॥

सन्निपातज्वर-चिकित्सा ।

लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा ।
अवलेहोऽञ्जनञ्चैव प्राक् प्रयोज्यं त्रिदोषजे ॥
सन्निपातज्वरे पूर्वं कुर्य्यादामकफापहम् ।
पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ ॥ १३१ ॥

---

फलं माषेति पक्षे द्वयं माषा ज्ञेयाः ; माषिकं हिङ्गिति च्छेदः। अरण्याख्येन सैन्धव-सौवर्चल-मरिचादयः ॥ १२९ ॥

मातुलुङ्गेत्यादि ।—सिन्धुजन्म सैन्धवम् ॥ १३० ॥

सन्निपातज्वरचिकित्सामाह, लङ्घनमित्यादि ।—यद्यपि सन्निपातज्वरस्त्रिदोषारब्धः, तथापि आमाशयस्य कफस्थानत्वात्, स्थायित्वेन च कफ [illegible] वमौ, अतः मलप्रत्यनीकचिकित्सा प्रथमतो विधेया। अतः कफप्रत्यनीककर्मैव लङ्घनादिकं प्रथमं कर्त्तव्यम् इत्याह, लङ्घनमित्यादि ।—अत एवोक्तमन्यत्र—"श्लेष्मनिग्रहमेवादौ कुर्य्यात् व्याधौ त्रिदोषजे" इति, यत् पुनरन्यत्रोक्तं—"शमयेत् पित्तमेवादौ ज्वरेषु सम वायिषु। दुर्निवारतमं तद्धि ज्वरार्त्तेषु विशेषतः ॥" तथा—"वातस्थानु जयेत् पित्तं पित्तस्थानु जयेत् कफम्। त्रयाणां वा जयेत् पूर्वं यो भवेद्बलवत्तमः ॥" इत्युक्तं, तत्पुनरवस्थाविशेषे बोध्यम्। तथाहि सामज्वरे कफमेवादितः प्रतिकुर्य्यात्, आमपाकान्ते पित्तमेवादौ, चिरजे मारुतमेवादाविति। अथार्थे तन्त्रान्तरं—"ज्वरं त्रिदोषजे सामे शमयेत् कफमादितः। पाकान्तमागते पित्तं चिरजे विषमेऽनिलम्" इति। अन्ये पुन—"वातस्थानु जयेत् पित्तम्" इत्यादिश्लोकमतीसारविषयतया वर्णयन्ति। ननु वातादीनां विभिन्नप्रशयप्रकोपादीनां युगपदुपस्थानाभावात् कथं सम्भूय, सान्निपातिकव्याध्यारम्भकत्वम ? अत्र अन्यमते—त्रिदोषकरनिदानसेवने प्रकोपादेर्युगपदुपस्थितिरिति, तदपि न मनोरमं, यतस्तथाविधनिदानोपसेवनेऽपि दोषाणां विपरीतगुणैः परस्परोपघातात् युगपत्प्रकोपस्य अनुपपत्तेः। अन्ये पुनः—न खलु दोषाणां त्रिविधा एव गुणाः विपरीताः, समानास्त्वपि कतिपयगुणस्य सद्भावात् समानेन हि गुणेन दोषाणामन्योन्यप्रकोपस्यापि सम्भवात्। तथाहि,—

लङ्घनम् ।—त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ।
लङ्घनं सन्निपातेषु कुर्य्यादारोग्यदर्शनात् ॥
दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता ।
न हि दोषक्षये कश्चित् सहते लङ्घनादिकम् ॥ १२२ ॥

निष्ठीवनम् ।—आर्द्रकस्वरसोपेतं सैन्धवं कटुकत्रयम् ।
आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः ।
तेनास्य हृदयात् श्लेष्मा मन्यापार्श्वशिरोगलात् ।
लीनोऽप्याकृष्यते शुष्को लाघवञ्चास्य जायते ॥
पर्व्वभेदोऽङ्गमर्दश्च मूर्च्छाकासगलामयाः ।
मुखाक्षिगौरवं जाड्यमुत्क्लेशश्चोपशाम्यति ॥
सकृद्द्विस्त्रिश्चतुः कुर्य्यात् दृष्ट्वा दोषबलाबलम् ।
एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम् ॥ १२३ ॥

नस्यम् ।—मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् ।

शीतत्वाच्छ्लेष्मापि स्वस्थानं पित्तं प्रकोपयति, पित्तमप्युष्णत्वेन वायुं, वायुरपि रौक्ष्यात् कफं, कफोऽपि तथा वायुं, पित्तञ्च द्रवत्वेन कफं, कफोऽपि तथा पित्तमिति गुणसाम्यम्। न वाच्यम्, विरोधेनत्र गुणौ कुतान् [illegible] समासगुणमभिहद मारयथैव, कुतो न करोत्येव यतो दुष्यादेयता विदोषकरदव्यसमावाय [illegible] दृषयन्ति परं न समयन्तीति। इदमेवाह—"विकृतैव न [illegible] गुणैर्दूर्नि परस्परम्। दोषाः सहजसात्म्यत्वाद् घोरं विषमहीनिव॥" इति। एतच्च सन्निपातज्वरस्य प्रदीपिकायामनुसन्धेयम् ॥ १२१ ॥

लङ्घनं दर्शयित्वा दोषभेदेन तदवधिमाह, त्रिरात्रमित्यादि। त्रिरात्र पञ्चरात्र-दशरात्रविकल्पौ यथाक्रमं वातपित्तश्लेष्मापेक्षया ज्ञेयः। कुर्य्यादारोग्यदर्शनादिति भावं समस्तदोषबलापेक्षया अयमवधिर्ज्ञेयः। एतावत्कालं यावत् कथं लङ्घनं कर्त्तव्यम्? इत्याह—दोषाणामित्यादि।—"लङ्घनं दिवसम्" इत्यादिवचनात् वातादीनामपि तदेव ज्ञेयम् ॥ १२२ ॥

निष्ठीवनमाह आर्द्रकेत्यादि।—आर्द्रकस्वरसयुक्तं कृत्वा सैन्धवादिचूर्णं कटुकत्रयं दत्त्वा निष्ठीवनमुपदिशन्ति इहात् ॥ १२३ ॥

अन्यदा सिद्धिविहितं तीक्ष्णं नस्यं प्रयोजयेत् ॥
तेन प्रभिद्यते श्लेष्मा प्रभिन्नश्च प्रसिच्यते।
शिरोहृदयकण्ठास्य-पार्श्वरुक् चोपशाम्यति ॥ १२४ ॥

मधूकसारादिः।

मधूकसारसिन्धूत्थ-वचोषणकणाः समाः।
श्लक्ष्णं पिष्टाम्भसा नस्यं कुर्यात् संज्ञाप्रबोधनम् ॥ १२५॥
सैन्धवं श्वेतमरिचं सर्षपं कुष्ठमेव च।
वस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम् ॥ १२६ ॥
अञ्जनमाह।—शिरीषबीजगोमूत्र-कृष्णामरिचसैन्धवैः।
अञ्जनं स्यात् प्रबोधाय सरसोनशिलावचैः ॥ १२७ ॥

अष्टाङ्गावलेहिका।

कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी।
श्लक्ष्णचूर्णीकृतञ्चैतन्मधुना सह लेहयेत् ॥
एषावलेहिका हन्ति सन्निपातं सुदारुणम्।
हिक्कां श्वासञ्च कासञ्च कण्ठरोगं नियच्छति ॥

---

नस्यमाह, मातुलुङ्गेत्यादि।—स्वरसश्च सैन्धव-सौवर्चल विड्म्। सिद्धिविहितमिति।—अस्य योगस्य मातुलिङ्गस्वरसत्वात् मातुलिङ्गस्यैव सिद्धिस्थाने ज्ञेयम्॥ १२४॥

मधूकसारेत्यादि।—मधूकं फलविशेषकस्तु सारः मज्जास्थि. ऊषणं मरिचम्; अम्भसा जलेन॥ १२५॥

सैन्धवमित्यादि।—श्वेतमरिचं शोभाञ्जनबीजम्॥ १२६॥

अञ्जनमाह, शिरीषेत्यादि।—शिला मनःशिला। रसोनेत्यादिविशेषणादेको योगः, पृथक्पाठात् पृथक्योगोऽपि बोध्यः। यदुक्तमायुर्वेदसारे—"शुक्राम्बरीष गोमूत्र-कृष्णा-मरिच-सैन्धवैः। शिलावचारसोनैश्च अञ्जनं स्यात् प्रबोधनम्॥" इति॥ १२७॥

अष्टाङ्गमाह, कट्फलमित्यादि।—यासो दुरालभा, कारवी कृष्णजीरकम्। सन्निपाते मे दस्य सर्वदा हितत्वेन अविमृष्यसहकृतं देयस्य उक्तं, मधु च इत्थं विरुध्यते.

ऊर्द्धगश्लेष्महरणे तथा स्वेदादिकर्म्मणि।
विरोध्युष्णो मधु त्यक्त्वा कार्य्यमार्द्रकजै रसैः॥ १३८॥

---

अतएव मधु त्यक्त्वा आर्द्रकस्वरसेनावलेहः कार्य्य इत्याह, ऊर्द्धग इत्यादि।—एकत्रेत्य इति पदं स्वेदादिविशेषणम्, अपरत्रोपपद्यर्थम्। तस्मात् उष्णविरोधि मधु ततो मधु त्यक्त्वा इत्यर्थः। ननु—"क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो हितः॥" इत्यनेन सुश्रुते क्रियासङ्करो निषिद्धः, तत् कथं मध्वलिष्ठीवनादीनां युगपदेव सन्निपातज्वरे विधानम्? अत्रोच्यते,—क्रियासङ्करो ह्यनेकक्रियामेलकः, तत्र च दूषकत्वं न सङ्करत्वमात्रेण, किं तर्हि अतिमात्रत्वेन अग्निमान्द्यजनकतया तथा परस्परगुणविरोधादुभयोरपि निष्फलतया च। एतच्चेहाभ्यन्तरपरिमार्ज्जने एव सम्भवति, न पुनर्बहिःपरिमार्ज्जने मध्वलिष्ठीवनादौ। एतदभिसन्धाय इन्दोऽपि समाधानमुक्तवान्, यथा,—"क्रियाभिस्तुल्यरूपाभिः क्रियासाङ्कर्य्यमिष्यते। भिन्नरूपतया यास्तु ताः कुर्व्वन्ति न दूषणम्॥" इति। तुल्यरूपता चान्तःपरिमार्ज्जनत्वेनैव बोद्धा। तेनायमर्थः,—एकस्मिन् अन्तःपरिमार्ज्जने उपयुक्ते यद्यपरमन्तःपरिमार्ज्जनमुपयुज्यते, तदैव क्रियासाङ्कर्य्यस्य उक्तरीत्या दूषकत्वं, न बहिःपरिमार्ज्जने मध्वादाविति। कषायादिभेषजोपयोगानन्तरं पुनरवलेहादिदाने च यद्यपि क्रियासाङ्कर्य्यदोषो भवत्येव, तथापि कालान्तरतया न विरोधः। तदङ्गता पानादिवद्व्यवहारात्, दोषानुपलम्भाच्च बोध्यम्। किं वा क्रियासाङ्कर्य्यस्य दोषसाम्यतया कण्ठरोधादिकमवधायप्रशमकतया च निषिद्धमप्यवलेहादिकमवस्थाविशेषे अङ्गीक्रियते। यथा पीतविषे शान्तौ वमनम्। अन्ये तु कल्पनया तुल्यरूपता व्याख्याय कषायावलेहयोर्युगपदुपयोगेऽपि कल्पनाभेदान्न साङ्कर्य्यमित्याहुः। तन्न, सुश्रुते अग्निमान्द्यादिहेतुत्वेन क्रियासङ्करस्यैव दोषत्वमुक्तम्। अत्र धातुल्यरूपता तुल्यरूपता वेति विशेषो नास्ति। तेनैव इन्दुनैव कषायमध्वादीनां सन्निपाते युगपत्प्रयुज्यमानानामविरोधार्थं क्रियाभिस्तुल्यरूपाभिरिति वचनं निबद्धम्। तत्र क्रियाद्वयं कल्पनया तुल्यरूपमतुल्यरूपं वा भवतु, उभयथाप्यतिमात्रादिनाग्निमान्द्यादिहेतुतया निषिद्धमेव। तेनाभिन्नकल्पनात्मकेऽपि भेषजद्वये युगपद्युक्ते अतिमात्रत्वादिना अग्निमान्द्यादिहेतुत्वं दूषकताबीजमस्त्येव। तस्मात् अन्तःपरिमार्ज्जनत्वेनैव तुल्यरूपत्वं, बहिःपरिमार्ज्जने च भिन्नरूपत्वं व्याख्याय कषायमध्वादिषु क्रियासाङ्कर्य्यदोषत्वं परिहरणीयम्॥ १३८॥

पञ्चमुष्टिकः ।—यवकोलकुलत्थानां मुद्गमूलकशुण्ठयोः ।
एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले ॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः ।
शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे ॥ १३९ ॥

चातुर्भद्रकपञ्चमूलकम् ।

पञ्चमूलीकिरातादिर्गणो योज्यस्त्रिदोषजे ।
पित्तोत्कटे च मधुना कणया च कफोत्कटे ॥ १४० ॥

दशमूलम् ।—विल्वश्योणाकगाम्भारी-पाटलागणिकारिकाः ।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥
शालपर्णीपृश्निपर्णी-बृहतीद्वयगोक्षुरम् ।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥
उभयं दशमूलन्तु सन्निपातज्वरापहम् ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम् ॥ १४१ ॥

---

यवेत्यादि ।—प्रत्येकं यवादीनां मुष्टिमानमंशं, न तु पलं द्रव्यमानत्वात् । अष्टगुणेन पयः प्रकारो । एकैकं द्रव्यमाहृत्य समुदितानामेषां मिलित्वा पञ्चमानं पचेदित्यर्थः । यतः पुनर्यवादीनामाहारद्रव्यत्वात् प्रत्येकं पञ्चमानत्वेऽपि न दोष इत्याह । एतेन योगस्य धान्यपञ्चकीयोगात् सप्तमुष्टिक इत्यपि नाम । यदुक्तं,— "यवकोलकुलत्थैश्च मुद्गमूलकशुण्ठकैः । धान्याकविल्वमुस्तैर्वा स्यात् सप्त मुष्टिकः" ॥ १३९ ॥

पञ्चमूलीत्यादि ।—वातपित्तोल्वणज्वरे योग एवायम् । तत्र पुनर्मधुयोगात् पित्तोल्वणत्रिदोषहन्तृत्वं, पिप्पलीयोगाच्च कफोल्वणत्रिदोषहन्तृत्वमस्य ज्ञेयम् । अत्र कनीयस्या एव पञ्चमूल्या व्यवहारः । अन्ये पुनः श्लेष्मोल्वणे महतीं पञ्चमूलीमाहुः ॥ १४० ॥

दशमूलस्य एकत्वादुत्कृष्टत्वाच्चाश्रयानुरोधात् पञ्चमूलद्वयमाह, बिल्वेत्यादि ।— महत्तरवृक्षमूलत्वात् बिल्वादिपञ्चमूलस्य महत्त्वं, अल्पतरवृक्षमूलत्वाच्च शालपर्ण्यादीनां

चतुर्दशाङ्गः ।

चिरज्वरे वातकफोल्वणे वा त्रिदोषजे वा दशमूलमिश्रः ।
किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिने वा त्रिवृता विमिश्रः ॥ १४२॥

वातश्लेष्महरोऽष्टादशाङ्गः ।

दशमूली शटी शृङ्गी पौष्करं सदुरालभम् ।
भार्गी कुटजबीजञ्च पटोलं कटुरोहिणी ॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्ति-श्वासहिक्कावमीहरः ॥ १४३ ॥

पित्तश्लेष्महरोऽष्टादशाङ्गः ।

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रबीजधनिकेभकणाकषायः ।
तन्द्रीप्रलापकसनारुचिदाहमोह-
श्वासादियुक्तमखिलं ज्वरमाशु हन्ति ॥

मुस्तादोगण ।—मुस्तपर्पटकोशीर-देवदारुमहौषधम् ।
त्रिफला धन्वयासश्च नीली कम्पिल्लकं त्रिवृत् ॥
किराततिक्तकं पाठा बला कटुकरोहिणी ।
मधुकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते ॥
अष्टादशाङ्गमुदितमेतद्वा सन्निपातनुत् ।

---

सम्यक् कथम् । सुश्रुते तु गोक्षुरस्थाने एरण्डमूलं पठ्यते, चरके तु गोक्षुर इति । तेन सुश्रुतप्रयोगेषु एरण्डमूलेन, चरकादिप्रयोगेषु गोक्षुरेणैव व्यवहार इति । ज्ञानि श्रीवादादयस्त्वेरण्डमूलेनैवेति ॥ १४१ ॥

चिरज्वर इत्यादि ।—वातकफोल्वण इत्युभयत्रापि सम्बध्यते । शुद्ध्यर्थिने वा त्रिवृताविमिश्र इति मलविबन्धे सति शोधनार्थं त्रिवृच्चूर्णप्रक्षेपमाहुः प्रक्षेप इत्याहुः. ॥ १४२ ॥

दशमूलीत्यादि ।—स्पष्टम् ॥ १४३ ॥

भूनिम्बेत्यादि ।—इन्द्रबीजम् इन्द्रयव. । मुस्तेत्यादि ।—नीली नीलबुह्ना ,

पित्तोत्तरे सन्निपाते हितश्चोक्तं मनीषिभिः ।
मन्यास्तम्भ उरोघात उरःपार्श्वशिरोग्रहे ॥ १४४ ॥

शट्यादिगणः ।—शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा ।
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥
एष शट्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्ति-श्वासे तन्द्रासु शस्यते ॥ १४५ ॥

बृहत्यादिगणः ।—बृहत्यौ पुष्करं भार्गी शटी शृङ्गी दुरालभा ।
वत्सकस्य च बीजानि पटोलं कटुरोहिणी ॥
बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः ।
कासादिषु च सर्वेषु देयः सोपद्रवेषु च ॥ १४६ ॥

भार्ग्यादिः ।—भार्गीं पुष्करमूलञ्च रास्नां बिल्वं यमानिकाम् ।
नागरं दशमूलञ्च पिप्पलीश्चापि साधयेत् ॥
सन्निपातज्वरे देयं हृत्पार्श्वानाहशूलिनाम् ।
कासश्वासाग्निमन्दत्वं तन्द्रीञ्च विनिवर्त्तयेत् ॥

चतुर्दशाङ्गः ।—द्विपञ्चमूली षड्ग्रन्था विश्वगन्धनखीद्वयम् ।
कफवातहरः क्वाथः सन्निपातहरः परः ॥ १४७ ॥

---

कल्किक गुण्डागोचनी । यवाम्याने यवेति न पाठः, आयुर्वेदप्रकाशादौ यवापाठात् ॥ १४४ ॥

शट्यादि :—किरातस्थाने केचित् पटोलं पठन्ति, तन्न, हारीत भानुमतीचक्रादिष्विह किरातस्यैव पाठादिति ॥ १४५ ॥

बृहत्यादि :—कासादिष्विति आदिशब्दग्रहणात् शय्याधृतहृद्ग्रहादीनां ग्रहणम् । मन्दह्रति श्वासाग्निमान्द्यस्य दोषस्य पाठात् ॥ १४६ ॥

भार्ग्यादि :—बिल्वं । बिल्व बिल्वमूलं दौर्बल्यनाशकत्वात् । दशमूलमेवेति पाठपक्षेऽपि भार्ग्यादौ तस्य पाठः, किन्तु केचित् "नागरं दशमूलञ्च पिप्पलीश्च" इति पाठो दृश्यते एवं चक्रादिष्वपि, अत एकभागत्वमिति युक्तम् । द्विपञ्चमूली

अभिन्यासज्वरचिकित्सामाह।

कारवीपुष्करैरण्ड-त्रायन्तीनागरामृताः।
दशमूलीशटीशृङ्गी-यासभार्गीपुनर्नवाः॥
तुल्या मूत्रेण निष्क्वाथ्य पीताः स्रोतोविशोधनाः।
अभिन्यासज्वरं घोरमाशु घ्नन्ति समुद्धतम्॥ १४८॥
मातुलुङ्गाश्मभिद्बिल्व-व्याघ्रीपाठोरुबूकजः।
क्वाथो लवणमूत्राढ्योऽभिन्यासानाहशूलनुत्॥ १४९॥
निद्रोपेतमभिन्यासं क्षीणं विद्याद्गतौजसम्॥ १५०॥
कण्ठरोधकफश्वास-हिक्कासन्यासपीड़ितः।
मातुलुङ्गार्द्रकरसं दशमूलाम्भसा पिबेत्॥ १५१॥
व्योषाब्दत्रिफलातिक्ता-पटोलारिष्टवासकैः।
सभूनिम्बामृतायासैः-क्वाथोऽघज्वरनुज्जलम्॥ १५२॥

---

त्यादि। त्रिपञ्चमूली दशमूली, षड्ग्रन्था वचा, अश्वगन्धादिरय कालाञ्जका गुडशर्करी-मिष्टान, रक्तश्वेतपुष्पभिदा॥ १४७॥

सन्निपातज्वरभेदस्याभिन्यासस्य चिकित्सामाह, कारवीत्यादि।—कारवी कृष्णजीरकम, त्रायन्ती त्रायमाणा, मूत्रेण गोमूत्रेण॥ १४८॥

मातुलुङ्गेत्यादि।—अश्मभित् पाषाणभेदी, बिल्वस्य मूलं, लवणं सैन्धवं, मूत्रं गोमूत्रम। गोमूत्रसैन्धवे प्रक्षिप्य क्वाथः पेयः। गतप्रयोगदर्शनात् गोमूत्रस्य क्वाथं प्रक्षिप्य स्वरूपमित्येके॥ १४९॥

सन्निविष्टो अभिन्यासलक्षणस्य अनुक्तत्वात् तल्लक्षणमिदेनाह, निद्रोपेतमित्यादि।—सन्निपातज्वरमेव निद्रोपेतमभिन्यासं विद्यात्। क्षीणं विद्याद्गतौजसमिति।—क्षीणमिति क्षीणधातुगतम्। अभिन्यासज्वरमेव सन्निपातज्वरमेव क्षीणधातुगतं हतौजसं विद्यात्। तथा सुश्रुते—"अभिन्यासन्तु तं प्राहुर्हतौजसमथापरे। सन्निपातज्वरं कृच्छ्रमसाध्यमपरे जगुः॥" इति॥ १५०॥

कण्ठरोधेत्यादि।—दशमूलक्वाथमेव मातुलुङ्गार्द्रकरसे प्रक्षिप्य पिबेदित्यर्थः॥ १५१॥

व्योषेत्यादि।—अरिष्टो निम्बः, तस्य त्वक्, अम्भ क्वाथः॥ १५२॥

त्रिवृद्विशालात्रिफला-कटुकारग्वधैः कृतः।
सक्षारो भेदनः क्वाथः पेयः सर्वज्वरापहः ॥ १५३ ॥
स्वेदोद्गमे ज्वरे देयश्चूर्णो भृष्टकुलत्थजः।
घर्षेज्जिह्वां जडां सिन्धु-त्र्यूषणैः साम्लवेतसैः ॥
उद्धृत्य स्फुटितां जिह्वां द्राक्षया मधुपिष्टया।
लेपयेत् सघृतयास्यं सन्निपातात्मके ज्वरे ॥ १५४ ॥
काकजङ्घा जटा निद्रां जनयेच्छिरसि स्थिता ॥ १५५ ॥
सन्निपाते प्रकम्पन्तं प्रलपन्तं न लङ्घयेत्।
तृष्णादाहाभिभूतेऽपि न दद्याच्छीतलं जलम् ॥ १५६ ॥
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥
रक्तावसेचनैः पूर्वं सर्पिःपानैश्च तं जयेत्।
प्रदेहैः कफपित्तघ्नैर्वमनैः कवलग्रहैः ॥
गैरिकं पांशुजं शुण्ठी-वचाकटुककाञ्जिकैः।
कर्णशोथहरो लेपः सन्निपातज्वरे शुभम् ॥ १५७ ॥
कुलत्थकट्फले शुण्ठी कारवी च समांशिकैः।
सुखोष्णैर्लेपनं कार्यं कर्णमूले मुहुर्मुहुः ॥ १५८ ॥

---

त्रिवृदित्यादि।—विशाला गोरक्षकर्कटी, यवक्षार. भेदनः ॥ १५३ ॥

स्वेदोद्गम इत्यादि।—सन्निपातात्मके ज्वर इत्यर्थं स्पष्टम् ॥ १५४ ॥

काकजङ्घा इत्यादि।—जटा मूलम् ॥ १५५ ॥

सन्निपात इत्यादि।—स्पष्टम् ॥ १५६ ॥

सन्निपातज्वरस्यान्ते शोथे सन्निपातज्वरे वा जाते इत्यर्थः। रक्तावसेचनैरिति बहुवचनात् रक्तावसेचन जलौकाभिर्वा बोध्यम्। अतुकर्णे—"[illegible]" इत्युक्तत्वात्। सर्पिरत्र षट्पलिकतिक्तकादि। चकारात् वातकफघ्नादिकोऽपि बोध्यः। यदुक्तं तत्रैव—"लङ्घनं कफवातघ्नाः कार्याः सर्वत्र यत्नतः। तिक्तकाद्युत्थानं बलं ज्ञात्वा समाचरेत्" ॥ इति ॥ १५७ ॥

कुलत्थेति।—स्पष्टम्। इदमूर्ध्वमपि भाजोष्णेनाच लेपमुपदिशन्ति ॥ १५८ ॥

जीर्णज्वरचिकित्सामाह। निदिग्धिकादिः---

निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्।
जीर्णज्वरारोचककासशूलश्वासाग्निमान्द्यार्दितपीनसेषु ॥
हन्धदुर्गामयं प्रायः सायं तेनोपयुज्यते ॥ १५८ ॥
पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नरुहोद्भवः।
जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथवा ॥
कासाजीर्णारुचिश्वास-हृत्पाण्डुक्रिमिरोगनुत्।
जीर्णज्वरेऽग्निसादे च शस्यते गुडपिप्पली ॥ १६० ॥

विषमज्वर-चिकित्सामाह।

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी।
पटोलं शारिवा मुस्तं पाठा कटुकरोहिणी ॥
निम्बं पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः।

---

जीर्णज्वरचिकित्सामाह, निदिग्धिकेत्यादि।—निदिग्धिका कण्टकारी, नागरकं क्वथने, पित्तानुबन्धे पिप्पलीं त्यक्त्वा मधु प्रक्षिपन्ति वृद्धाः। पिप्पलीचूर्णञ्च मानञ्च शाणं प्रक्षेप्य प्रचारादिति कश्चित्। पुराणमतिसारेऽप्ययं योगो दृष्टफलः। अस्यैव योगस्य सोपपत्तिकं वैद्यव्यवहारसिद्धमुपयोगकालमाह, हन्धेत्यादि।—छिन्न बिन्दुमात्रे पात्रे समयोऽयम्। यथा—"पाचकार्मविनाशाय सन्धाप्रदीपनाय च। सर्वेषु निरामेषु पाचनकाले तं पिबेत् ॥" इति। तथा चन्दोऽप्याह—"सद्य रात्रिज्वरे पाचनञ्च प्रातरिष्यते" इति ॥ १५८ ॥

पिप्पलीत्यादि।—छिन्नरुहा गुडूची; पञ्चमूली च महती। योगद्वयेऽपि पिप्पलीचूर्णप्रक्षेपः। पित्तानुबन्धे मधु उपदिशन्ति वृद्धाः। इदञ्च योगद्वयं प्रायः सायमुपयुज्यते। कासेत्यादौ गुडपिप्पली, प्रत्येकं मानकवदेव व्यवहरन्ति वृद्धाः ॥ १६० ॥

विषमज्वरचिकित्सामाह, कलिङ्गका इत्यादि।—वाग्भटस्य। एते पञ्च योगाः,

कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ॥
सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् ॥ १६१ ॥
गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्दितः ।
दीर्घपत्रककर्णाख्य-नेत्रं खदिरसंयुतम् ॥
ताम्बूलैस्तद्दिने भुक्तं प्रातर्विषमनाशनम् ।
गुडूचीमुस्तधात्रीणां कषायं वा समाक्षिकम् ॥ १६२ ॥

मुस्तादिः ।—

मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः ।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥
महौषधामृतामुस्ता-चन्दनोशीरधान्यकैः ।
क्वाथस्तृतीयकं हन्ति शर्करामधुयोजितः ॥
वासाधात्रीस्थिरादारु-पथ्यानागरसाधितः ।
सितामधुयुतः क्वाथ-श्चतुर्थकनिवारणः ॥
मधुना सर्वज्वरनुत् शेफालीदलजो रसः ॥ १६३ ॥

---

पञ्चसु सन्तत-सततान्येद्युष्क-तृतीयक-चतुर्थकेषु यथासंख्यं ज्ञेयाः । अन्ये तु सर्वे पञ्च योगा, सर्वत्र इत्याहुः । तत्र यथासंख्यमेव युक्तम् । सततोद्देशेन पटोलादि योगस्य, तथा निम्बाद्येन्येद्युष्कोद्देशेन, गुडूच्यादेश्च चतुर्थकोद्देशेन चरकादौ दृष्टत्वात् । "सन्ततं सततान्येद्युस्तृतीयक-चतुर्थकान्" इति पादस्तु चरकादौ क्वचिदपि नास्ति । वृन्देऽपि नास्ति । शिवदाससम्मतोऽयम्, संग्रहे केनापि प्रमादात् लिखितः ॥ १६१ ॥

गुडप्रगाढामित्यादि ।—गुडप्रगाढ ।—त्रिफलामित्यत्र कथितामिति शेष इति कश्चित् । गुडोऽत्र प्रक्षेप्यः । दीर्घपत्रकेत्यादि ।—कर्णाख्यः काकमाची इति ख्यातः । तस्य विशेषणं दीर्घपत्रेति । नेत्रं मूलं, तदपि यच्चर्वितं ताम्बूलैः दिनान्ते हेयाः । गुडूचीत्यादि ।—गुडूच्यादि अयं योगो यद्यपि पूर्वं चतुर्थके पठितः, तथापि मधुयोगात् विषमज्वरमात्रशमनार्थमस्य योज्यम् । अन्यत्र यद्यपि योगोऽयं विषमज्वरे पठितः तथापि समानतन्त्रोक्तत्वात् विषमज्वरविशेषे चतुर्थके प्रयोग बोध्य इत्याह ॥ १६२ ॥

मुस्तादिमहौषधादी—स्पष्टौ । वासादौ ।—वासाद्यानि चन्द्रादि दारु प्रपर्णं .

भल्लाती गुडसंयुक्ता विषमज्वरनाशिनी ।
अग्निसादं जयेत् सम्यग्वातरोगांश्च नाशयेत् ॥ १६४ ॥
रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं विषमज्वरार्त्तः ।
विमुच्यते सोऽप्यचिराज्ज्वरेण वातामयैश्चापि सुघोररूपैः ॥१६५
प्रातः प्रातः ससर्पिर्वा रसोनमुपयोजयेत् ।
पिप्पलीवर्द्धमानं वा पिबेत् क्षीररसाशनः ।
षट्पलं वा पिबेत् सर्पिः पथ्यां वा मधुना लिहेत् ॥ १६६ ॥
पयस्तैलं घृतञ्चैव विदारीक्षुरसं मधु ।
सम्मूर्च्छ्य पाययेदेतद् विषमज्वरनाशनम् ॥ १६७ ॥
पिप्पलीशर्करा क्षौद्रं घृतं क्षीरं यथाबलम् ।
खजेन मथितं पेयं विषमज्वरनाशनम् ॥ १६८ ॥
पयसा वृषदंशस्य शकृद्वेगागमे पिबेत् ।
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम् ॥ १६९ ॥

---

व्यवहारस्तु वामतैव। स्थिरा शालपर्णी। पथ्या हरीतकी। मधनैत्यादौ।—सव ज्वरनुत् विषमाविषमज्वरनुत् ॥ १६३ ॥

भल्लातीत्यादि।—भल्लातक तलक्षीरकमिति पाठः, तिलक्षीरकमित्यन्ये ॥ १६४ ॥

रसोनकल्कमित्यादि।—अश्नाति पूर्वं भक्षयेत्, यदाह चरकः—"रसोनस्य सतैलस्य प्राग्भक्तमुपसेवनम्" इति ॥ १६५ ॥

प्रातरित्यादि।—पिप्पलीवर्द्धमानं क्षीरभुजो। षट्पलं सर्पिश्चैव वक्ष्यमाणम् ॥ १६६ ॥

पय इत्यादि।—दुग्ध प्रस्थं बोध्यम। विदारीक्षुरसमिति।—इक्षुरसस्थाने स्वरस इति न पाठः, उक्त हि हारीते—"विदारीक्षुरस सर्पिर्मधुतैल' प्रस्थ पय,। पिबे-चतुर्थकश्वासकासश्वासज्वरापहम् ॥" इति। अन्ये तु विदारीस्वरसो विषमज्वरमाहे, चतुर्थ इक्षुरसात् योगान्तरमाहुः ॥ १६७ ॥

पिप्पलीत्यादि।—दुग्धं प्रस्थ बोध्यम् ॥ १६८ ॥

पयसेत्यादि।—वृषदंशो बिडालः। वृषस्यापि शकृदित्यर्थः, ॥ १६९ ॥

नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम् ।
पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः ॥ १३० ॥
सुरां समण्डां पानार्थे भक्ष्यार्थे चरणायुधान् ।
तित्तिरींश्च मयूरांश्च प्रयुञ्ज्याद्विषमज्वरे ॥ १३१ ॥
अङ्कोटजसहस्रेण दलेन सुकृतां पिबेत् ।
पेयां घृतप्लुतां जन्तुश्चातुर्थकहरां परम् ॥ १३२ ॥
सैन्धवं पिप्पलीनाञ्च तण्डुलाः समनःशिलाः ।
नेत्राञ्जनं तैलपिष्टं विषमज्वरनाशनम् ॥
व्याघ्रीवसा हिङ्गुसमा नस्यं तद्वत् ससैन्धवा ॥ १३३ ॥
कृष्णाम्बरदृढाबद्ध-गुग्गुलूलूकपुच्छजः ।
धूपश्चातुर्थकं हन्ति तमः सूर्य इवोदितः ॥ १३४ ॥
शिरीषपुष्पस्वरसो रजनीद्वयसंयुतः ।
नस्यं सर्पिःसमायोगाच्चातुर्थकज्वरं जयेत् ॥
नस्यं चतुर्थकं हन्ति रसो वागस्त्यपत्रजः ॥ १३५ ॥

षडङ्गधूपः ।

पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ।

---

विषमज्वरे विरेकार्थमाह, नीलिनीत्यादि ।—नीलिनी नीलबुह्ना । आगमने आगमनदिवसे ॥ १३० ॥

सुरामित्यादि ।—चरकस्य स्पष्टम् ॥ १३१ ॥

अङ्कोटजमाङ्कोटी ॥ १३२ ॥

सैन्धवमित्यादि ।—चरकस्य । पद्यत्रयम्, कश्चनैतदपि पठति, तत्रिवराय नेत्रपदम् । व्याघ्रीत्यादौ स्त्रीलिङ्गनिर्देशात् लिङ्गमेव प्रयोजकं न तु जातिः ॥ १३३ ॥

कृष्णाम्बरेत्यादि ।—कृष्णवस्त्र बद्धत्व गुग्गुलूलूकपुच्छादिभि, धूपकः धूपकः ॥ १३४ ॥

नस्यमाह, शिरीषेत्यादि ।—रजनीद्वयचूर्णं सर्पिष प्रक्षेप्यम् । नस्यमित्यादौ चागस्त्यपत्रं बकपुष्पपत्रम् ॥ १३५ ॥

सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ १७६ ॥

अपराजिताधूपः।

पुरध्यामवचासर्ज-निम्बार्कागुरुदारुभिः।
सर्वज्वरहरो धूपः कार्य्योऽयमपराजितः ॥ १७७ ॥
वैड़ालं वा शकृद् योज्यं वेपमानस्य धूपने।
अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः।
बद्ध्वा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥ १७८ ॥
काकजङ्घा बला श्यामा ब्रह्मदण्डी कृताञ्जलिः।
पृश्निपर्णी त्वपामार्गस्तथा भृङ्गरजोऽष्टमः ॥
एषामन्यतमं मूलं पुष्येणोद्धृत्य यत्नतः।
रक्तसूत्रेण संवेष्ट्य बद्धमैकाहिकं जयेत् ॥ १७९ ॥
मूलं जयन्त्याः शिरसा धृतं सर्वज्वरापहम् ॥ १८० ॥

भूतानुबन्धिनोस्तृतीयक-चतुर्थकयोश्चिकित्सा।

कर्मसाधारणं जह्यात् तृतीयक-चतुर्थकौ।
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे ॥ १८१ ॥

---

पलङ्कषेत्यादि।—पलङ्कषा गुग्गुलु ॥ १७६ ॥

पुरेत्यादि।—पुरो गुग्गुलु, ध्याम गन्धतृणम् ॥ १७७ ॥

वैड़ालमित्यादि स्पष्टम्। अपामार्गस्य जटा मूलं, पुष्टे पादं कृत्वा बन्ध. कार्यं इत्याह.। बन्धनविधिरायुर्वेदसारे यथा—"अपामार्गस्य मूलञ्च सम्यक्प्रक्षालितं जल। षष्ठीप्रादस्यामहस्तेन सर्वज्वरविमोक्षणम् ॥ १७८ ॥

काकजङ्घेत्यादि।—काकजङ्घा स्वनामख्याता, श्यामा वृद्धदारक, ब्रह्मदण्डी ब्रह्मयष्टिका; कृताञ्जलि लाजालिका ॥ १७९ ॥

मूलमित्यादि।—जयन्त्या श्वेताया इत्याह., भूमयन्त्या इत्यन्ये ॥ १८० ॥

भूतानुबन्धिनोस्तृतीयक-चतुर्थकयोश्चिकित्सामाह, कर्मेत्यादि।—दैवव्यपाश्रय बलि-मङ्गलादि, युक्तिव्यपाश्रयञ्च कषायादि, एतदुभयमपि चिकित्सित साधारणशब्द-नावोच्यते। जह्यादिति अन्वर्भूतस्वर्थमिदं, तेन साधारणं चिकित्सित कर्त्तव्य

"गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः ।
तस्मै तिलोदकं दद्यान्मुच्यत्यैकाहिको ज्वरः" ॥
एतन्मन्त्रेण चाश्वत्थ-पत्रहस्तः प्रतर्पयेत् ।
सोमं सानुचरं देवं समातृगणमीश्वरम् ॥
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥ १८२ ॥
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम् ।
स्तुवन् नामसहस्रेण ज्वरान् सर्वान् व्यपोहति ॥ १८३ ॥

ज्वरे घृतप्रयोगः ।

ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः ।

---

चतुर्थकौ कार्मकपी अक्षात् स्नापयेत्, निराकुर्यादित्यर्थः । ननु ज्वरान्तरे सर्वत्र युक्तिव्यपाश्रयं कषायादिकमेवोपदिष्टं, न दैवव्यपाश्रयम्, अत्र पुनः किमर्थं दैवव्यपाश्रयमपि कर्त्तव्यत्वेन उपदिश्यते ? इत्याह,—आगन्तुरित्यादि ।—आगन्तुर्भूतादि । विषमज्वरशब्देन तृतीयक-चतुर्थकावेवाभिमतौ । तृतीयक-चतुर्थकशब्देनात्र तद्विपर्ययस्यापि ग्रहणम् । अन्ये तु यद्यप्यागन्तुरनुबन्धो हि इत्यादिवचनबलात् विषमज्वरमात्र एव दैवव्यपाश्रयं कर्म कर्त्तव्यमित्यायाति, तथापि तृतीयक-चतुर्थकाविति यदुक्तं तद्विशेषार्थम् । तेन तृतीयक-चतुर्थकयोः प्रायेण भूतानुबन्धबहुलत्वात् तयोरेव विशेषेण दैव-व्यपाश्रयं कर्म कर्त्तव्यमित्याहुः । अन्ये तु आधारशब्देन दोषमात्रसाधारणं युक्तिव्यपाश्रयमात्रं कर्मोच्यते । आहादित्यस्य त्वर्थतोऽर्थः, तेन तृतीयक-चतुर्थके युक्तिव्यपाश्रयमात्रं न कार्यं, किन्तूभयमपि कार्यम् । एवञ्च आगन्तुरनुबन्धो हीत्यादि द्वितीयार्द्धमपि सङ्गच्छत इत्याहुः ॥ १८१ ॥

गङ्गाया इत्यादि ।—एक-हस्तायाः पुष्करिण्याः चकाककादिने पानीयं पूरनव्याः नेतव्यम् ; उदिते च रवौ पान्तिदिने तर्पणं कार्यम् । अत कुशाः यवाः कुसुमानि च उत्थितसमाधभक्तादिना बलिर्देयमुपदिशन्ति वृद्धाः । अस्य मन्त्रस्य केचिदाद्य-श्लोकं पठन्ति यथा ;—"यत्र यत्र-कलिङ्गेषु कौशाङ्गमगधेषु च । वाराणस्याश्च यद्-वृत्तं तत्र गच्छसि हे ज्वर ॥" इति । सोममिन्दुमया सहितम् ; अनुचरैर्नन्द्यादिभिश्च सहितम् ॥ १८२ ॥

विष्णुमित्यादि ।—नामसहस्रेण महाभारतोक्तेन ॥ १८३ ॥

रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम् ॥
निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम् ।
न सर्पिः पाययेत् प्राज्ञः शमनैस्तमुपाचरेत् ॥
यावल्लघुत्वादशनं दद्यान्मांसरसेन तु ॥ १८४ ॥
मांसार्थमेणलावादीन् युक्त्या दद्याद्विचक्षणः ।
कुक्कुटांश्च मयूरांश्च तित्तिरिं क्रौञ्चमेव च ॥
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ।
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत् ॥
भिषङ्मात्राविकल्पज्ञो दद्यात् तानपि कालवित् ॥ १८५ ॥

---

इदानीं घृतप्रयोगात् विषयः घृतस्य काल विषयश्चाह,—ज्वरा कषायैरित्यादि ।—अत्र कषायैरित्यसमासनिर्देशेन व्यस्तैरपि कषायादिप्रयोगैः रूक्षस्य सर्पिः पानं कर्त्तव्यमिति दर्शयति ।—वमनैरित्यनेन अवस्थाविशेषवमनप्रयोगात् सर्पिः पानपूर्वभाविनो दर्शयति,—लङ्घनैरित्यनेन च लङ्घनं स्वेदनं काल इत्यादिना अनुक्तमप्यानयति । स्वेदाद् योऽपि गृह्यन्ते । रूक्षस्येति वचनेन कषायादिप्रयोगे सत्यपि यद्यपि आमानुबन्धत्वात् कफोत्तरतया वा यत्र रूक्षत्वं न भवति, तत्र सर्पिर्न दातव्यमिति दर्शयति । भिषग् जितं चिकित्सितम् । दशाहादूर्द्ध्वं हि घृतपानावस्था चरकेणोक्ता, इदानीं तदप वादमाह, निर्दशाहमपीत्यादि ।—निर्गतो दशाहान्निर्दशाहः । अलङ्घितमिति अलङ्घनात् लङ्घितफलम्, इयमवस्था प्रतनसामदोषारब्धत्वाद् ज्वरस्य, तथा अनभ्युपचाराच्च भवतीति ज्ञेयम् । यावल्लघुत्वादिति च्छेदः । लघुत्वे तु जाते कफोत्तरता अलङ्घितता चापयाति, तेन तदा सर्पिःपानमनुज्ञातं कर्त्तव्यमित्यर्थः । यावदिति ।—यावल्लघुत्वात् लघुत्वपर्यन्तं शमनैरुपाचरेत्, लघुत्वे सति सर्पिःपानम्, अथवा यावत् तावत् नित्ययोगित्वात् लघुत्वात् यावत्पर्यन्तं शमनैरुपाचरेत् तावत् मांसरसेन । शमनन्तु निर्दशाहज्वरे कफोत्तरेऽप्यलङ्घितेऽपि मांसरसेन देयमित्याह,—अशनं दद्यान्मांसरसेनेति ।—ननु किमर्थमेतादृशमशनं कथञ्चित्कफमपि कफप्रधानावस्थाया दीयते ? सत्यं, मांसरसस्य बलजननत्वात्, बलस्य च दोषनिग्रहसमर्थकत्वात्, अत एवोक्तं तत्रैव—"बलं ह्यलं निग्रहाय दोषाणां बलकृच्च तत्" इति ॥ १८४ ॥

एणलावादीनित्यादिशब्दात् कपिञ्जलादीनां ग्रहणम् । मात्राविकल्पज्ञ इति ।—

पिप्पल्याद्यं घृतम्।

पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी।
कलिङ्गकास्तामलकी शारिवातिविषे स्थिरा॥
द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका।
सिद्धमेभिर्घृतं सद्यो ज्वरं जीर्णमपोहति॥
क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम्।
अंसाभितापमग्निञ्च विषमं सन्नियच्छति॥
पिप्पल्याद्यमिदं चापि तन्त्रे चोरेण पच्यते॥ १८६॥

---

विकल्पो विशिष्टकल्पना, संस्कार इत्यर्थः। मात्राशो विकल्पप्रवेश्यर्थः। तेन तावती मात्रा कर्त्तव्या, तादृशः संस्कारः कार्यः, यथा लघुत्वगुरुत्वे भवत इत्यर्थः॥ १८५॥

सर्पिःपानावस्थां प्रतिपाद्य सर्पींष्याह, पिप्पल्य इत्यादि।—कलिङ्गका इन्द्रयवाः, तामलकी भूम्यामलकी; शारिवा अनन्तमूलं, बिल्वं बिल्वशलाटुः द्राक्षादिकमाद्रवर्ज्यात्। अत्र यद्यपि घृतस्य मानं नोक्तं, तथापि द्रवैकार्थ्यवचनात् प्रस्थमानं गम्यते, अत एवोक्तम्—"अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते। अनुक्ते क्वाथमाने तु पात्रमेकं प्रशस्यते॥" इति। अन्ये पलाश्यघृतस्य मानानिर्देशे अप्यनियतमानमेवेच्छन्तः पलाश्यमिति। यत्र तु प्रस्थादिमाननिर्देशं करोति, तत्र तावन्मात्रेणैव स्नेहेन प्रायो रोगोपशमो भवतीति ज्ञेयम्। तथा हि वातव्याध्यादौ भूरिमेव मात्रे भूयसीमेव स्नेहमात्रां पचति। तथा प्रपौण्डरीकाद्यमध्ये योगितया स्नेहस्य कुडवमानमेवोक्तम्। कुष्ठोक्ततिक्तषट्पलादौ तु पञ्चप्रसृतसंविधानेन तत्रैव पलस्य प्रसृतकार्यकर्तृत्वं भवतीति भेषजमानज्ञो महर्षिर्बोधयति। तत्र यदि कुष्ठस्य जीर्णरोगतया भूयसा तिक्तषट्पलेन प्रयोजनं, तदा पुनःपुनः षट्पलमानं घृतं पचन्ति "यथा कुर्वन्ति स उपायः" इति वचनात्। एवं पानीयकल्याणकाल्पहरीतकादावपि प्रतिनियतमानकथनप्रयोजनं वाच्यम्। तथात्र याद्दच्छिकमाचार्यस्य कल्पिकाज्ञातमानतल्पावधान क्वचिदिति। अत्र क्वचित् पुस्तके हलीमकमिति पाठः, 'क्वचिद्रोचकमिति पाठद्वयमपि न प्रक्षेपणीयम्। यतः सुश्रुते,—"जीर्णज्वरशिरःशूलगुल्मोदरहलीमकान्" इति दृश्यते। वाग्भटे च—"पिप्पलीन्द्रयवधान्यनिदिग्धिकाशारिवामलकतामलकीभिः। बिल्वमुस्तहिमपाठानिदिग्धैः द्राक्षयातिविषया

यत्राधिकरणेनोक्तिर्गणे स्यात् स्नेहसंविधौ।
तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिना॥
एतद्वाक्यबलेनैव कल्कसाध्यपरं घृतम्॥ १८७॥
जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम्।
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम्॥
अनुक्ते द्रवकार्य्ये तु सर्वत्र सलिलं मतम्॥ १८८॥
घृततैलगुड़ादींश्च नैकाहादवतारयेत्।
व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः॥
स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत्।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत्॥
शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत्॥ १८९॥

---

स्थिरया च॥ घृतमाशु निहन्ति साधितं ज्वरमग्निं विषमं हलीमकम्। अरुचिं भयतापमंसशोषमसृक् पार्श्वरुजं क्षयम्॥" इति दृश्यते, तस्मात् पाठद्वयमेव युक्तम्॥ १८६॥

अत्र केचित् "कल्कक्वाथावनिर्देशे गणात् तस्मात् समाचरेत्" इति सुश्रुतवचनात् पिप्पल्यादीनां कल्कत्वं कषायत्वञ्च वदन्ति। अन्ये तु कल्कत्वमेव ब्रुवते। अत एतत् सन्देहनिरासार्थं परिभाषामाह, यत्रेत्यादि।—अधिकरणेनेत्यधिकारितया; तेन यत्रैवाचार्य्येण गणत्वमभिहितं, तत्रैव विदारिगन्धादिगणादौ कल्ककषायकल्पना। यत्र त्वभिहितगणत्वं नास्ति, तत्र कल्ककल्पनैव। एतेन सुश्रुतोक्ता "कल्कक्वाथावनिर्देशे" इत्यादिका परिभाषा अभिहितगणविषयैव, न तु केवलसमूहमात्रविषया इति। ननु मा भूदुभयकल्पना अनियमेन कदाचित् कल्ककल्पना, कदाचित् क्वाथकल्पना कुतो न स्यात्?—इति चेन्नैवम्। कषायकल्पनाया द्रव्यं न साक्षात् प्रधानभूतं स्नेहसाधने व्यवह्रियते। कल्कस्तु साक्षादेव स्नेहमध्ये पच्यत इति कल्कस्य प्राधान्यात् तथा 'प्रकृतिव्यवहाराये'त्याह—एतद्वाक्यबलेनैवेत्यादि॥ १८७॥

जलस्नेहेत्यादौ जलशब्दो द्रवमात्रे उपचरितः॥ १८८। १८९॥

क्षीरषट्पलकं घृतम् ।

पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम् ।
सर्पिःप्रस्थं शृतं प्लीह-विषमज्वरगुल्मनुत् ॥
अत्र द्रवान्तरानुक्तेः क्षीरमेव चतुर्गुणम् ।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत् ॥ १८० ॥

दशमूलषट्पलकं घृतम् ।

दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः ।
सक्षारैर्हन्ति तत्सिद्धं ज्वरकासाग्निमन्दताः ॥
वातपित्तकफव्याधीन् प्लीहानञ्चापि पाण्डुताम् ॥ १८१ ॥
क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् ।

---

पञ्चकोलैरित्यादि ।—अत्र च सममित्यस्य समशब्दस्य तुल्यार्थताङ्गीकारेण स्नेहसमं क्षीरम्, त्रिगुणञ्च जलमत्राधिकारोऽस्य षट्पलघृतवदादात् । तद्यथा,—"सक्षारैः पञ्चकोलैश्च पलिकैस्त्रिगुणोदके । समक्षीरं घृतप्रस्थं ज्वरघ्नं प्लीहगुल्मनुत् ॥" इति । "क्षीरदध्यारनालेषु पाको यत्रेरितः क्वचित् । चतुर्गुणं जलं तत्र बोध्यं धान्यार्थमाक्षयेत् ॥" परिभाषेयमत्रापीति कृत्वा केचित् नाद्रियन्ते । अन्ये तु क्षीरादिमात्रविषयेयमित्याहुः । चक्रस्तु सममित्यस्य सहार्थतामाश्रित्याह,—अत्रेत्यादि । एतच्चान्ये दूषयन्ति, यतः सुश्रुतोक्तोदरचिकित्सिते—"षट्पलकं पिबेत् घृतप्रस्थं तुल्यक्षीरम्" इति पठ्यते । चरकेऽप्युक्तं गुल्मे—"घृतप्रस्थं विपाचयेत क्षीरप्रस्थेन" इति । व्यवहारस्तु क्वचित् त्रिगुणोदकेन, क्वचिच्चतुर्गुणोदकेनेति ॥ १८० ॥

दशमूलीरस इत्यादि ।—रसः क्वाथः, स्नेहकल्पने क्वाथश्चतुर्गुणः, क्षीरन्तु स्नेहसमम् । न हि क्वाथ्याच्चतुर्गुणं वारीत्यादि परिभाषार्थमज्ञं बुद्ध्वा क्षीरयोगे सर्वत्रैव पाकं स्यादिष्टे । चक्रस्त्वाह,—अत्र क्वाथः क्षीरञ्चास्ति तत्र क्षीरेण सह स्नेहाच्चतुर्गुणो द्रव क्वाथः, यतः स्नेहपाके चतुर्गुण एव द्रव उत्सर्गसिद्धः । "स्नेहात् तोयं चतुर्गुणम्" इत्यत्र तोयस्य द्रवोपलक्षणत्वात् । अतः क्वाथोऽत्र त्रिगुणं क्षीरञ्च स्नेहसममिति । पञ्चकोलयवक्षाराः प्रत्येकं पलिकाः पूर्वोक्तषट्पलकसाहचर्यात् षट्पलतानुपपन्नेयेति ॥ १८१ ॥

दशमूलेऽप्यार्थं परिभाषामाह, क्वाथ्यादित्यादि ।—स्नेहसमं क्षीरमिति यत्र

पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ।
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम्॥ १८२॥

वासाद्यं घृतम्।

वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम्।

---

पञ्चम स्नेहपादिकत्वं घटते। चतुष्पञ्चद्रवत्वे कल्कमानस्य स्नेहापेक्षया षड्भागाष्टमैव भवेदिति। एतच्च नातिसाधु, यतः सुश्रुत एव—"स्नेहकुडवे चाष्टौ क्वाथ्यद्रव्यप्रस्थो विधेयः" इत्युक्तम्। तत्र कुडवेनैव यदि स्नेहपलचतुष्टयं गृह्यते तदा चतुःपलस्नेहे षोडशपलक्वाथ्यगदत्वं स्यात्। न च तथा व्यवहरन्ति क्वाथ्यषोडशपलं हि चतुष्पल एव स्नेहे गृह्यते, तस्मादसाधकमेतत्, कुडवादृत्तं गुणात्स्वेति, द्वैगुण्यं कुडवे युक्तम्। यथा चन्द्रहासीतकायां मधुनः कुडवं षडरक्तपोषं तन्त्रान्तरे "मधुनश्च पलाष्टकम्" इति पठ्यते, तथा तन्त्रान्तरे—"त्रायमाणाचतुष्पलं पञ्चदशकेऽम्भसि श्रितम्। कुडवे गुडपान् मर्दितःक्षीरधात्रीरसान् पचेत्॥" इत्युक्तम्। तत्र यदि चतुःपलं कुडवः स्यात् तदा चरकोक्तत्रायमाणाघृतेन सह विरोधः स्यात्। तथाहि—"जले दशगुणे साध्यं त्रायमाणाचतुष्पलम्" इत्यादि यावत्—"रसस्यामलकानां च क्षीरस्य च घृतस्य च। पलानि पृथगष्टौ दत्त्वा सम्यग्विपाचयेत्॥" तथान्यत्राप्युक्तम्।—"माद्रंद्रव्यद्रवद्रव्यपरिमाणैरेव च। शुष्कद्रव्यचतुष्केण कुडवः समुदाहृतः॥" इति। तस्मात् कुडवे द्वैगुण्यं साधु, यत्तु षट्पलेऽपि स्नेहे कल्कस्य पलमानत्वं, तत् स्वरसमात्रस्नेहाभिप्रायेण पुष्पकल्काभिप्रायेण वा ज्ञेयम्। यदुक्तं,—"स्नेहे सिध्यति शुद्धाम्बुनिःक्वाथस्वरसैः क्रमात्। कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम्॥" तथा—"वृषस्य कोविदारस्य कर्बुदारस्य शाल्मलेः। कल्काश्रयत्वात् पुष्पकल्कं प्रयुञ्जीत चतुःपलम्॥" इति। अत्र स्नेहप्रस्थापेक्षया चतुःपलं कल्कं स्नेहादष्टमभाग एव भवतीत्यादि विशेषवचनेन "कल्कश्च स्नेहपादिकः" इति सामान्यवचनस्य बाधा क्वचिद्विषयविशेषे भवतीह न विरोधमावहतीति। चक्रमतिप्रपञ्चेन सर्वथा वृद्धव्यवहारानुमतमेव कर्मानुसरणीयमस्माभिरिति संक्षेपः। विस्तरः पुनरस्मदीयचरकतत्त्वप्रदीपिकायामेव गवेषणीय इति। पञ्चप्रभृतीत्यादिपरिभाषार्थं पुनर्वासाद्यघृतव्याख्यावसर एव व्यक्तीकरिष्यामः॥ १८२॥

वासामित्यादि।—यवासकं दुरालभा। अत्र यवासाक्षादिक्वाथयोरपि घृताद्द्विगुण इत्याह। युक्तं चैतत्, यतः स्नेहपाके चतुर्गुणमेव द्रवमुक्तमसिद्धम्;—"स्नेहात्

पक्वा तेन कषायेण पयसा द्विगुणेन च॥
पिप्पलीमूलमृद्वीका-चन्दनोत्पलनागरैः।
कल्कीकृतैश्च विपचेद् घृतं जीर्णज्वरापहम्॥ १८३॥

---

तोयं चतुर्गुणम्" इति वचनात्। तोयशब्दोऽपि तत्र द्रवमात्रोपलक्षक इति। अत्र द्वाभ्यामपि चातुर्गुण्यमित्यादि परिभाषयैव क्षीरकषाययोः प्रत्येकं द्वैगुण्ये सिद्धे चकारोऽयं क्वाथचातुर्गुण्यार्थं इति केचित्। अन्ये तु परिभाषाबलात् यद्यपि क्षीर कषाययं द्विगुण एव लभ्यते, तथापि स्पष्टार्थं क्षीरद्वैगुण्याभिधानमित्याहुः, तन्न, क्षीरस्य हि मानानुक्तौ—"क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्। स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः॥" इति वचनात् क्षीरस्य द्रवान्तरसान्निध्ये सति, स्नेहसमत्वमेव स्यात्। ततः कषायभागद्वयं क्षीरभागश्चैक इति कृत्वा द्वाभ्यामपि चातुर्गुण्यमिति परिभाषार्थोऽप्यनुगृहीतो भवति। तस्मात् कर्तव्यं क्षीरद्वैगुण्याभिधानम्। अन्ये तु द्वाभ्यामपि चातुर्गुण्यमिति परिभाषायां प्रत्येकमेव द्रवैः चातुर्गुण्यमिच्छन्ति। तन्मतेऽत्र कषायस्य चातुर्गुण्यं क्षीरस्य द्वैगुण्यमेव—"पयसा द्विगुणेन च" इति वचनात् तत्र, एकेनापि चातुर्गुण्यं, द्वाभ्यामपि चातुर्गुण्यं, त्रिभिरपि चातुर्गुण्यं, चतुर्भिः सममिति वचनेन चतुर्भिः स्नेहसमताभिधानेन स्नेहाच्चातुर्गुण्यमेव द्रवस्योक्तम्। अतो द्वाभ्यां त्रिभिरपि तथा चातुर्गुण्यं कार्यम्। यथा स्नेहचातुर्गुण्यं स्यात्, तथा च मिलितैव चातुर्गुण्यं सिध्यति, न प्रत्येकमित्यर्थः। किञ्च यदि प्रत्येकं चातुर्गुण्यं विवक्षितं स्यात् तदा द्वयोस्त्रयाणां चातुर्गुण्यमिति कुर्यात्। तृतीयानिर्देशेन हि साहित्यं सूचयता मिलितयोरेव चातुर्गुण्यं प्रतीयत इति। अत एवैतत्परिभाषाव्याख्याने—"पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्वाक् तस्माच्चतुर्गुणम्॥" इति मिलितैव चातुर्गुण्यम्। अन्यथा एतद्वचनेनो विरोधी दुष्परिहरः स्यात्। अन्ये तु—"अर्वाक् च स्याच्चतुर्गुणम्" इति प्रत्येकमेव चातुर्गुण्यम्। अन्यथा यत्र यत्र स्नेहपाके चत्वारि द्रवाणि सन्ति तत् यदि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्यं स्यात्, तदा स्नेहसमान्याहुरित्येतावतापि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्ये सिद्धे, अर्वाक् च स्यात् चतुर्गुणमिति वचनं तावदेकद्वित्रिद्रवविषये चरितार्थमेव। यत्र वा द्रवचतुष्टयविषये चरितार्थमित्युच्यते तावतापि न वस्तुचति। यथादिकेनापि चातुर्गुण्यमित्यादि चतुर्भिः सममित्यस्य परि-

## गुडूच्यादिघृतानि ।

गुडूच्याः क्वाथकल्काभ्यां त्रिफलाया वृषस्य च ।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥ १८४ ॥
ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम् ।

भावना द्रववद्द्रव्यविषये मार्कण्डिकेना चातुर्गुण्यं सिद्धमेव। तदिदानीं प्रत्येकं स्नेहमध्येन साध्यताम्; "चतांत्र स्यात् चतुर्गुणम्" इति वचनेन साध्यतामिति। अन्ये पुनरनर्थेनानुवर्त्य चतुःप्रस्थानि पठन्ति। जीवदत्तोऽपि गुल्माधिकारे परिभाषायामस्यां चतुःप्रस्थानीति पाठमेव स्वीकृतवान् ॥ १८३ ॥

गुडूच्या इत्यादि।—वाग्भटस्य। गुडूच्यादीनां पञ्चानां पृथक् पृथक् क्वाथ-कल्काभ्यां सिद्धानि पञ्च घृतानि बोध्यानि ॥ १८४ ॥

अथ पेयादिकं यदिदीक्तं तदध्यायपठितप्रकारविशेषापेक्षमिति प्रतिपादयन् चीरादिक्रममभिधातुं भूमिकां रचयति,—ज्वरे पेया इत्यादि।—अत्र पेया-कषाय-सर्पिः-क्षीर-विरेचनानामुक्तोक्रिया ज्वराहादारभ्य षडहे यथाक्रमं देयत्वमुच्यते। तेन—"वमितं लङ्घितं काले यवागूभिरुपाचरेत्" इत्यादि विशेषवचनात् लङ्घितादि षडहातिक्रमेऽपि यत् पेयादिदानमुक्तं तत्र विरोधमावहति, सामान्यविधिः विशेष-विधिना बाधनस्य सर्वेषामनुमतत्वात्। ननु पेयादिप्रयोगे—"यावज्ज्वर-मृदूभावात् षडहं वा विचक्षणः" इत्यादिना षडहं यावत् यवाग्वादेरिति चरकेणोक्तं, तथा अत्रापि षडहे पेयादानमुक्तं; तदयं षडहः, किं ज्वरोत्पाददिनं गृहीत्वा भवतु लङ्घन-नियतदिनं हित्वा वा? नाद्यः, लङ्घनरूप-प्रकृतवैयर्थ्यात्। लङ्घनं स्यात् एवोपक्रमः। यदुक्तं—"ज्वरे लङ्घनमेवादौ" इति। नापि द्वितीयः,—"ज्वरिते षडहेऽतीते लघ्वन्नप्रतिभोजितं" ज्वरदिनादारभ्याष्टमे पाचनं शमनीयं वा प्राग्यौगिकत्वात् ज्वरदिनस्य भोजोक्त्यैवाष्टाहः, यदुक्तं,— "अष्टाहो निरामज्वरलक्षणम्" इति। अत्राहुः ज्वरोत्पाददिनं गृहीत्वैवाष्टाह प्रयोक्तव्यः।—"यावज्ज्वरमृदूभावात् षडहं वा विचक्षणः" इत्यनेनापि ज्वरोत्पाद-दिनमारभ्यैव षडहपर्यन्तं पेयाप्रयोग उच्यते। पेया हि ज्वरे प्राधान्येन दोष-पाचनार्थं क्रियते; यदुक्तं—"लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः। पाच-नान्यविपक्कानां दोषाणां तरुणे ज्वरे ॥" इति। न तु यस्मिन् षडहे पेया, तस्मिन्नेव षडहे लङ्घनादिकमपीति। लङ्घनादिभिर्निरवकाशतया पेया षडहस्य निर्विषयत्व-

पड़हे पड़हे देयं कालं वीच्यामयस्य च ॥ १८५ ॥
जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्।

मिति वाच्यम्, तस्य वातज्वरविषयत्वात्। वातज्वरो ह्यलङ्घनीयः। यदुक्तं—"नतु ज्वरान् भयानिलभयक्रोधकामशोकश्रमोद्भवात्" इति तेनालङ्घनीये वातज्वरे पेया समयमेव षडहं व्याप्नोति। एकद्वित्रिदिन लङ्घिते पेया न दोषपाचकार्थं क्रियते। क्रियमाणेऽपि ज्वरे पक्षचतुर्विंशदिनं यावत् पेयादिक्रमेवेति मातो निर्विषयत्वम्? पेया षडहस्य यत्र तु दोषाणामतिसामतया सन्निपातज्वरे वा लङ्घनमेव षड्रात्रातिक्रमेणापि क्रियते। तत्र प्रादेशिके विधौ पेयाया. षड्रात्रनियम औत्सर्गिक. प्रवर्तते। ननु पेया दोषपाचनार्थं क्रियते, तर्हि चातिलङ्घिते पेया कथं क्रियते? लङ्घनेनैव दोषपाकसिद्धत्वात्। नैवम्, चातिलङ्घिते पेया न दोषपाचनार्थं क्रियते किं तर्हि लङ्घनजन्यदौर्बल्यापनयनार्थम्। तत्कार्यसम्मुखत्वे जाते पुनरौषधपानमेव भवति। ज्वरे पेयाः कषायाश्चेत्यादावपि समानकार्यत्वात् लङ्घनादीनामुपलक्षणभूता पेया। अत पेया यत्र प्रतिषिद्धा मद्योत्थे ज्वरादौ तर्पणमेवापि षडहो बोध्यः। तत्र प्रथमषडहे वक्ष्यमाणेन लङ्घनादि पाचनं कार्यमिति पेया षडहे देयेति वचनेनोच्यते, कषायषडहोऽपि ज्वरोत्पादात् सप्तमदिन परित्यक्त्वाष्टमाहस्मारभ्यैव ज्ञेया। सप्तमे ज्वरस्य तरुणत्वेन कषायपाननिषेधात्। यत्, तु हारीते लङ्घनोष्णोदकसुप्तादिषडह-यवागूपानीयपान पेयाविधानानन्तरमुक्तम्,—"एता क्रिया प्रयुञ्जीत षड्रात्र सप्तमेऽहनि। पिबेत् कषायसंयोगान् ज्वरघ्नान् साधुसाधितान् ॥" इति, तथा खरनादेनापि—"लङ्घितालङ्घित सम्यक् वमित वा ज्वरार्दितम्। दत्तात्ताद्यादतश्चापि हादी ज्वरमुपाचरेत ॥" इति यवागूभिर्विया दोषमित्यादि तर्पणादिक्रमकमभिधायोक्तम्,—"इति षड्रात्रिकः प्रोक्तो नवज्वरहितो विधि। तत परं पाचनीयं शमन वा ज्वरे हितम् ॥" इति, तदपि प्रागुक्तरीत्या षष्ठाह एव कषायपानविधायकमिति प्रागेव प्रतिपादितम्। वस्तुतस्तु सप्तमाष्टमाहकषायपानविधायकानां वचनानामदूरान्तरत्वात् एव परस्परविरोध इत्युक्तम्। एतन्मतेऽप्यनुद्धतसामताया सप्तमदिन एव कषायपानम्। उद्धतसामतायान्तु अष्टमेऽहनि इति व्यवस्था। तेनैतस्मिन् व्याख्याने हारीतखरनादवचनं यथाश्रुतमेव सङ्गच्छते। तथा ज्वरे पेया. कषायाश्चेत्यादिनापि पेया षडहमध्यमेव सप्तमे दिने यत् कषायपानमुक्तं तदप्यनुद्धतसामताभिप्रायेणेति, न विरोधमावहति। कालं वीच्यामयस्य चेति ज्वरस्य च्यवस्थामयस्यावस्थारूपं कालं वीच्य षडहे यथाक्रमं पेयादि देयमित्यर्थः ॥ १८५ ॥

सदैव तरुणे पीतं विषवद्धन्ति मानवम् ॥ १९६ ॥
कासाच्छ्वासात् शिरःशूलात् पार्श्वशूलात् सपीनसात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ १९७ ॥
द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम् ।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥ १९८ ॥
त्रिकण्टकबलाव्याघ्री-गुडनागरसाधितम् ।
वर्चोमूत्रविबन्धघ्नं शोथज्वरहरं पयः ॥ १९९ ॥
वृचीरबिल्ववर्षाभू-पयसोदकमेव च ।
पचेत् क्षीरावशिष्टन्तु तद्धि सर्वज्वरापहम् ॥ २०० ॥
शीतं वोष्णं ज्वरे क्षीरं यथास्वैरौषधैर्युतम् ॥ २०१ ॥
एरण्डमूलसिद्धं वा ज्वरे सपरिकर्त्तिके ॥ २०२ ॥
ज्वरिभ्यो बहुदोषेभ्य ऊर्द्ध्वञ्चाधश्च बुद्धिमान् ।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥ २०३ ॥

---

क्षीरपानमप्याह, जीर्णज्वरे इत्यादि ।—तरुणे क्षीरं इति, कफभयात्, वात-पित्तोत्तरतायां क्षीरगणतायामपि द्रष्टव्यं । यदुक्तं—"दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम् । बद्धप्रच्युतदोषं वा निरामं पयसा जयेत् ॥" इति ॥ १९६ ॥

कासादित्यादि ।—पञ्चमूली स्वल्पा वातपित्तहरत्वात् ॥ १९७ ॥

क्षीरसाधनपरिभाषामाह—द्रव्यादित्यादि । त्रिकण्टकेत्यादौ गुड. प्रक्षेप्य, गुडपाकस्य निष्प्रयोजनत्वादित्याहुः ॥ १९८ ॥ १९९ ॥

वृचीरेत्यादि ।—वृचीरः श्वेतपुनर्नवा, वर्षाभूः रक्तपुनर्नवेति । पयोदकक्षीरविधाना पूर्ववदेव मानम् ॥ २०० ॥

शीतं वेत्यादि ।—विकल्पः स्वस्वादिविशेषतः, किंवा वाते उष्णं, पित्ते शीत-मिति ॥ २०१ ॥

एरण्डेत्यादि ।—अत्र तिक्तकमसिद्धं दुग्धमपि बोध्यं, चक्रोक्तत्वात् । गुदे कर्त्तनवत् पीडा परिकर्त्तिका ॥ २०२ ॥

संशोधनमप्याह, ज्वरिभ्य इत्यादि ।—बहुदोषेभ्य इति बहुदोषेषु संशोधन-

मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा।
युक्तमुष्णाम्बुना पीतं वमनं ज्वरशान्तये ॥ २०४ ॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा।
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥ २०५ ॥
ज्वरक्षीणस्य [redacted] हितं वमनं न विरेचनम्।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥
प्रयोजयेज्ज्वरहरान् निरूहान् सानुवासनान्।
पक्वाशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥ २०६ ॥
गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च।
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ॥ २०७ ॥
अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सानुवासनान्।
विभज्य शीतोष्णकृतान् दद्याज्जीर्णज्वरे भिषक् ॥
तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥ २०८ ॥

---

निषेधार्थमुक्तम्। काल इति यथोक्तवमन-विरेचनयोग्यज्वरावस्थायाम्। कल्प इति कल्पस्थाने वक्ष्ये यदुपदेक्ष्यते तद्वयम् ॥ २०३ ॥

वमनयोगत्रयमाह, मदनमित्यादि।—मदनं पिप्पलीयुक्तं कार्य्यं। कलिङ्गम् इन्द्रयवः, तद्युक्तं पित्तकफे, यष्टिमधुयुक्तन्तु दाहमात्र इत्याहुः ॥ २०४ ॥

चतुरो विरेचनयोगानाह, आरग्वधमित्यादि।—अत्र चरके वाग्भटे च त्रिवृता स्थाने त्रिफला पाठो दृश्यते, टीकाकारैश्च त्रिफलैव व्याख्यायते ॥ २०५ ॥

ज्वरक्षीणस्येत्यादि।—स्पष्टम्। सिद्धिषु सिद्धिस्थानोक्ताध्यायेषु ॥ २०६ ॥

नस्यावरणमाह, गौरव इत्यादि।—विबद्धेष्विति स्वविषयग्रहणासमर्थेषु ॥ २०७ ॥

जीर्णज्वरेऽभ्यङ्गादीनाह, अभ्यङ्गानित्यादि।—विभज्येति शीतोष्णसमुत्थज्वर-विभागेनेत्यर्थः, तेन उष्णोत्थे जीर्णज्वरे शीतद्रव्यकृताः प्रदेहादय, शीतोत्थे तु उष्णद्रव्यकृता देया इत्यर्थः। बहिर्मार्गेत्यादि.। उक्तं हि—"शाखा रक्तादयो धातवस्त्वक् च स बाह्यो रोगमार्गः" इति ॥ २०८ ॥

षट्कट्वरतैलम्—

सुवर्चिकानागरकुष्ठमूर्वा-लाक्षानिशालोहितयष्टिकाभिः।
तैलं ज्वरे षड्गुणकट्वरसिद्ध-मभ्यञ्जनाच्छीतविदाहनुत् स्यात्॥
दध्नः ससारकस्यात्र तक्रं कट्वरमिष्यते।
घृतवत् तैलपाकोऽपि तैले फेनोऽधिकः परः॥ २०९॥

अङ्गारकं तैलम्—

मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी।
बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी॥
आरनालाढकेनैव तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम्॥ २१०॥

लाक्षादितैलम्—

लाक्षाहरिद्रामञ्जिष्ठा-कल्कैस्तैलं विपाचयेत्।
षड्गुणेनारनालेन दाहशीतज्वरापहम्॥ २११॥
यवचूर्णार्द्धकुडवं मञ्जिष्ठार्द्धपलेन तु।
तैलप्रस्थः शतगुणे काञ्जिके साधितो जयेत्॥
ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षनुत्॥ २१२॥
सर्जकाञ्जिकसंसिद्धं तैलं शीताम्बुमर्दितम्।

---

सुवर्चिकेत्यादि।—सुवर्चिका सर्जिकाक्षारः, लोहितयष्टिका मञ्जिष्ठा, सुश्रुत-वृद्धवाग्भटादिभिस्तथाव्याख्यानात्। अन्ये तु लोहितं चन्दनम्, यष्टिका मञ्जिष्ठा सिद्धहस्तवादादित्याहुः। व्यवहारस्तु पूर्वव्याख्ययैव। शीतविदाहहन्तृत्वञ्च योगस्य अचिन्त्यशक्तित्वात्। तैलपाके विशेषं आरयति घृतवदित्यादि॥ २०९॥

मूर्वेत्यादि।—इन्द्रवारुणी गोरक्षकर्कटी; अङ्गारको मङ्गलः, तत्तुल्यत्वादङ्गारक-संज्ञा॥ २१०॥

लाक्षादितैलं स्पष्टम्।—अत्रापि दाहशीतहरत्वं प्रभावात्॥ २११॥

यवेत्यादि।—मञ्जिष्ठा अर्द्धपलेनेत्यत्र द्विपलेनेति न पाठः, मधुलचन्द्राटादौ अर्द्धपलेनेति पाठात्॥ २१२॥

ज्वरदाहापहं लेपात् सद्यो यातास्रदाहनुत् ॥ २१३ ॥
चन्दनाद्यमगुर्वाद्यं तैलं चरककीर्त्तितम् ।
तथा नारायणं तैलं जीर्णज्वरहरं परम् ॥ २१४ ॥
अभिघातज्वरो न स्यात् पानाभ्यङ्गेन सर्पिषः ।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया ॥ २१५ ॥

आगन्तुज्वरचिकित्सामाह ।

ओषधीगन्धविषजौ विषपीतप्रबाधनम् ।
जयेत् कषायैर्मतिमान् सर्वगन्धकृतैस्तथा ॥ २१६ ॥
अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत् ।
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीड़जौ ॥ २१७ ॥

क्रोधकामादिज्वरचिकित्सामाह ।

क्रोधजे पित्तजित् काम्या अर्थाः सद्वाक्यमेव च ।

---

अरिष्टमाह सर्जे इत्यादि । सर्जो धूनकः अम्बः काञ्जिकं अनुगन्धम्, मिश्रं पक्वम् । ततः शीताम्बुमर्दितं शीताम्बुप्रलेपं तैलं संसर्गं यातास्रदाहे कार्यम् ॥ २१३ ॥

नारायणतैलं वातव्याधौ वक्ष्यमाणम् ॥ २१४ ॥

अभिघातेत्यादि ।—न स्यात् न भवेत् आगन्तौ अपीत्यर्थः । क्षतानामित्युक्त्वा व्रणानाम् । क्षतादि ज्वरो न स्यादिति योज्यम् ॥ २१५ ॥

ओषधीत्यादि ।—सुगमम् । प्रबाधनं चिकित्सितम् । विषपीतप्रबाधनमिति पाठे,—विषपीतस्य यानि चिकित्सितानि तैरित्यर्थः । सर्वगन्धकृतैरिति—सर्वगन्धः शीतल एलादिगणः, स एवात्र त्रिफलत्वाद्गृहीतः, न तु "चातुर्जातककर्पूरकक्कोलागुरुसिह्लकम् । लवङ्गसहितञ्चैव सर्वगन्धं विनिर्दिशेत्" इति सिद्धयोगोक्तो ग्राह्यः । तस्योष्णत्वादित्यविरुद्धत्वात् ॥ २१६ ॥

अभिचारेत्यादि ।—सुगमम् । अभिचारोऽथर्ववेदोक्तः श्येनादियागः । अभिशापो गुर्वादीनामनिष्टाभिधानम् । होमादिनेत्यादिशब्दात् शान्तिकर्मादयो गृह्यन्ते । उत्पातो निर्घातादिः । ग्रहपीड़जमिति ग्रहपीड़ाजन्यम् । "उत्पात-ग्रहपीड़ोत्थम्" इति पीड़ाशब्दस्याभावात् प्रयत्नम् । सुश्रुते तु "उत्पातग्रहपीड़ितम्" इति पाठो दृश्यते ॥ २१७ ॥

आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ।
हर्षणैश्च शमं यान्ति कामक्रोधभयज्वराः ।
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ।
याति ताभ्यामुभाभ्याञ्च भयशोकसमुद्भवः ॥ २१८ ॥

भूतज्वरचिकित्सामाह ।

भूतविद्यासमुद्दिष्टैर्बन्धावेशनताड़नैः ।
जयेद्भूताभिषङ्गोत्थं मनःशान्त्या च मानसम् ॥ २१९ ॥

वर्जनीयविधिमाह ।

व्यायामञ्च व्यवायञ्च स्नानं चङ्क्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत् ॥ २२० ॥

ज्वरमुक्तिलक्षणम्—

देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।

---

क्रोधज इत्यादि ।—अत्र चरकः—"कामैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः । सद्यःशमं याति ज्वरः कामसमुद्भवः ॥" इति । आश्वासेनेत्यादि ।—चरकस्य स्पष्टम् । कामादिजन्यान् ज्वरान् कामादयः परस्परं नाशयन्तीत्याह,—कामादित्यादि ।—चरकस्य ॥ २१८ ॥

भूतविद्येत्यादि ।—सुश्रुतस्य । भूतानां देवग्रहादीनां ज्ञानार्थं प्रशमनार्थं च विद्या, सा च सुश्रुतोत्तरतन्त्रादावनुसरणीया । बन्धावेशनताड़नैरिति बन्धनमिह भूतस्य पुनरपसरणो भयेन संयमनं बन्धः । मन्त्रेणाकृष्य मनसि निवेशनमावेशनम् । ताड़नं मन्त्रैः सर्षपादिभिरभिहननम् । ताड़नैरित्यत्र पूजनैरित्येव पाठः सुश्रुते दृश्यते । टीकाकृतोऽपि पूजनैः बलिपुष्पगन्धादिभिरिति व्याख्यातवन्तः । भूताभिषङ्गोत्थमिति, भूताभिसम्बन्धोत्थम् । मानसं कामक्रोधादिजम् । मनःशान्तैरिति मनःप्रसादनैः । मनःशान्त्येत्यत्र विज्ञानाद्यैरित्यपि पाठः सुश्रुते दृश्यते । टीकाकृतो ज्ञानादिशब्दात् धर्मार्थधैर्यादीनां ग्रहणमिति व्याचष्टे ॥ २१९ ॥

ज्वरमुक्तेन यत् सेव्यं तदाह, व्यायामञ्चेत्यादि ।—बलमप्राप्तस्यापि ज्वरं प्रत्यावर्तयति, तदुक्तं—"बलमप्राप्य ज्वरं कुर्यात् ज्वरमुक्तस्य देहिनः । तस्मान्मुक्तज्वरः बलं विचरन् परिवर्जयेत् ॥" इति ॥ २२० ॥

पाठेन्द्रयवभूनिम्ब-मुस्तपर्पटकामृताः ।
जयन्त्यामतीसारं सज्वरं समहौषधाः ॥ ३ ॥

नागरादिः—नागरातिविषामुस्त-भूनिम्बामृतवत्सकैः ।
सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥ ४ ॥

ह्रीवेरादिः—ह्रीवेरातिविषामुस्त-बिल्वधान्यकनागरैः ।
पिबेत् पिच्छाविबन्धघ्नं शूलदोषामपाचनम् ॥
सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम् ॥ ५ ॥

गुडूच्यादिः—गुडूच्यतिविषाधान्य-शुण्ठीबिल्वाम्बुवालकैः ।
पाठाभूनिम्बकुटज-चन्दनोशीरपद्मकैः ॥
कषायः शीतलः पेयो ज्वरातीसारशान्तये ।
हृल्लासारोचकच्छर्दि-पिपासादाहनाशनः ॥ ६ ॥

उशीरादिः—उशीरं वालकं मुस्तं धन्याकं विश्वभेषजम् ।
समङ्गा धातकी लोध्रं बिल्वं दीपनपाचनम् ॥
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥ ७ ॥

---

...त्यादि ।—सुश्रुते चास्मिन् योगे बालकमपि दृश्यते, यथा—"पृश्निपर्णीबला बिल्वधान्य-कोत्पलनागरैः । सनागरैः पिबेत् पेयां साधितामुदरामयी" ॥ १ । २॥

पाठेत्यादि प्रयोगः क्वाथेन ॥ ३ ॥

नागरेत्यादि ।—वत्सक इन्द्रयवः । सिद्धसारे—"छिन्नाभूनिम्बमुस्ताश्च कलिङ्गाति-विषाक्षमः" इत्युक्तत्वात् ॥ ४ ॥

ह्रीवेरादिर्नातिप्रसिद्धोऽपीति वृद्धाः । योगोऽयमवचारणपद्यापि । बिल्वं बिल्वशलाटु, ग्राहकत्वात् ; एवं वक्ष्यमाणेषु ॥ ५ ॥

गुडूच्यादौ कुटजेन तत्फलं, मधुरत्वात् पाचकत्वाच्च । अयं योगः पित्तश्लेष्म-शैत्यादि व्याख्याने ॥ ६ ॥

उशीरेत्यादि ।—यद्यपि समङ्गात्वेन मञ्जिष्ठाप्युच्यते, तथापि वराहक्रान्तैव व्यवहारेण दृष्टा ॥ ७ ॥

पञ्चमूल्यादिः—पञ्चमूलीवलाबिल्व-गुडूचीमुस्तनागरैः।
पाठाभूनिम्बह्रीवेर-कुटजत्वक्फलैः शृतम्॥
हन्ति सर्वानतीसारान् ज्वरदोषं वमिं तथा।
सशूलोपद्रवं श्वासं कासं हन्यात् सुदारुणम्॥ ८॥
कलिङ्गातिविषाशुण्ठी-किराताम्बुयवासकम्।
ज्वरातीसारसन्तापं नाशयेदविकल्पतः॥ ९॥
वत्सकस्य फलं दारु रोहिणी गजपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका॥
द्वावप्येतौ सिद्धयोगौ श्लोकार्द्धेनाभिभाषितौ।
ज्वरातिसारशमनौ विशेषाद्दाहनाशनौ॥ १०॥
नागरामृतभूनिम्ब-बिल्वबालकवत्सकैः।
समुस्तातिविषोशीरैर्ज्वरातीसारहृज्जलम्॥ ११॥
मुस्तकबिल्वातिविषापाठाभूनिम्बवत्सकैः क्वाथः।
मकरन्दगर्भयुक्तो ज्वरातीसारौ जयेद् घोरौ॥ १२॥
घनजलपाठातिविषापथ्योत्पलधान्यरोहिणीबिल्वैः।
सेन्द्रयवैः शतमधः सातीसारं ज्वरं जयति॥ १३॥

कलिङ्गाद्यगुडिका।

कलिङ्गबिल्वजम्ब्वाम्र-कपित्थं सरसाञ्जनम्।
लाक्षां हरिद्रे ह्रीवेरं कट्फलं शुकनासिकाम्।
लोध्रं मोचरसं शङ्खं धातकीवटशुङ्गकम्॥

---

पञ्चमूल्यादौ भवति—"पञ्चमूलीति सामान्यात् [illegible] [illegible]। [illegible] पञ्चमूलीति [illegible]" इति [illegible], तथापि [illegible] [illegible] [illegible]॥ ८॥

[illegible] [illegible] [illegible] [illegible] [illegible]। [illegible] [illegible] [illegible]॥ ९—११॥

[illegible] [illegible] [illegible] [illegible] [illegible] पठन्ति, [illegible]

पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्।
छायाशुष्कान् पिबेत्क्षौद्रं ज्वरातीसारशान्तये।
रक्तप्रसादनाश्चैते शूलातीसारनाशनाः॥ १४॥
उत्पलं दाड़िमत्वक् च पद्मकेशरमेव च।
पिबेत् तण्डुलतोयेन ज्वरातीसारनाशनम्॥ १५॥

व्योषाद्यचूर्णम्—

व्योषं वत्सकवीजञ्च निम्बभूनिम्बमार्कवम्।
चित्रकं रोहिणीं पाठां दार्वीमतिविषां समाम्॥
श्लक्ष्णचूर्णीकृतान् सर्वांस्तत्तुल्यां वत्सकत्वचम्।
सर्वमेकत्र संयुज्य प्रपिबेत् तण्डुलाम्बुना॥
सक्षौद्रं वा लिहेदेतत् पाचनं ग्राहि भेषजम्।
तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम्॥
कामलां ग्रहणीदोषान् गुल्मं प्लीहानमेव च।
प्रमेहं पाण्डुरोगञ्च श्वयथुञ्च विनाशयेत्॥ १६॥
दशमूलीकषायेण विश्वमक्षसमं पिबेत्।
ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे॥ १७॥

---

प्रयोगाख्यः। अत्र मृत्कमयीरप्यि पाकम्। हरिद्रे इति हरिद्राद्वयम्। तण्डुलो-दकञ्च—"अक्षमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात्। भावयित्वा ततो वारि तण्डु-लोदककर्मणि॥" इत्यनेन पाक्यम्। शुकनासिका धर्मकारवटकः॥ १४॥

उत्पलेत्यादौ—दाड़िमफलस्य त्वक्,—"फलं स्याद्दाड़िमादीनाम्" इति वचनात्। त्वमन्यत्रापि बोध्यम्। पद्मं इत्यत्वमाहुः। पद्मस्य केशरः किञ्जल्कः। सर्वं पिष्ट्वापरे योगोऽयमित्याहुः॥ १५॥

व्योषादौ तत्तुल्यां वत्सकत्वचमिति मिलितव्योषादिचूर्णतुल्याम्॥ १६॥

दशमूलीत्यादि।—अत्र प्रक्षेप्यस्य शुण्ठीचूर्णस्य यत् अक्षमानत्वमुक्तं, तत् कथ्यस्य दशमूलस्य पञ्चपलात्मकमात्रामपेक्ष्य; तेन मध्यमाधममात्रानुसारेण शुण्ठी-चूर्णस्य ह्रासोऽपि बोध्यः। तेनात्र "प्रक्षेपः पादिकः क्वाथ्यात्" इत्येव परिभाषा प्रव-र्त्तते, न तु "पानस्य चतुर्थं" इति वचनात् विश्वस्यापेक्षया दशमूलीक्वाथस्य

विड़ङ्गातिविषामुस्तं दारुपाठाकलिङ्गकम्।
मरिचेन समायुक्तं शोथातिसारनाशनम्॥ १८॥
किराताब्दामृताविश्व-चन्दनोदीच्यवत्सकैः।
शोथातिसारशमनं विशेषाज्ज्वरनाशनम्॥ १९॥
किराताब्दामृतोदीच्य-मुस्तचन्दनधान्यकैः।
शोथातिसारतृड्दाह-शमनो ज्वरनाशनः॥ २०॥

इति ज्वरातिसारचिकित्सा।

---

गुणं कार्यः। यत. विल्वचूर्णापेक्षया दशमूलस्य पाचनदीपनत्वेन यौगिकत्वात् प्राधान्यम्। अपि च क्वाथकरणं हि क्वाथ्यमानापेक्षम्, क्वाथ्यमानञ्च उत्तमपुरुषाद्यपेक्षम्। अतएव पञ्चविंशत्यादिपलमानमुत्सर्गतो व्यवस्थितमप्येवं, तदपेक्षया च क्वाथ्यस्य उत्तमपुरुषाद्यपेक्षया व्याधिनिवृत्त्यै प्रयुज्यमानस्य न्यूनत्वकरणे भेषजस्याभावसन्देहात् व्याधिनिवृत्तिरेव न स्यादिति विपक्षे दोषदर्शनात् यथाव्यवस्थितचतुर्भागावशिष्टक्वाथप्रयोगाय क्वाथस्यैव प्रधानता। ततश्च यदि पानस्य चतुर्द्दश इत्यनुसारात् विल्वचूर्णापेक्षया दशमूलीक्वाथचतुर्गुणो गृह्यते, तदा प्रधानस्य क्वाथस्य न्यूनता स्यात्, चतुर्भागावशिष्टक्वाथानुसारेण वा यदि चतुर्भागं चूर्णं गृह्यते, तदा चूर्णबाहुल्यं स्यादिति। तेन यत्र क्वथितं चूर्णपानं, तत्र "प्रक्षेपं पादिकं क्वाथात्" इत्यस्यैव विषयः, न तु "पानस्य चतुर्द्दश" इत्यस्येति सिद्धम्। एवमन्यत्रापि क्वथित चूर्णस्य कल्कस्य वा पाने क्वाथस्य प्राधान्यमनुसन्धेयम्। अत एव चक्रपाणिदत्तेनोक्तं—"क्वथितं चूर्णपानं यत् तत्र क्वाथप्रधानता। प्रक्षेपे न तेनात्र चूर्णादौ नो चतुर्द्दश॥" इति। चूर्णापेक्षो चूर्णमानापेक्षोऽर्थः॥ १७। १८॥

किरातेत्यादि स्पष्टम्॥ १९। २०॥

इति ज्वरातीसारचिकित्साविवृतिः।

---

# अथातीसार-चिकित्सा।

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः।
अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥ १ ॥
मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले।
विनातिद्रवसङ्घात-शैत्यश्लेष्मप्रदूषणात् ॥ २ ॥
शकृद्दुर्गन्धि साटोप-विष्टम्भार्त्तिप्रसेकिनः।
विपरीतं निरामन्तु कफात् पक्वञ्च मज्जति ॥ ३ ॥
आमे विलङ्घनं शस्तमादौ पाचनमेव च।
कार्य्यञ्चानशनस्यान्ते प्रद्रवं लघुभोजनम् ॥ ४ ॥

---

ज्वरोपद्रवत्वादतीसारस्य चिकित्सामभिधाय सम्प्रति स्वतन्त्रस्यातीसारस्य चिकित्सामाह आमेत्यादि।—सुश्रुतस्य। क्रिया चिकित्सा ॥ १ ॥

आमपक्वलक्षणमाह, मज्जतीत्यादि।—चरकस्य। आमेति आमान्विता विट् जले मज्जति। गुरुत्वादिति आमाद्विगुरुत्वात्। पक्वेति निरामा; प्लवते निरामत्वेन लघुत्वादित्यर्थः। द्वयोरप्यामपक्वलक्षणयोरपवादमाह, विनातिद्रवेत्यादि।—अतिद्रवत्वात् आमापि प्लवते; तथा अतिसङ्घातात् अतिकाठिन्यात् पक्वापि मज्जति, तथा शैत्यश्लेष्मप्रदूषणात् कफसम्बन्धजनगौरवेण पक्वापि मज्जति। शैत्यस्थाने श्वैत्यपाठे—श्वेतवर्णता। एतेनातिद्रवत्वादिकं विना मज्जनप्लवने आमनिरामलक्षणतया ज्ञेये इत्यर्थः ॥ २ ॥

आमत्वनिरामत्वयोः सम्यग्ज्ञानार्थमपरमपि लक्षणमाह, शकृदित्यादि।—आटोप-विष्टम्भार्त्तिः तत्सहितम्। किंवा आर्त्तिः शूलम्; आटोपो शब्दपूर्वक उदर-क्षोभः; विष्टम्भः सतोदशूलमल्पावरोधः; प्रसेकिनः कफप्रसेकिनः; किंवा प्रसेकः स्तोकस्तोकमलसरणम्। कफात् पक्वञ्च मज्जतीत्यस्य तन्त्रान्तरीयवचनत्वान्न पौन-रुक्त्यमाशङ्कनीयम्। इह तु सम्पूर्णश्लोकानुरोधात् पठितम् ॥ २ ॥

आम इत्यादि।—प्रद्रवमिति प्रकृष्टद्रवम्; प्रकर्षपदात् शास्त्रविहितत्वेन ग्रहः। तेनाशास्त्रविहितद्रवान्ननिषेधार्थं, विहितमांसरसादिविधानार्थञ्च प्रद्रवोपादानं ज्ञेयम्। अतः—"वर्जयेद्वैदलं शूली कुष्ठी मांसं ज्वरी घृतम्। द्रवमन्नमतीसारी सर्वञ्च तरुणज्वरी" इत्यादि वचनेन सहास्य न विरोधः। अन्ये तु प्रद्रवमिति

लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः।
समुदीर्णं दोषचयं शमयति तत् पाचयत्यपि च ॥ ५ ॥
ह्रीवेरशृङ्गवेराभ्यां मुस्तपर्पटकेन वा।
मुस्तोदीच्यशृतं तोयं देयं वापि पिपासवे ॥
युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत् ॥ ६ ॥
औषधसिद्धाः पेया लाजानां शक्तवोऽतिसारहिताः।
वस्त्रप्रस्रुतमण्डः पेया च मसूरयूषश्च ॥ ७ ॥
गुर्वी पिण्डी खराऽत्यर्थं लघ्वी सैव विपर्ययात्।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥ ८ ॥

बृहच्छालपर्ण्यादिः।

शालपर्णी पृश्निपर्णी बृहती कण्टकारिका।
बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम्॥
एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥ ९ ॥

---

[illegible] विरोधं परिहरन्ति। अपरे तु—[illegible] व्याख्यानयन्ति। अन्ये तु—[illegible] ॥ ४ ॥

लङ्घनमप्यतीसारे लङ्घनस्य प्राधान्यमाह, लङ्घनमित्यादि।— स्पष्टम् ॥ ५ ॥

ह्रीवेरेत्यादि तोयमत्र षडङ्गविधिना पक्वं तोयम्। उदीच्यं वालकम् ॥ ६ ॥

भक्तं लघून्यन्नानीति यदुक्तं तदेव दर्शयति औषधसिद्धा इत्यादि।—औषधं [illegible] धान्यपञ्चकादिकम्। पेया चेति।—पेया च [illegible] यदाह,—"[illegible]" इति ॥ ७ ॥

गुर्वीत्यादि।—अत्यर्थं खरा कठिना शक्तुपिण्डिका गुर्वी स्यात्। सैव विपर्ययादिति मृद्वी सा लघ्वी भवति। अवलेहिका [illegible] ॥ ८ ॥

बृहच्छालपर्ण्यादौ—बिल्वानि [illegible]। [illegible]—"[illegible] [illegible] बिल्वं [illegible] दीपनम्। [illegible]" इति। [illegible] बिल्वं [illegible], —"बिल्वमूषं [illegible]" इति [illegible]। [illegible]

स्वल्पशालपर्ण्यादिः।

शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता।
दाड़िमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥ १० ॥
यवागूमुपभुञ्जानो न तु व्यञ्जनमाचरेत्।
शाकमांसफलैर्युक्ता यवाग्वोऽम्लाश्च दुर्जराः ॥ ११ ॥
धान्यपञ्चकसंसिद्धो धान्यविश्वकृतोऽथवा।
आहारो भिषजा योज्यो वातश्लेष्मातिसारिणाम् ॥ १२ ॥
वातपित्ते पञ्चमूल्या कफे वा पञ्चकोलकैः ॥ १३ ॥
धान्योदीच्यशृतं तोयं तृष्णादाहातिसारनुत्।
आभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत् ॥ १४ ॥
दोषाः सञ्चिता यस्य विदग्धाहारमूर्च्छिताः।
अतिसाराय कल्पन्ते भूयस्तान् सम्प्रवर्त्तयेत् ॥ १५ ॥
न तु संग्रहणं दद्यात् पूर्वमामातिसारिणे।
दोषा ह्यादौ रुध्यमाना जनयन्त्यामयान् बहून् ॥
शोथपाण्ड्वामयप्लीह-कुष्ठगुल्मोदरज्वरान्।

---

इति आहारस्य सञ्जीवने संस्कार इति यावत्। सर्वातिसारिणामिति आमपक्वमात्र पक्वातिसारिणां, प्रत्येकद्वन्द्वसन्निपातातिसारिणां वा ॥ ९ ॥

स्वल्पशालपर्ण्यादिः।—वाग्भटस्य ॥ १० ॥

यवाग्वोऽम्ला इति।—यथा अम्लविपाकाः ॥ ११ ॥

धान्यपञ्चकेत्यादि स्पष्टम्। वातपित्ते पञ्चमूल्या इति स्वल्पपञ्चमूल्या ॥ १२ । १३ ॥

आभ्यामिति धान्योदीच्याभ्याम् ॥ १४ ॥

दोषा इत्यादि।—सञ्चिता इति सञ्चयं प्राप्ताः। विदग्धाहारेणाथवा विदग्धाहारबाधिता चतुर्विधमध्याम-विदग्ध-विष्टब्ध-रसशेषरूपमजीर्णमुच्यते। मूर्च्छिता इति वर्द्धिताः। सम्प्रवर्त्तयेदिति स्वयं प्रवर्त्तमानदोषस्य उपेक्षया प्रवर्त्तनं कारयेत्। उक्तं हि,—"तत्रोपेक्षैव भेषजम्" इति, तदा स्तोकं स्तोकं विबद्धं वा विरेचनयोगेन प्रवर्त्तयेत्। अत एव वक्ष्यति स्तोकं स्तोकं विबद्धं चेत्यादि ॥ १५ ॥

न तु संग्रहणमित्यादौ—पूर्वमिति विशेषणेनोत्तरकालमामातिसारिणोऽपि अति-

दण्डकालसकाध्मान-ग्रहण्यर्शोगदांस्तथा ॥ १६ ॥
क्षीणधातुबलार्त्तस्य बहुदोषोऽतिनिस्रुतः ।
आमोऽपि स्तम्भनीयः स्यात् पाचनान्मरणं भवेत् ॥ १७ ॥
स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्य्यते ।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ १८ ॥

धान्यपञ्चकम् ।—धान्यकं नागरं मुस्तं बालकं बिल्वमेव च ।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥
इदं धान्यचतुष्कं स्यात् पित्ते शुण्ठीं विना पुनः ॥ १९ ॥
पिप्पलीं नागरं धान्यं भूतीकञ्चाभयां वचाम् ।
ह्रीवेरभद्रमुस्तानि बिल्वं नागरधान्यकम् ॥
पृश्निपर्णी श्वदंष्ट्रा च समङ्गा कण्टकारिका ।

---

निवृत्तवह्निदीपनस्य क्षीणधातोः संग्रहणं देयमिति दर्शयति। अत एव वक्ष्यति क्षीणधातुबलार्त्तस्येति। अन्ये तु पूर्वं संग्रहणं न देयमिति वचनेन प्रथमप्रवृत्तामस्य कुटजत्वगादिसंग्रहणं न देयमिति बोधयति, मुस्तादीत्यादि तु पाचनं तदर्थमेव यत्, पूर्वमपि देयमित्याहुः ॥ १६ ॥

अवस्थाविशेषेऽपि संग्रहणं देयमित्याह, क्षीणेत्यादि।—पाचनादिति अवलपाचनात्, पाचनमप्यत्र हितमेव ॥ १७ ॥

विरेचनमप्याह, स्तोकमित्यादि।—सुश्रुतस्य। अभयापिप्पलीकल्कस्य सुखोष्णता कटुत्वयोगेन ज्ञेया ॥ १८ ॥

धान्यकमित्यादि।—अयं योगः सामपित्ते बोध्यः। यदुक्तमायुर्वेदसारे—“विश्वभिषग्धान्यकैः क्वथितं जलम्। आमपित्तातिसारघ्नं दीपनं धान्यपञ्चकम्॥” धान्यपञ्चकं यदुक्तं तत् शुण्ठीव्यतिरेकेण अविशेषितमेवरसमात् षट् धान्यचतुष्कं स्यादित्यादि। भोजेऽप्युक्तं—“धान्यकं बालकं मुस्तं बिल्वं पित्ते सशुण्ठिकम्। आमशूलविबन्धघ्नं पाचनं वह्निदीपनम्॥” इति। तथान्यत्राप्युक्तं—“धान्यकं बालकं मुस्तं बिल्वं पित्ते तु दीपनम्। आमशूलविबन्धघ्नं पाचनं ज्वरातिसारनुत्॥” इति ॥ १९ ॥

पिप्पलीमित्यादि।—प्रमथ्यायं चरकस्य। अत्र भूतीकं यमानी, भद्रमुस्त

वातातिसारिणे देयास्तक्रेणान्यतमेन वा ॥ २९ ॥

कच्चटादिः।—कच्चटजम्बूदाडिमशृङ्गाटकपत्रबिल्वह्रीवेरम्।
जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात् ॥ ३० ॥
कृत्वालवालं सुदृढं पिष्टैरामलकैर्भिषक्।
आर्द्रकस्वरसेनाशु पूरयेन्नाभिमण्डलम्।
नदीवेगोपमं घोरमतीसारं निरोधयेत् ॥ ३१ ॥
किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्।
पित्तातिसाररोगघ्नं सक्षौद्रं वेदनापहम् ॥ ३२ ॥
पलं वत्सकबीजस्य श्रपयित्वा जलं पिबेत्।

---

पञ्चमूल्यादौ पञ्चमूली स्वल्पा महती वा। धान्यकोत्पलबिल्वम्बा इति बिल्वम्बा बिल्वशलाटुः। अन्ये तु बिल्वम्बा ह्यम्बष्ठा कल्पना इति शिवः, तेनाविशेषात् सर्वकल्पनैव कार्येत्याहुः। तन्न, स्वरसस्य मध्यमात् तत्कल्पनायाः गुरुत्वात्; अत एव कल्कोऽपि न पातव्यस्तात्, कषायचूर्णौ वा योग्यत्वादित्याहुः। अन्यतमेनेति वाट्यिका-जलादीनामन्यतमेन। क्वाथपक्षे तक्रादौ चतुःसमं देयम् ॥ २९ ॥

कच्चटेत्यादौ।—कच्चटाद्दोला चतुष्पत्रम्। नागरान्तैरष्टाभिः कषायः ॥ ३० ॥

कृत्वेत्यादि स्पष्टम् ॥ ३१ ॥

किराततिक्तकमित्यादि।—अत्र तण्डुलोदकमपि योज्यम्। तेन एषां चूर्णं मधुसहिततण्डुलोदकेन पिबेदित्यर्थः। तथाह वाग्भटः—"किराततिक्तकं मुस्त वत्सक सरसाञ्जनम्। कटङ्कटेरी ह्रीवेरं बिल्वमध्यं दुरालभा। तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम्। नागरं धातकीपुष्पं दाडिमस्य त्वगुत्पलम्। अर्द्धश्लोकैः स्मृता योगाः सक्षौद्रतण्डुलाम्बुना ॥" इति। चरकेऽप्युक्तं—"किराततिक्तक मुस्त वत्सक सरसाञ्जनम्। बिल्वं दारुहरिद्रा च ह्रीवेरं सदुरालभम्। चन्दनञ्च मृणालञ्च नागरं लोध्रमुत्पलम्। तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम्। नागरं धातकीपुष्पमुत्पलं दाडिमत्वचः। कट्फलं नागरं पाठा जम्ब्वाम्रास्थिदुरालभा। योगाः षडेते सक्षौद्रतण्डुलोदकसंयुताः। पेयाः पित्तातिसारघ्नाः श्लोकार्द्धेषु निदर्शिताः ॥" इति। नियमस्तु वातेत्यादौ क्वाथविधिरिति शेष इत्याह ॥ ३२ ॥

यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ ३३ ॥
मधूकं कट्फलं लोध्रं दाड़िमस्य फलत्वचम् ।
पित्तातिसारे मध्वाक्तं पाययेत् तण्डुलाम्बुना ॥ ३४ ॥
कुटजातिविषामुस्तं हरिद्रापर्णिनीद्वयम् ।
सक्षौद्रशर्करं शस्तं पित्तश्लेष्मातिसारिणाम् ॥ ३५ ॥
कुटजत्वक्‌फलं मुस्तं क्वाथयित्वा जलं पिबेत् ।
अतीसारं जयत्याशु शर्करामधुयोजितम् ॥ ३६ ॥
बिल्वचूताम्थिनिर्य्यूहः पीतः सक्षौद्रशर्करः ।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ ३७ ॥
पटोलयवधन्याक-क्वाथः पेयः सुशीतलः ।
शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ॥ ३८ ॥
प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत् तु यथाबलम् ।
तृष्णातिसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ ३९ ॥
कलिङ्गक-वचामुस्तं दारु सातिविषं समम् ।
कल्कं तण्डुलतोयेन पिबेत् पित्तानिलामयी ॥ ४० ॥
कुटजादि ।—कुटजं दाड़िमं मुस्तं धातकीबिल्वबालकम् ।
लोध्रचन्दनपाठाय कषायं मधुना पिबेत् ॥

---

यवमित्यादि ।—वाग्भटस्य । रसाशी जाङ्गलमांसरसेन भुञ्जानः ॥ ३३

मधूकमित्यादि ।—चूर्णविधया योगोऽयम् ॥ ३४ ॥

कुटजेत्यादौ ।—हरिद्राद्वयम्, पर्णिनीद्वयं मासपर्णी पृश्निपर्णौ । क्वाथेऽयं योग ॥ ३५ ॥

कुटजत्वगित्यादि योगत्रयं चाक्रम् ॥ ३६ ॥

बिल्वेत्यादि चाक्रम् ॥ ३७ ॥

पटोलेत्यादि चाक्रम् ॥ ३८ ॥

प्रियङ्ग्वित्यादौ अञ्जनं रसाञ्जनम् । चूर्णविधया योगोऽयम् । ३९

कलिङ्गेत्यादौ सातिविषमिति कलिङ्गादिविशेषणम् ॥ ४० ॥

रसाञ्जनं सातिविषं कुटजस्य फलं त्वचम्।
धातकीशृङ्गवेरञ्च प्रपिबेत् तण्डुलाम्बुना॥
क्षौद्रेण युक्तं नुदति रक्तातिसारमुल्वणम्।
मन्दं दीपयते चाग्निं शूलञ्चापि निवर्त्तयेत्॥ ५१॥
विडङ्गातिविषा मुस्तं दारु पाठा कलिङ्गकम्।
मरिचेन समायुक्तं शोथातिसारनाशनम्॥ ५२॥

वत्सकादिः।

सवत्सकः सातिविषः सबिल्वः सोदीच्यमुस्तश्च कृतः कषायः।
सामे सशूले सहशोणिते च चिरप्रवृत्तेऽपि हितोऽतिसारे॥ ५३॥
कषायो मधुना पीतस्त्वचो दाडिम-वत्सकात्।
सद्यो जयेदतीसारं सरक्तं दुर्निवारकम्॥ ५४॥
गुड़ेन खादयेद्बिल्वं रक्तातिसारनाशनम्।

---

पृश्निपर्ण्या एको योगः। अन्ये तु—"पृश्निपर्ण्या च साधितः" इति पृथक्पाठः, पृश्निपर्णीक्वाथेन साधित इत्यर्थः। मिताहींदत्तव्याख्यादुग्धं पृश्निपर्णीक्वाथैर्मिलित्वा पाकः कार्यः। उक्तं हि वाग्भटे—"पयस्यहींदिके च्छागी ह्रीवेरोत्पलनागरैः। पेया रक्तातिसारघ्नी पृश्निपर्णी रसान्विता" इति ब्रूते॥ ५०॥

रसाञ्जनमित्यादि।—अत्र कुटजस्य फलं त्वक् च। सुश्रुतेऽप्युक्तं—"रसाञ्जनं सातिविषं सक्षौद्रं कौटजं यथा। धातकीं नागरञ्चैव पाययेत् तण्डुलाम्बुना। सशूलं रक्तं हन्ति योगो मधुसमन्वितः॥" इति॥ ५१॥

विडङ्गेत्यादि।—अत्र मरिचस्य प्रक्षेप्यत्वमित्याहुः॥ ५२॥

वत्सकादौ वत्सकः कुटजः। तस्य त्वगिति चन्द्रकलाटीकाकारः वैद्यप्रसारकश्च। अन्ये तु—"बिल्वमज्जयवाम्भोद-वालकातिविषाकृतः। कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम्॥" इति सुश्रुतसंवादात् फलमेवेत्याहुः। किन्तु माधवे व्यवहारस्त्वचा, फलेनापि ज्वरे रक्तपाश्रये च। यदुक्तं,—"कुटजः कटुकाताम्रगत्वग्दोषार्शोऽतिसारजित्। तद्बीजं रक्तपित्तातीसारज्वरहरं हिमम्॥" इति॥ ५३॥

कषाय इत्यादौ—दाडिमात् कोमलत्वक्॥ ५४॥

कुटजलेहः—शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत्।
क्वाथे पादावशेषेऽस्मिन् लेहं पूते पुनः पचेत्॥
सौवर्चलयवक्षार-विड़सैन्धवपिप्पली।
धातकीन्द्रयवाजाजी-चूर्णं दत्त्वा पलद्वयम्।
लिह्यादटरमात्रं तत् पीतं क्षौद्रेण संयुतम्।
पक्वापक्वमतीसारं नानावर्णं सवेदनम्।
दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम्॥ ६७॥

कुटजाष्टकः।

तुलामथार्द्रां गिरिमल्लिकायाः संक्षुद्य पक्त्वा रसमाददीत।
तस्मिन् सुपूते पलसम्मितानि श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन॥
पाठां समङ्गातिविषां समुस्तां विल्वञ्च पुष्पाणि च धातकीनाम्।
प्रक्षिप्य भूयो विपचेत् तु तावद्दर्वीप्रलेपः स्वरसस्तु यावत्।
पीतस्त्वसौ कालविदा जलेन मण्डेन वाऽजापयसाऽथवापि।
निहन्ति सर्वन्त्वतिसारमुग्रं कृष्णं सितं लोहितपीतकं वा॥
दोषं ग्रहण्या विविधञ्च रक्तं शूलं तथार्शांसि सशोणितानि।

---

वृन्तस्य पद्मकेशरसंयुतम्। काश्मरीपद्मपत्रैश्चाप्यस्य सूत्रेण तु दृढम्॥" ततः तुल्य मिति। श्योनाकस्य त्वचं पद्मकेशरस्य समभागं कृत्वा संपिष्य, तं पिण्डं गाम्भारी-पद्मपत्रयोः पुटे निक्षिप्य, मनःशिलया मृत्तिकया चावलिप्य निर्धूमवह्निनाङ्गारेण पुटपाकविधिना पक्त्वा रसो ग्राह्य इति व्याख्यानयन्ति टीकाकृतः। अत्र श्योनाक-पुटपाके वाग्भटप्रमाणात् मध्वस्थाने शर्कराप्रक्षेपोऽपि बोध्यः॥ ६६॥

शतमित्यादि।—चरकस्य टीका:। लेहमिति लेहाकारं यथा भवति तथा पचेत्। पलद्वयमिति मिलित्वा। चाग्भटपाके चूर्णप्रक्षेपः। यवक्षारस्थाने गुड-क्षारपाठो न प्रसिद्धः। बदरमात्रमित्यक्षमात्रकम्। भागचतुष्टयेन व्यवहारः। क्षौद्रयुक्तमित्युपयोगकाले यथानुरूपं मधु दत्त्वा उपयोज्यम्॥ ६७॥

तुलामित्यादि।—तुलाद्रव्ये जलद्रोण इति वचनात्। रसश्च पादावशिष्ट परिभा-षासिद्धः। पलसम्मितानीति प्रत्येकं, द्रव्यप्रधानत्वान्निर्देशस्य। समङ्गा वराह-क्रान्ता। शाल्मलेनेति शाल्मलीवेष्टकेन। अत्र केचित् चूर्णं दत्त्वैव पाकं,—"प्रक्षिप्य

असृग्दरञ्चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम्॥
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता॥ ६८॥

षडङ्गघृतम्—वत्सकस्य च बीजानि दार्व्याश्च त्वच उत्तमाः।
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी॥
षड्भिरेभिर्घृतं सिद्धं पेयं मण्डावचारितम्।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम्॥ ६९॥

क्षीरिद्रुमाद्यं घृतम्।

क्षीरिद्रुमाभीरुरसे विपक्वं तज्जैश्च कल्कैः पयसा च सर्पिः।
सितोपलार्द्धं मधुपादयुक्तं रक्तातीसारं शमयत्युदीर्णम्॥ ७०॥
जीर्णेऽमृतोपमं क्षीरमतीसारे विशेषतः।
छागं तद्वत्तथा तज्जैः सिद्धं देयं वा वारिसाधितम्॥ ७१॥

---

भूयो विपचेत्" इति वचनात् प्रकारान्तरमाह। अन्ये तु सक्थिम् मुकूलं भूयः पचेत्; ततो मनाक् दर्वीप्रलेपनावस्थायां धातकीविल्वकादिचूर्णं प्रक्षिप्य, ततो रसः पीत इति योजयन्। एतेन—"प्रायो न पाकचूर्णानां भूरिचूर्णस्य योगतः" इत्यपि वचनमनुगृहीतं भवतीत्याहुः। व्यवहारव्याख्यानेनैवेति। अनेनेति।—शीतलजलेनाग्निमान्द्ये; मण्डेन वस्तिदुष्टौ, छागीदुग्धेन रक्ते॥ ६८॥

षडङ्गघृते "दार्व्याश्च त्वच उत्तमाः" इति सर्वत्र दार्व्यास्त्वच एव ग्राह्या उत्तमगुणत्वात्। तस्य दुर्लभत्वात् पत्र काष्ठमेव गृह्यते। षड्भिरिति पदं यथालाभद्रव्यनिषेधार्थम्। एभि कल्कैर्यथोक्तगुणमेव मन्त्र देयम्। इत्येव घृतं कुटजत्वचा सनाथं भवति, तदुक्तं वैद्यप्रदीपे—"मण्डेन पेयं तत्सर्पिः सनाथं कुटजत्वचा" इति॥ ६९॥

क्षीरिद्रुमेत्यादी।—क्षीरिणो द्रुमा वटोदुम्बरादयः। एषामन्यतमस्य मधुरिकस्य वा क्वाथः। शतावरीरसश्च घृतापेक्षया मिलित्वा चिगुणः। कल्कोऽप्येषामेव। पयश्च क्षेत्रसमम्। घृतमपेक्ष्य च सिताया अर्द्धं षोडशपलमित्यर्थः। मधुनोऽपि घृतमपेक्ष्यैव पादिकत्वं ज्ञेयम्॥ ७०॥

क्षीरपानविषयमाह, जीर्णे इत्यादि।—तद्वत्तज्जैरिति—अतिसारहन्तृभेषजैः। "देयं वा वारिसाधितम्" इति केवलेन त्रिगुणेन जलेन साधितमित्यर्थः। तत्र हि सुश्रुते—

बालबिल्वं गुडं तैलं पिप्पलीं विश्वभेषजम्।
लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके ॥ ७२ ॥
पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः।
त्र्यहात् प्रवाहिकां हन्ति चिरकालानुबन्धिनीम् ॥ ७३ ॥
कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः।
दध्नः सरोऽम्लः सस्नेहः खडो हन्यात् प्रवाहिकाम् ॥ ७४ ॥
बिल्वापणं गुडं लोध्रं तैलं लिह्यात् प्रवाहणे ॥ ७५ ॥
दध्ना ससारेण समाक्षिकेण भुञ्जीत निश्चारकपीडितस्तु।
सुतप्तकुप्यक्वथितेन वापि क्षीरेण शीतेन मधुप्लुतेन ॥ ७६ ॥
दीप्ताग्निर्निष्पुरीषो यः सार्यते फेनिलं शकृत्।
स पिबेत् फाणितं शुण्ठी-दधितैलपयोघृतम् ॥ ७७ ॥
शोथं शूलं ज्वरं तृष्णां कासं श्वासमरोचकम्।

---

"यथाप्रतं तथा क्षीरमतीसारेषु पूजितम्। विरोधित्वेऽपि तत् पेयमपो भावैश्चिभि मतम्" ॥ ७१ ॥

बालबिल्वमित्यादि।—चरकस्य। वाते प्रतिहते इति विबद्धवाते ॥ ७२ ॥

पयसेत्यादि।—दुग्ध प्र १, पिप्पली माष ४, अथवा मरिचचूर्णं माष २, एवं व्यवहरन्ति। अविच्छिन्नायां प्रवाहिकायामयं योगः ॥ ७३ ॥

कल्कः स्यादित्यादि।—चरकस्य। अत्र खडाख्यता तिलदधिसरयोगात्। खड इत्यस्यैव योगस्य संज्ञा। चरके खडस्थाने मुद्ग इति पाठान्तरम् ॥ ७४ ॥

बिल्वपेशीमित्यादौ बिल्वं बिल्वशलाटुः, ऊषणं मरिचम्। यदुक्तं—"बिल्वपेशीं गुडं लोध्रं तैलं मरिचयोजितम्" इति। तैलेन स्नेहः ॥ ७५ ॥

दध्नेत्यादि।—सुश्रुतस्य। ससारेण अनुद्धृतनवनीतेन। निश्चारकः प्रवाहिका; यदाह पराशरः—"निर्वाहयेत् सफेनस्य पुरीषं यो मुहुर्मुहुः। प्रवाहिकेति सा ख्याता केचिन्निश्चारकश्च सः॥" इति। सुतप्तकुप्यक्वथितेनेति।—अत्यन्ततप्तसुवर्णरजते-तरलौहमयेष्टकया क्वथितेन। अन्ये तु चषटितं दध्यादि कुप्यमाचक्षते। केचित्तु कुप्यस्थाने कूपं पठन्ति, व्याचक्षते च।—"कूपः पाषाणभेदो दधिवाष्पहे ख्यातः शङ्ख-नाभ्याकृतिः" इति ॥ ७६ ॥

छर्दिं मूर्च्छाञ्च हिक्काञ्च दृष्ट्वातीसारिणं त्यजेत्।
बहुमेही नरो यस्तु भिन्नविट्को न जीवति ॥ ७८ ॥
स्नानाभ्यङ्गावगाहांश्च गुरुस्निग्धातिभोजनम्।
व्यायाममग्निसन्तापमतीसारी विवर्जयेत् ॥ ७९ ॥
इत्यतीसार-चिकित्सा।

---

## अथ ग्रहणी-चिकित्सा।

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत्।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥ १ ॥
शरीरानुगते सामे रसे लङ्घनपाचनम्।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम्।
दद्यात् पेयादि लघ्वन्नं पुनर्योगांश्च दीपकान् ॥ २ ॥
कपित्थबिल्वचाङ्गेरी-तक्रदाडिमसाधिता।

---

दीप्ताग्निरिति।—सुश्रुतस्य। एतत्सर्वमालोच्य पेयम् ॥ ७७—७९ ॥

इति अतीसारचिकित्साविवृतिः।

---

ग्रहण्यतीसारयोः परस्परं कार्यकारणभावसम्बन्धोऽस्तीत्यनन्तरं ग्रहणीचिकित्सितमुच्यते, ग्रहणीमाश्रितमित्यादि।—वाग्भटस्य। ग्रहणी षष्ठाधारनाडी, तदुक्तम्—"अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता" इति। अजीर्णवदुपाचरेदिति।—आमाजीर्णवत् यथा लङ्घनपाचनदीपनपाचनौषधम्, तथैवम्। अतीसारोक्तविधिनेति।—लङ्घनपञ्चपाचनादिना ॥ १ ॥

शरीरानुगत इत्यादि।—चरकस्य। शरीरानुगते शरीरव्यापके। "सामे रसे" इति आमसम्बन्धेन अप्रधाने, तेन आमरसहितरसक इत्यर्थः। रस इत्याकार रसे। विशुद्धामाशयायेति।—वमनविरेचनलङ्घनैर्यथायोग्यतया निर्हृतामदोषाय ॥ २ ॥

कपित्थेत्यादि।—चरकस्य। कपित्थबिल्वयोः फलम्, दाडिमफलस्य तु त्वक्,

पाचनी ग्राहिणी पेया सवाते पाञ्चमूलिकी ॥ ३ ॥
ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात्।
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपणम् ॥
कषायोष्णविकाशित्वाद्रौक्ष्याच्चैव कफे हितम्।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत् ॥ ४ ॥
शुण्ठीं समुस्तातिविषां गुडूचीं पिबेज्जलेन क्वथितां समांशाम्।
मन्दानलत्वे सततामतायामामानुबन्धे ग्रहणीगदे च ॥ ५ ॥

---

अन्ये तु फलमित्याहुः। कपित्थादीनां चतुर्णां समुदायेन मिलित्वा पलं कल्कः, तच्च द्रवस्थाने, तत्र तावत् ग्राह्यम् यावता यवागूः सिध्यति। वृद्धवैद्यास्तु चाङ्गेरी-गृहचभिया तक्रमयीं तुण्डाभ्यां पाकमिच्छन्ति। ग्राहिणीत्यत्र एषा यवागूः, एषा च वातकफे। सवाते पाञ्चमूलिकीति द्वितीया, वातातिसारे स्वल्पपञ्चमूलसिद्धा पञ्चमूलिकेति शेषः, "भृष्टाद्यैर्वा कुलीसारः" इति तन्त्रान्तरसंवादात् ॥ ३ ॥

तक्रस्य ग्रहणीदोषघ्नानां दोषत्रयहितत्वस्य सहेतुकमाह, ग्रहणीदोषिणा-मित्यादि।—"दीपनं ग्राहि लाघवात्" इति पथ्यत्वे हेतुः। मधुरपाकित्वान्न च पित्त-प्रकोपणमिति, पथ्यत्वात् पित्तप्रकोपणे प्राप्ते मधुरपाकितया पित्तं न प्रकोपयति, चकारादपि पित्तं शमयतीति चाहुरन्ये; किं वा "सर्वमेवाम्लं प्रायो दाहाय विद-ह्यते" इति वचनैर्विदाहजनकं भवति, तदपि तक्रप्रयोगे विदाहकञ्च भवति, मधुर-पाकित्वात् तदपि। न तु आतताम्लत्वेन पित्तप्रकोपनिषेधार्थमयं ग्रन्थः, तत्प्रकोपयोगेन पित्तकारित्वोऽम्लरसस्याभावात्। चकाराच्च प्रशम्यं विदाहित्वादेव, अत एवाह, सद्यस्कमविदाहीति।—सद्योमथितमेव तक्रं पथ्यमावाम्लायां विदाहकञ्च भवति। किञ्चित्कालस्थितं पुनरम्लत्वाद्विदाहि भवत्येव। यत्तु स्वाद्वम्लसान्द्रत्वादित्यनेन चका-रमत्वमुक्तं तदम्लानुरसतया ज्ञेयमित्याहुः। विकाशित्वादिति।—दोषाश्रितस्रोतोविशोधक-त्वादित्यर्थः। रौक्ष्यादित्यत्र तैक्ष्ण्यादित्यपि पाठान्तरम्; पैच्छिल्यरहितत्वादित्यर्थः। एतच्च वह्निनो जीर्णावस्थायां ग्रहण्यां देयमित्याहुः ॥ ४ ॥

शुण्ठीमित्यादि।—सततामतायामिति।—सर्वदा आमकोष्ठतायाम्। आमानुबन्ध इति।—आमे प्रवर्तमाने इत्याहुः। ग्रहणीगदविशेषणतया पुनरामानुबन्ध इति क्वचित् पाठो दृश्यते ॥ ५ ॥

धान्यकातिविषोदीच्य-यमानीमुस्तनागरम् ।
वला-द्विपर्णीविल्वञ्च दद्याद्दीपनपाचनम् ॥ ६ ॥

चित्रकाद्य गुड़िका।—चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ।
व्योषहिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् ॥
गुड़िका मातुलुङ्गस्य दाड़िमस्य रसेन वा ।
कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥
सौवर्चलं सैन्धवञ्च विड़मौद्भिदमेव च ।
सामुद्रेण समं पञ्च लवणान्यत्र योजयेत् ॥ ७ ॥

श्रीफलादिः ।

श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुड़ः ।
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ॥ ८ ॥

पक्वपद्रम।—जम्बूदाड़िमशृङ्गाट-पाठाकञ्चटपल्लवैः ।
पक्वं पर्य्युषितं बाल-बिल्वं सगुड़नागरम् ।
हन्ति सर्वानतीसारान् ग्रहणीमतिदुस्तराम् ॥ ९ ॥

---

धान्यकेत्यादियोग क्वाथेन ॥ ६ ॥

चित्रकमित्यादि।—चरकस्य। अत्र कपित्थमात्रिकरणत्व-व्याख्यात् केचिन्नवच-मयमिच्छन्ति, तत्र,—"पटूनि [redacted] द्वौ क्षारौ मरिच पञ्चकोलकम्। दीप्यकं हिङ्गु गुड़िका बीजपूरकजे कृता। कोष्णदाड़िमतोये वा पर पाचन-दीपनी।" इति वाग्भटवचनात्। अत एव चक्रोऽप्याह, सौवर्चलमित्यादि।—चौद्भिद शाम्बरिलवणम्, मुख्यादिलवणं। सामुद्रक करकचम्। गुड़िकैषमार्द्रकरसेनापि योज्या, वाग्भटेऽस्मारदर्शनात् ॥ ७ ॥

श्रीफलेत्यादि। नागरचूर्णं कटुत्वमात्रकम्। सगुड इति समगुडः। अयं मोदो यदि स्यात्. ॥ ८ ॥

जम्बुदाड़िमेत्यादि।—एषां पल्लवैरामस्य कृत्वा पक्वपञ्च जलं दत्त्वा बाल-बिल्वमूलमेव पर्य्युषितं कार्य्यम्। सगुडनागरमिति।—बिल्वमध्ये गुड़, नागरचूर्णञ्च कटुत्वमात्रकम्। पक्वं तु नागरं न देयम्। तत्पर्वदलपत्रमसमगुडेरमित्याहुः केचि. ॥ ९ ॥

नागरातिविषामुस्त-क्काथः स्यादामपाचनः ।
चूर्णं हिङ्ग्वष्टकं वात-ग्रहण्यान्तु घृतानि च ॥ १० ॥

नागराद्यं चूर्णम्—

नागरातिविषामुस्तं धातकीं सरसाञ्जनम् ।
वत्सकत्वक्फलं बिल्वं पाठां कटुकरोहिणीम् ॥
पिबेत् समांशं तच्चूर्णं मध्वोद्वृ तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥
शीतकषायमानेन तण्डुलोदककल्पना ।
केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनाम् ॥ ११ ॥

भूनिम्बाद्यं चूर्णम्—

भूनिम्बकटुकाव्योष-मुस्तकेन्द्रयवान् समान् ।
द्वौ चित्रकाद् वत्सकत्वग्भागान् षोडश चूर्णयेत् ॥
गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ।

---

नागरेत्यादि स्पष्टम् । हिङ्ग्वष्टकमग्निमान्द्ये वक्ष्यमाणम् ॥ १० ॥

नागराद्यचूर्णं मध्वोद्रमिति मधुप्रक्षेपयुक्तम् । कृष्णात्रेयः पुनर्वसुः । तण्डु-लाम्बुनेत्यादि ।—तण्डुलाम्बुना तण्डुलधावनाम्बुना । तच्च तण्डुलाम्बु कथं कर्त्तव्यम् ? इति जिज्ञासायां स्वमतं वृन्दमतञ्चोपन्यस्यति शीतकषायमानेनेत्यादि ।—शीतकषायविधानञ्च—"षड्भिः पलैश्चतुर्भिर्वा सलिलात् क्षौद्रं" इति । तन्मतं तण्डुलसपेना षड्गुणं ग्राह्यम् । उक्तं हि—"षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीत काष्टयोः" इति । वृन्दमतमाह, केऽपीत्यादि ।—अन्ये तु त्रिगुणमम्बु तण्डुलेन समं विरचितं तण्डुलाम्बु वदन्ति । अपरे तु अनियततण्डुलमनियतजलेन प्रक्षाल्य जलं गृह्णन्ति ॥ ११ ॥

भूनिम्बेत्यादि ।—द्वौ चित्रकात् तथा वत्सकत्वग्भागान् षोडशेति प्रथमभागा-पेक्षया द्विभागषोडशभागपरिग्रहः । गुडयुक्तं शीताम्बु ; गुडशीताम्बु गुडपान

कामलाज्वरपाण्डुत्व-मेहारुच्यतिसारनुत् ।
गुड़योगाद् गुड़ाम्भ स्याद् गुड़वर्णरसान्वितम् ॥ १२ ॥
ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि ।
कट्वम्ललवणक्षारैस्तीक्ष्णैश्चाग्निं विवर्द्धयेत् ॥ १३ ॥
समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च ।
मातुलुङ्गाभयारास्ना-शटीमरिचनागरम् ।
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना ॥
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम् ।
एतैर्वौषधैः सिद्धं सर्पिः पेयं समारुते ॥ १४ ॥

भल्लातकक्षारः ।

भल्लातकं त्रिकटुकं त्रिफला लवणत्रयम् ।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥
स क्षारः सर्पिषा पेयो भोज्ये वाप्यवचारितः ।
हृत्पाण्डुग्रहणीदोष-गुल्मोदावर्त्तशूलनुत् ॥ १५ ॥
सर्वजायां ग्रहण्यान्तु सामान्यो विधिरिष्यते ॥ १६ ॥

गुडवर्णताम्भुपयोगनिमज्जनको देव स्यात्, गुडयोगादित्यादि ।—वैद्यप्रसारके तु—सर्व-चूर्णसमो गुडः, शीतलजलेन च पानमित्युक्तम् । व्यवहारस्तु पूर्ववैव । पैत्तिकग्रहण्या-मम्लपित्तचिकित्सितमपि बोध्यम् । तदुक्तं वैद्यप्रदीपे—"अम्लपित्तहितं यच्च पानभोजन-भेषजम् । पैत्तिके ग्रहणीदोषे तत्सर्वमुपकल्पयेत् ॥" इति ॥ १२ ॥

ग्रहण्यामित्यादि स्पष्टम् ॥ १३ ॥

समूलामित्यादि । मातुलुङ्गस्यात्र मूलम् । एतैरिति ।—पिप्पलीमूलादिभिः कल्क-कैः ॥ १४ ॥

भल्लातकमित्यादि ।—चरकस्य । गोपुरीषाग्निनेति ।—करीषाग्निप्रभावात् प्रयोगसाध्य-रूपमलोमानिति । स क्षार इति ।—भल्लातकादीनामन्तर्धूमदाहात् यः क्षारः स एव सर्पिषा पेय इत्यर्थः । भोज्ये व्यञ्जने वा स क्षारो देय ॥ १५ ॥

सर्वजायामित्यादि ।—सामान्यो विधिरिति ।—प्रत्येकदोषोक्तचिकित्सामिश्रणेन त्रिदोष-ग्रहणीचिकित्सा कार्येत्यर्थः ॥ १६ ॥

चूर्णं मरिचमहौषधकुटजत्वग्भवं क्रमाद्द्विगुणम् ।
गुडमिश्रमथितपीतं ग्रहणीदोषापहं ख्यातम् ॥ १७ ॥

पाठाद्यं चूर्णम् ।

पाठाबिल्वानलव्योष-जम्बूदाडिमधातकी ।
कटुकातिविषामुस्त-दार्वीभूनिम्बवत्सकैः ॥
सर्वैरेतैः समं चूर्णं कौटजं तण्डुलाम्बुना ।
सक्षौद्रश्च पिबेच्छर्दि-ज्वरातिसारशूलवान् ।
हृद्दाहग्रहणीदोषारोचकानलसादजित् ॥ १८ ॥

कपित्थाष्टकचूर्णम् ।

यमानीपिप्पलीमूल-चातुर्जातकनागरैः ।
मरिचाग्निजलाजाजी-धान्यसौवर्चलैः समैः ॥
वृक्षाम्लधातकीकृष्णा-बिल्वदाडिमतिन्दुकैः ।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः ॥

---

चूर्णमित्यादि । गुडमिश्रमथितेनालोड्य पीतमित्यर्थः ॥ १७ ॥

पाठादिचूर्णे जम्बूफलास्थि, एतत्पाठबलात् दाडिमफलस्यापि बीजम् । वत्सक इन्द्रयवः ॥ १८ ॥

यमानीत्यादि ।—अयं योगो वाग्भटे अतीसारचिकित्सिते लिखितः । अग्निश्चित्रकः, जलं बालकम् । समैरिति समभागैः । वृक्षाम्लं महार्द्रकम् । त्रिगुणैरिति ।—एकभागापेक्षया वृक्षाम्लादीनां प्रत्येकं त्रिगुणत्वम् । षड्गुणसितैः कपित्थाष्टगुणैः, कृत इति सिताकपित्थयोरपि षड्गुणाष्टगुणत्वे एकगुणापेक्षयैव, एतैः कृतश्चूर्णं इति योज्यः । अरुणस्तु वाग्भटटीकायां षड्गुणसितैरिति पदं वृक्षाम्लादितिन्दुकान्तानां विशेषणं व्याख्याय मिलितयमान्यादिद्रव्यषट्कापेक्षया सिताया षड्गुणत्वमाह । तथा सति सिताभागानां शतमष्टाधिकं भवति । अन्ये तु—षड्गुणसिते कपित्थाष्टगुणे इति पठन्ति, व्याख्यानयन्ति च—"एकभागापेक्षया कपित्थस्याष्टगुणत्वम्, अष्टगुणकपित्थापेक्षया च सितायाः षड्गुणत्वम्" इति ; तथा सति सिताया अष्टचत्वारिंशद्भागा भवन्तीति । अपरे तु—"षड्गुणसित. कपित्थाष्टगुणीकृत इति चूर्णविशेषणं

चूर्णोऽतीसारग्रहणी-क्षयगुल्मगलामयान् ।
कासश्वासाग्निसादार्शः-पीनसारोचकान् जयेत् ॥ १९ ॥

दाड़िमाष्टकः ।

कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम् ।
यमानीधान्यकाजाजी-ग्रन्थिव्योषं पलांशिकम् ॥
पलानि दाड़िमादष्टौ सितायाश्चैकतः कृतः ।
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाड़िमाष्टकः ॥ २० ॥

वार्त्ताकुगुड़िका ।

चतुष्पलं सुधाकाण्डात् त्रिपलं लवणत्रयात् ।
वार्त्ताकुकुड़वश्चार्कादष्टौ द्वे चित्रकात् पले ॥
दग्ध्वा रसेन वार्त्ताकोर्गुड़िका भोजनोत्तराः ।
भुक्ता भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः ।
विसूचिकाप्रतिश्याय-हृद्रोगशमनाश्च ताः ॥ २१ ॥

---

कृत्वा समुदितचूर्णेभ्यः सिताकपित्थयोः षड्गुणत्वाद्गुणत्वम्" इत्याहुः । तदनुपपन्न-मयमपि न व्यवहारसिद्धं, सर्वाणां सिताकपित्थयोरपि षड्गुणत्वादिति । तस्मादेकभागापेक्षयैव षड्गुणत्वगुणत्वमिति । कपित्थभागाधिक्यादस्य कपित्थाष्टक इति संज्ञा ॥ १९ ॥

कर्षोन्मितेति ।—वाग्भटस्य । तुगाक्षीरी वंशलोचना, चातुर्जातं त्वगेला-पत्रकेशरम् । द्विकार्षिकमिति प्रत्येकं, निर्देशस्य द्रव्यप्रधानत्वात् । एवं यमान्यादिकमपि प्रत्येकं पलांशिकम् । ग्रन्थिकं पिप्पलीमूलम् । दाड़िमस्यात्र फलं,—"फलानां दाड़िमादीनाम्" इत्युक्तेः । एवमन्यत्रापि । चकारात् सितया अपि अष्टौ पलानि ॥ २० ॥

चतुष्पलमित्यादि ।—वाग्भटस्य । त्रिपलं लवणत्रयादिति मिलित्वा, निर्देशस्य मानप्रधानत्वात् । त्रिकणा लवणानि चेति ये पठन्ति, ते त्रिकटुलवणत्रयं मिलित्वा चतुष्पलं वदन्ति, पूर्वोक्तचतुष्पलनिर्देशादिति मन्यमानाः । तदयुक्तं [illegible] । वार्त्ताकुकुड़व इति ।—सुपक्ववार्त्ताकुफलचतुष्टयं, व्यवहारात् । चत्वारीति चर्मसूत्रात् । दग्ध्वा रसेन वार्त्ताकोरिति ।—चतुर्थांशं दग्ध्वा वार्त्ताकु-

अष्टपलं घृतम् ।

त्र्यूषणत्रिफलाकल्के विल्वमात्रे गुडात् पले ।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत् ॥ २२ ॥

विल्वगर्भघृतम् ।—मसूरस्य कषायेण विल्वगर्भं पचेद्घृतम् ।
हन्ति कुक्ष्यामयान् सर्वान् ग्रहणीपाण्डुकामलाः ।
केवलं श्रीहिमाख्यज्ञ-क्वाथो व्युष्टस्तु दीपनः ॥ २३ ॥

शुण्ठीघृतम् ।—विश्वौषधस्य गर्भेण दशमूलजले शृतम् ।
घृतं निहन्त्याश्वयथुं ग्रहणीसामतामयम् ॥ २४ ॥

नागरघृतम् ।—घृतं नागरकल्केन सिद्धं वातानुलोमनम् ।
ग्रहणीपाण्डुरोगघ्नं श्रीहकासज्वरापहम् ॥ २५ ॥

---

रसेन गुडिकाः कार्या इत्यर्थः । दध्यानि वार्ताकुरस इति च पाठः । भोजनान्तरा इति ।—भोजनमुखन्तं पश्चात्कालीनं यासां तथा, किंवा भोजनादुत्तराः । भुक्ता भुक्तं पचनीत्यत्र भुक्तं भुक्तमित्यपि पाठः ॥ २१ ॥

त्र्यूषणेत्यादौ ।—विल्वमात्र इति षड्भिर्मिलित्वा पलमात्रं, कल्कत्व पादिकत्वात् । चतुर्गुणजलेनाष्टपलघृतस्यात्र पाकः । इत्यमेव मन्दानलस्य भवतीति महर्षिवचनाद्दीयते । मात्रामिति ।—अग्निबलानुरूपपरिमाणम् ॥ २२ ॥

मसूरस्येत्यादि ।—मसूरस्य क्वाथोऽत्रास्मिन्नपि पिष्टपलं यथा कार्यः । एवं माषकुलत्थादीनामपि । विल्वगर्भमिति ।—विल्वशलाटुकल्कम् । घृतमत्र प्रस्थमानमेव । श्रीहिमासक्वाथस्य गदहःकार्यतामाह, केवलमित्यादि ।—अस्वहं छागादिमांसम् । केवलमिति पाठे—केवलं समयं यथा स्यात् तथा व्युष्टं पाकेनाश्रितो दीपनः, यावता कालेन व्यष्टीभवति स एव दीपन इत्यर्थः । केवलश्रीहिमांसपाठे तु—द्रव्यान्तर-संयुक्तक्षौद्रादिकाथस्य न दीपनत्वमित्याहुः । तत्तु न व्यवहारसिद्धम्, अत एव वृन्दे—"श्रीहिमाम्लयोः क्वाथं व्युषितं दीपनं मतम्" इत्येवोक्तम् । व्युष्टेति पर्युषितमित्यादिभ्योऽन्—इति सूत्रनिर्देशात् ॥ २३ ॥

विश्वौषधस्येत्यादि ।—ग्रहणीसामतामयमिति ग्रहणीगदान्वितो यः सामताख्य आमयो रोगस्तमित्यर्थः ॥ २४ ॥

घृतमित्यादौ जलं चतुर्गुणम् ॥ २५ ॥

चित्रक घृतम्।—चित्रककाथकल्काभ्यां ग्रहण्यघ्नं शृतं हविः।
गुल्मशोथोदरप्लीह-शूलार्शोघ्नं प्रदीपनम्॥ २६॥

बिल्वादिघृतम्।

बिल्वाग्निचव्यार्द्रकशृङ्गवेर-क्वाथेन कल्केन च सिद्धमाज्यम्।
सच्छागदुग्धं ग्रहणीगदोत्थ-शोथाग्निमान्द्यारुचिनुद्वरिष्ठम्॥२७॥

चाङ्गेरीघृतम्।—नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका।
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचितम्।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत्॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम्।
गुदभ्रंशार्त्तिमानाहं घृतमेतद्व्यपोहति॥ २८॥

मरिचाद्यं घृतम्।

मरिचं पिप्पलीमूलं नागरं पिप्पली तथा।
भल्लातकं यमानी च विडङ्गं हस्तिपिप्पली॥
हिङ्गु सौवर्चलञ्चैव विड्सैन्धव-चव्यय।

---

चित्रकघृतं व्यक्तम्॥ २६॥

बिल्वाग्नीत्यादौ।—आर्द्रकेति शृङ्गवेरविशेषणं, तेन शुष्कस्य शुण्ठीरूपस्य निरासः। बिल्वादीनां क्वाथश्चतुर्गुण., चतुर्गुण इत्येके। छागक्षीरं स्नेहसमम्॥ २७॥

नागरमित्यादि।—अत्र हस्तिपिप्पली चवी, तन्त्रान्तरसंवादात्। तद्यथा,—"दधिधान्यबिल्वपाठायमानिकाचव्यकोलमोचरकैः। चाङ्गेरीस्वरसे हविर्दधिगुण-निःसृतिमूत्रार्तिनुद् सर्पिः" इति। इत्यत्राक्त हस्तिपिप्पली चवीत्यर्थोऽनेन द्रव्येन—"चविका कोलमूलं च हस्तिपिप्पल्युदीरिता" इति। बिल्वस्थाने बिल्वपाठोऽपि तन्त्रान्तरसंवादादेव न भवति। चाङ्गेरीस्वरसोऽप्यत्र चतुर्गुणः। चतुर्गुणेन दध्ना चैतद ग्रहणस्य सम्बन्धत्वात्, अन्यत्रेत्यादावपि—"चतुर्गुणेन दध्ना च चाङ्गेरीस्वरसेन च" इत्युक्तम्। अन्ये तु "स्वरसे क्षीरवद्विधि" इति वचनात् चाङ्गेरीस्वरसमेव स्नेहसमं कुर्वन्ति, तदयुक्तम्, पूर्वोक्तादेव॥ २८॥

मरिचाद्यघृते विड़सैन्धवमिति समाहारद्वन्द्वः, किंवा विड़सैन्धवयुक्ता

नक्त-कंसासुतं जातं तक्रारिष्टं पिबेन्नरः ।
दीपनं शोथगुल्मार्शः-क्रिमिमेहोदरापहम् ॥ ३३ ॥

आ यामकाञ्जिकम् ।

यवस्य दद्याद् यवशक्तकानां पृथक् पृथक् त्वाढकसम्मितञ्च ।
मध्यप्रमाणानि च मूलकानि दद्याच्चतुःषष्टि सुकल्पितानि ॥
द्रोणेऽम्भसः प्राप्य घटे सुधौते दद्यादिदं भेषजजातयुक्तम् ।
क्षारद्वयं तुम्बुरु वस्तगन्धा धनीयकं स्याद्विड़सैन्धवञ्च ॥
सौवर्चलं हिङ्गु शिवाटिकाञ्च चव्यञ्च दद्याद्विपलप्रमाणम् ।
इमानि चान्यानि पलोन्मितानि विजर्ज्जरीकृत्य घटे क्षिपेच्च ॥
कृष्णामजाजीमुपकुञ्चिकाञ्च तथासुरीं कारविचित्रकञ्च ।
पक्षस्थितोऽयं बलवर्णदेह-वयस्करोऽतीव बलप्रदश्च ॥

आन् जीवयामीति यतः प्रवृत्त-
स्तत्काञ्जिकेति प्रवदन्ति तज्ज्ञाः ।
आ यामकालात्करयेत्त भक्त-
मा-यामकेति प्रवदन्ति चैनम् ॥

दकोदरं गुल्ममथ प्लीहानं हृद्रोगमानाहमरोचकञ्च ।
मन्दाग्निता कोष्ठगतञ्च शूलमर्शोविकारान् सभगन्दरांश्च ।
वातामयानाशु निहन्ति सर्वान् संसेव्यमानं विविधान्नराणाम् ॥३४॥

---

तक्रारिष्टे पिप्पलीयवं तथा दन्तीयानीत्यपि क्वचित् पाठः ; तक्रञ्च कंसे आढके आसुतं कृतसन्धानम् । जातमिति ।—अम्लरसतया जातम् ॥ ३३ ॥

आ-यामकाञ्जिके यवस्येति ।—निस्तुषस्य दलितयवस्य, तथा यवशक्तुकानाञ्च पृथक् पृथगाढकसम्मितमित्याढकप्रमाणम् । मध्यमानीति आर्द्र मा॰ । चतुःषष्टीत्या-कृतिमानेन । सुकल्पितानीति खण्डखण्डीकृतानि । अम्भसाप्राप्य । तुम्बुरु धनिकद्वयम्, वस्तगन्धा कोकाली ; शिवाटिका मण्डूपर्णी ( हिङ्गुपत्री ) ; कृष्णा पिप्पली ; उपकुञ्चिका स्थूलकृष्णजीरकः ; आसुरी राजिका, कारवि सुगन्धि कृष्णजीरकम् । आ यामकालादिति ।—यामः प्रहरस्तत्र, काल., तमवधीकृत्य ॥३४॥

कल्याणगुड़ः।

प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुड़स्य।
चूर्णीकृतैर्ग्रन्थिकजीरचव्य-व्योषेभकृष्णाह्वयपाजमोदैः॥
विड़ङ्गसिन्धुत्रिफला-यमानी-पाठाग्निधान्यैश्च पलप्रमाणैः।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद् यथावत्॥
तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम्।
अनेन सर्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोथाः॥
शाम्यन्ति चायं चिरमन्दराग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः।
स्त्रीणाञ्च वन्ध्यामयनाशनोऽयं कल्याणको नाम गुड़ः प्रदिष्टः॥
तैले मनाग् भर्जयन्ति त्रिवृतञ्च चिकित्सकाः।
अत्रोक्तमानसाधर्म्यात् त्रिसुगन्धि पलं पृथक्॥ १५॥

कुष्माण्डगुड़कल्याणकः।

कुष्माण्डकानां रूढ़ानां सुस्विन्नं निष्कुलत्वचाम्।
सर्पिःप्रस्थे पलशतं ताम्रभाण्डे शनैः पचेत्॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
धान्यकानि विड़ङ्गानि यमानी मरिचानि च॥

---

प्रस्थत्रयेणेत्यादि।—अयं योगः सुश्रुते चक्रपाणिना पठितः। अत्र ग्रन्थिकं पिप्पलीमूलम्, अजमोदा यमानी, पलःपरिमाणमत्रास्त्यतो यमान्या भागद्वयम्। अग्निश्चित्रकः। पलप्रमाणैरिति।—प्रत्येकम्। त्रिवृच्चूर्णं तैले मनाग्भर्जनीयम्; भर्जनेन च तस्य मन्दवीर्यत्वादतिविरेचकत्वं न भवति। अक्षफलप्रमाणं कर्षम्; व्यवहारस्तु चतुःपलमात्रकोऽपि इति। त्रिसुगन्धि त्वगेलापत्रकम्। त्रिवृच्चूर्ण-मर्दितं एव तैलं गुडमामलकीरसमेलितं पचेत् पाकः, सिद्धे च शीते त्रिसुगन्धि-चूर्णप्रक्षेप इति व्यवहारो वैद्यानाम्। अत्रोक्तमानसाधर्म्यादिति।—त्रिसुगन्धिचूर्णस्य पलमानमुक्तं, तत्साधर्म्यादित्यर्थः॥ १५॥

कुष्माण्डकानामित्यादि।—रूढानामिति—सम्यक्पक्वानाम्, सम्यक्पाकस्य सर्पिर्मधुगन्धितैलवदिव भवतीति। तादृशस्य कुष्माण्डस्य सम्यक्पाकोक्तस्य त्वग्बीज

त्रिफला चाजमोदा च कलिङ्गाजाजिसैन्धवम् ॥
एकैकस्य पलञ्चैव त्रिवृदष्टपलं भवेत् ।
तैलस्य च पलान्यष्टौ गुड़पञ्चाशदेव तु ॥
प्रस्थैस्त्रिभिः समेतन्तु रसेनामलकस्य तु ।
यदा दर्व्वीप्रलेपस्तु तदैनमवतारयेत् ॥
यथाशक्ति गुड़ान् कुर्य्यात् कर्षकर्षार्द्धमानकान् ।
अनेन विधिना चैव प्रयुक्तस्तु जयेदिमान् ॥
प्रसह्य ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान् ।
ज्वरमानाहहृद्रोग-गुल्मोदरविसूचिकाः ॥
कामलापाण्डुरोगांश्च प्रमेहांश्चैव विंशतिम् ।
वातशोणितवीसर्पान् दद्रुचर्मदलीमकान् ।
कफपित्तानिलान् सर्वान् प्ररूढांश्च व्यपोहति ॥
व्याधिक्षीणा वयःक्षीणाः स्त्रीषु क्षीणाश्च ये नराः ।
तेषां हृष्यश्च वृष्यश्च वयःस्थापन एव च ।
गुड़कल्याणको नाम वन्ध्यानां गर्भदः परः ॥ २६ ॥

रसपर्पटिका ।

याम्यपित्ते विधातव्या गुड़िका च सुधावती ।
तत्र प्रोक्तविधाशुद्धौ समानौ रसगन्धकौ ॥
मन्मदं कज्जलाभन्तु कुर्य्यात् याम्ये दृढ़ाश्रये ।

---

मधुरीस्कन्धस्य लवणाक्तास्तरणस्य किञ्चित् पानीयं दत्त्वा सम्यक्स्विन्नस्य निष्पीड़ित वस्त्रितरसस्य पिष्टस्यातपे किञ्चिच्छुष्कस्य पलाष्टकं ग्राह्यम्; ततश्च घृतप्रस्थ चतुष्टये तैलस्य चाष्टपले समालुड्यं कार्य्यम्। तत आमलकरसस्य द्वादशशरावेण यथाशास्त्रगुड़पञ्चाशत्पलानीय, ततः पूत्वा सम्मिलितकुष्माण्डादिकमेकीकृत्य पक्तव्यम्। ततो गुड़पाकविधया अवतारिते पिप्पल्यादिचूर्णस्य प्रक्षेप इत्यर्थः। भक्षणमात्रा न प्राय. कर्षार्द्धेनेत्याहुः ॥ २६ ॥

शिवदासो रसपर्पटीमाह, याम्येत्यादि।—तत्रेति।—तत्र सुधावत्या या विधा यो

२०९१२



ततो बादरवह्निस्थ-लौहपात्रे द्रवीकृतम्॥
गोमयोपरि विन्यस्त-कदलीपत्रपातनात्।
कुर्य्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात्॥
द्वादशरक्तिकां यावत् प्रयोगः प्रहरार्द्धतः।
तदूर्द्ध्वं वहुपूगस्य भक्षणं दिवसे पुनः॥
तृतीय एव मांसाज्य-दुग्धाद्यत्र विधीयते॥
वर्ज्यं विदाहि-स्त्री-रम्भा-मूलं तैलञ्च सार्षपम्।
चङ्गमत्स्याम्बुज-खगांस्तृष्णोद्विग्नः पयः पिबेत्॥
ग्रहणीक्षयकुष्ठार्शः-शोथाजीर्णविनाशिनी।
रसपर्पटिका ख्याता निबद्धा चक्रपाणिना॥ १७॥




ताम्रयोगः।

स्थाल्यां सम्मर्द्य दातव्यौ माषिकौ रसगन्धकौ।
नखक्षुण्णं तदुपरि ताण्डुलीयं द्विमाषिकम्॥
ततो नैपालताम्रादि पिधाय सुकरालितम्।

---

रसगन्धकमर्द्दनप्रकारो वक्तव्यः, तेन शुद्धाविन्यर्थः। तत्र सगन्धकं रसं दृढायां खल्वशिलायां सम्मर्द्य कज्जलाभं चूर्णं कुर्यात्। बादरवह्निस्थेति।—बदरदारुसम्भूताग्निस्थं द्रवत्वं। शुद्धपारदकर्षं १, शुद्धगन्धककर्षं १, एतद्द्वयं खल्वे लौहदण्डेन पाषाणदण्डेन वा, यावत् कज्जलाभं भवति। ततो लौहदर्व्विकायामेतच्चूर्णं दत्त्वा बदराङ्गारोपरि विन्यस्य लौहदण्डेन सञ्चाल्य यदा द्रवीभूतं भवति, तदा आर्द्रगोमयपिण्डोपरिस्थापितकोमलकदलीपत्रे ढालनीयम्, अपरकदलीपत्रान्तरेण आर्द्रगोमयपिण्डेन पर्पटिकाकृतिः कार्या। रक्तिद्वय क्रमादिति।—प्रथमं गुञ्जाद्वयम्, प्रतिदिनमेकैकवृद्धितो भक्ष्यमिति क्रमादित्यस्यार्थः। पर्णं लात्वा सखदिर हिङ्गुगुञ्जामिता लोहकगुञ्जाद्वयञ्च भक्षणीयम्। ततः चर्व्वं स्थित्वा दन्तादिलग्नं प्रक्षाल्य जलचुलुकपानञ्चेत्यपदेशः। प्रहरार्द्धत इति।—प्रहरार्द्धाभ्यन्तरे। तदूर्द्ध्वमिति।—प्रहरार्द्धोर्द्ध्वम्, तृतीये दिवसे इति सम्बन्धः॥ १७॥

ताम्रयोगमाह, स्थाल्यामित्यादि। यद्यपि रसगन्धकौ प्रधानतो गृहिकोत-

यांशुना पूरयेदूर्द्ध्वं सर्वां स्थालीं ततोऽनलः ॥
स्थाल्यधो नालिकां यावद्देयस्तेन मृतस्य च ।
ताम्रीताम्रस्य रक्त्येका त्रिफलाचूर्णरक्तिका ॥
तापणस्य च रक्त्येका विड़ङ्गस्य च तन्मधु ।
घृतेनालोद्य लेढव्यं प्रथमे दिवसे ततः ।
रक्तिवृद्धिः प्रतिदिनं कार्या ताम्रादिषु त्रिषु ॥
स्थिरा विड़ङ्गरक्तिस्तु यदा भेदो विवर्जितः ।
तदा विड़ङ्गस्त्वधिकं दद्याद्रक्तिद्वयं पुनः ॥
द्वादशाहं योगवृद्धिस्ततो ह्रासक्रमोऽप्ययम् ॥
ग्रहणीमम्लपित्तञ्च क्षयं शूलञ्च सर्वदा ।
ताम्रयोगो जयत्येष बलवर्णाग्निवर्द्धनः ॥ ३८ ॥

इति ग्रहणी-चिकित्सा ।

---

विधया शोधिनी थाली। मृत्कपालिमनिति।—पिष्टकल्कभिश्रणकेन लोपमुर्लिपित मित्यर्थः। पांशुना वालुकया। नालिका घटीमेका यावदनलज्वाला स्थाल्यधो देयत्यर्थः। त्रिफलाया मिलित्वा चूर्णरक्तिका; एवं त्रिकटोरपि। सर्वमिदं चूर्णं विड़ङ्गानं मधुघृताभ्यामालोद्य लिहः। विड़ङ्गरक्तिका पुनः स्थिरा न न्यूनाधिक मात्रा इत्यर्थः। यदा पुनः कोष्ठविबन्धाद्यागादिषु विरेकोऽपेक्षितो भवति, तदैव परं विड़ङ्गस्य रक्तिद्वयं यात्राभिन्यर्थः। अत्र च पणो यथा—शोधितमृतताम्र प्रमा १, एतद्द्वयं कज्जलीकृत्य हुडमृतनपालिलिकायां न्याप्यम्। तदुपरि तत्पत्री मकरध्वजमुखनूर्णं शरावकरमनुदीरयेन सहौल्या देयम्। चनकारेतन् सर्वं कपटकर्दमयोग्येन नेपाप्ततायपदयमात्रकेण कृततालप्रा अध्वरोऽग्निरसभाविल्वा दहनीयम्। तदित्वा पिष्टकल्कभिश्रणकेन तात्रिकायां रक्षणीयं कार्यम्। तत स्थाल्यामध्यस्थितायामालिकाया उपरि तां स्थालीं वालुकया पूरयित्वा, तदधो घटिका यावत् ज्वाला देया। एवं कृतताम्रादक्षि १, मिलितत्रिफलाचूर्णरक्ति १, तथा मिलितत्रिकटुचूर्णरक्ति १, विड़ङ्गचूर्णरक्ति १, एतत् सर्वं घृतमधुभ्यामालोड्य लेह्यम्, ज्योत्यपत्यलगुणेषु, प्रथमदिने। एवं द्वादशदिनपर्यन्तं रक्तिमेका-कया वृद्धिः। द्वादशाह्नान् ह्रासक्रमोऽपि एवमेव ज्ञेयः। रसयल्ककलपयस योग-

# अथार्शश्चिकित्सा ।

दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्त्तितः ।
भेषजक्षारशस्त्राग्नि-साध्यत्वादाद्य उच्यते ॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥
शुष्कार्शसां प्रलेपादि-क्रिया तीक्ष्णा विधीयते ।
स्राविणां रक्तमालोक्य क्रिया कार्य्यास्रपैत्तिकी ॥ १ ॥

प्रलेपमाह—स्नुक्क्षीरं रजनीयुक्तं लेपाद् दुर्नामनाशनम् ।
कोशातकीरजोघर्षान्निपतन्ति गुदोद्भवाः ॥ २ ॥
अर्कक्षीरं सुधाक्षीरं तिक्ततुम्ब्याश्च पल्लवाः ।
करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥ ३ ॥

---

रक्ताक्षी यथा—"मुक्ताफलसमं स्निग्धं घनं निष्पटलं गुरु । चपलं चपलं प्राज्ञा वदन्ति भिषजा वराः ॥" चपलमिति रसं, द्वितीयं चपलमिति चपलम् । "शुक-पिच्छसमच्छायो नवनीतसमप्रभः । मसृणः कठिनः स्निग्धः श्रेष्ठो रसक उच्यते ॥" हृतमारसादीनामाहारविधिर्बोध्यः ॥ १८ ॥

इति ग्रहणी-चिकित्सा ।

---

पूर्वोक्तसम्बन्धेन ग्रहण्यनन्तरमर्शश्चिकित्सितमुच्यते दुर्नाम्नामित्यादि ।—घान्ति ।—भेषजोपायः । विस्तरेण वक्ष्यमाणा चिकित्सा सारोद्धारेणाह, यद्वायो-रित्यादि ।—अर्शसः । अर्शसैरित्यर्शोरोगयुक्तैः । शुष्कार्शसामित्यादि ।—आदिशब्दात् स्वेदादीनां ग्रहणम् ॥ १ ॥

लेपादीनाह, स्नुक्क्षीरमित्यादि ।—स्नुहीक्षीरेण हरिद्राचूर्णमार्द्रं कृत्वा लेपः । उक्तं हि वाग्भटे—"स्नुक्क्षीरार्द्रनिशालेप" इति । कोशातकी घोषकः ॥ २ ॥

अर्केत्यादौ ।—अर्कस्य त्वक् । सुधाक्षीरमित्यत्र सुधाकाण्डमर्कं वाग्भटे च दृश्यते ॥ ३ ॥

अर्शोघ्नी गुदगा वर्त्तिर्गुडघोषाफलोद्भवा ।
ज्योत्स्निकामूलकल्केन लेपो रक्तार्शसां हितः ॥ ४ ॥
तुम्बीबीजं सौद्भिदन्तु काञ्जीपिष्टं गुडीत्रयम् ।
अर्शोहरं गुदस्थं स्याद्दधि माहिषमग्रतः ॥ ५ ॥
महाबोधिप्रदेशस्य पथ्या कोयातकीरजः ।
कफेन लेपतो हन्ति लिङ्गवर्त्तिमसंशयम् ॥ ६ ॥
अपामार्गाङ्घ्रिजः क्षारो हरितालेन संयुतः ।
लेपनं लिङ्गसम्भूतमर्शो नाशयति ध्रुवम् ॥
वातातीसारवद्भिन्नवर्चांस्यर्शांस्युपाचरेत् ।
उदावर्त्तविधानेन गाढ़विट्कानि चासकृत् ॥ ७ ॥
विड्विबन्धे हितं तक्रं यमानीबिड़संयुतम् ।
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम् ॥
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ।
न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः ॥ ८ ॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ ९ ॥

---

वर्त्तिं फलवर्त्तिः । गुडं जलेन द्रवीकृत्य घोषकफलचूर्णं प्रक्षिप्य पक्वा वर्त्तिं कार्य्या । ज्योत्स्निका घोषकः ॥ ४ ॥

मङ्डिदमुल्कारिवालवय शाम्बरिलवणं वा ॥ ५ ॥

महाबोधिप्रदेशस्येति ।—महाबोधिर्मगधे प्रसिद्धः । पथ्या हरीतकी । कफेन श्लेष्मणा ; समुद्रफेनेनेत्यन्ये, उदधि-कफलादिति भावः । शुद्धियोगत्वात् पूर्वव्याख्या साध्वी । लिङ्गवर्त्तिर्लिङ्गार्शः ॥ ६ ॥

अपामार्गेत्यादि स्पष्टम् । वातातीसारवद्भिन्नेति ।—वातातीसारविहितक्रिया ॥ ७ ॥

विड् विबन्ध इत्यादि स्पष्टम् । वातश्लेष्मार्शसामित्यादि—चरकस्य ॥ ८ ॥

त्वचमित्यादि—तन्त्रैव । चित्रकमूलत्वचं पिष्ट्वा तिष्ठोगृहीधसाव: कुम्भमेँ क्षिप्तो देय ॥ ९ ॥

पित्तश्लेष्मप्रशमनी कच्छूकण्डूरुजापहा।
गुदजान् नाशयत्याशु योजिता सगुड़ाभया॥
सगुड़ां पिप्पलीयुक्तामभयां घृतभर्जिताम्।
त्रिवृद्दन्तियुतां वापि भक्षयेदानुलोमिकाम् ॥ १० ॥
तिलारुष्करसंयोगं भक्षयेदग्निवर्द्धनम्।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम्॥
तिलभल्लातकं पथ्या गुड़श्चेति समांशिकम्।
दुर्नामकासश्वासघ्नं प्लीहपाण्डुज्वरापहम् ॥ ११ ॥
गोमूत्रव्युषितां दद्यात् सगुड़ां वा हरीतकीम्।
पञ्चकोलकयुक्तं वा तक्रमस्मै प्रदापयेत् ॥ १२ ॥
स्विन्नं शौरणं कन्दं पक्वाग्नौ पुटपाकवत्।
अद्यात् सतैललवणं दुर्नामविनिवृत्तये ॥ १३ ॥
स्विन्नं वार्त्ताकुफलं घोषायाः क्षारजेन सलिलेन।
तद्घृतभृष्टं युक्तं गुड़ेन वा तृप्तितो योऽत्ति॥

---

गुदजानित्यत्र नासाङ्कुरानिति शेषः, तेन पुंलिङ्गता उपपन्ना। सगुड़ामित्यादि स्पष्टम् ॥ १० ॥

तिलारुष्करेत्यादि।—संयुज्यते प्रयुज्यतेऽयमिति संयोगः प्रयोग एव। अन्ये तु तिलारुष्करयोः संयोगो यथेत्याहुः ॥ ११ ॥

गोमूत्रव्युषितामित्यादि।—चरकस्य। रात्रौ गोमूत्रस्थितामिति चक्रः। सगुड़ामित्यत्र एको योगः। वाशब्दः पूर्वयोगापेक्षया; चरके हि—"सगुड़ामभयां वाथ प्राशयेत् पौर्वभक्तिकीम्" इत्यभिधाय तदनन्तरमयं योग उक्तः, अतो भिन्नयोगत्वेन न पौनरुक्त्यं स्यादिति। एतेन गोमूत्रव्युषितामिति प्रयोगानुरोधात् पुनरपि तन्त्रान्तरीयगुडहरीतकीविधिनेति निरस्तेनोक्तमसहृदयं, योगद्वयस्यैव चरकोक्तत्वात् इति। पञ्चकोलयुक्तमिति।—पञ्चकोलचूर्णयुक्तम् ॥ १२ ॥

*स्विन्नमित्यादि*।—वाग्भटस्य। शौरणं कन्दमिति वनसूरणमूलम्, एवं सर्वतोऽर्शसि, तदभावे ग्राम्यसूरणोऽपीत्यन्ये ॥ १३ ॥

पिबति च तक्रं नूनं तस्याशेवातिवृद्धगुदजानि ।
यान्ति विनाशं पुंसां सहजान्यपि सप्तरात्रेण ॥ १४ ॥
असितानां तिलानां प्राक् प्रकुञ्चं शीतवार्य्यनु ।
खादतोऽर्शांसि नश्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥ १५ ॥
दन्त्यरिष्टम्—दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् ।
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत् ॥
रसे चतुर्थशेषे तु पूतशीते प्रदापयेत् ।
तुलां गुड़स्य तत् तिष्ठेन्मासार्द्धं घृतभाजने ॥
तन्मात्रया पिबेन्नित्यमर्शोभ्यो विप्रमुच्यते ।
ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम् ।
दीपनश्चारुचिघ्नश्च दन्त्यरिष्टमिदं विदुः ॥
पात्रेऽरिष्टादिसन्धानं धातकीलोध्रलेपिते ॥ १६ ॥
मनागरारुष्करहृद्दारकं गुड़ेन यो मोदकमत्यदारकम् ।
अशेषदुर्नामकरोगदारकं करोति वृद्धं सहसैव दारकम् ।

---

पिबतीत्यादि।—चीवकक्षारोदकेन षड्गुणेनैकविंशतिवारपरिस्रुतेन कृतमेवं घृते भक्षः चतुष्पलगुड़ेन संयोज्य भक्षयेदिति ॥ १४ ॥

असितानामित्यादि।—तिलानां प्रकुञ्चं पलं, प्राक् खादतः अनु पश्चाच्छीत वारि खादत इति योज्यम्। द्विजदार्ढ्यम् दन्तदार्ढ्यम् ॥ १५ ॥

दन्तीत्यादि।—चरकस्य। अत्र उभयोरितिवचनबलात् पञ्चमूलयोः प्रत्येक भागा ग्राह्याः; "त्रिपलं त्रिफलायाः" इत्यत्र तु निर्देशस्य समप्रधानत्वात् मिलित-त्रिफलाया एव पलत्रयं ग्राह्यम्। मासार्द्धमिति।—तन्त्रान्तरे तु मासमित्युक्तं, यथा—"त्रिफलादशमूलादिनिक्वाथानां पलं पलम्। क्वथिते पादशेषे च स्थितः पादशेषे गुड़तुलायुतः। घृतभाण्डे स्थितो मासं दन्त्यरिष्टो निषेवितः॥" इति; उभयमपि प्रमाणं श्रुतिद्वैधवत् ॥ १६ ॥

मनागरेत्यादि।—अरुष्करं भल्लातकम्। उद्दाममिव आकालमिति ईषः।

चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुड़ः ॥ १७ ॥

प्राणदा-गुड़िका।

त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च।
पिप्पल्याः कुड़वार्द्धञ्च चव्यायाः पलमेव च॥
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च।
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात्॥
सूक्ष्मैलाकर्षमेकन्तु कर्षं त्वग्मृणालयोः।
गुड़ात् पलानि तु त्रिंशच्चूर्णमेकत्र कारयेत्॥
अक्षप्रमाणा गुड़िका प्राणदेति च सा स्मृता।
पूर्वं भक्ष्या तु पश्चाद्वा भोजनस्य यथाबलम्।
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेत् तथा॥
हन्यादर्शांसि सर्वाणि सहजान्यस्रजानि च।
वातपित्तकफोत्थानि सन्निपातोद्भवानि च॥
पानात्यये मूत्रकृच्छ्रे वातरोगगलग्रहे।

---

षडादकमिति महाफलम्। अथ योगस्य अनु समसचामाह अभ्यदस। तन्मते सर्वत्र गुड़ेन त्रिविधमपि दत्वार्द्धं त्रिपक्वं मोदकविधानम्। यतस्तु मोदकत्वात् गुड़स्य द्वैगुण्यमाह। अथ तु—"मोदके द्विगुणो गुड़" इति कस्यचित् कल्पितस्य वाक्यमनार्षमिति कृत्वा नाद्रियन्ते, तन्मतेऽत्र समेनापि गुड़ेन मोदककल्पनमिति॥ १७॥

त्रिपलमित्यादि।—चतुर्थं मरिचस्येति पलमेकमित्यर्थः। केशरस्य नागकेशरस्य। त्वग्मृणालयोरिति।—त्वक् गुड़त्वक्, मृणालमुशीरम्, अनयोर्मिलित्वा कर्षः। पूर्वं भक्ष्या तु पश्चाद्वा भोजनस्येति भोजनस्य पूर्वं भोजनानन्तरमुपयुक्तकाले गुड़िका भक्ष्या, पश्चाद्वा मद्यादिकं पिबेदिति योज्यम्। न तु मद्यादितो भोजनस्य पूर्वपश्चाद्भावेन भक्षेति कल्पनीयम्, यदेषां क्वचिदप्यस्य विधिदृष्टत्वात्। मद्यं वातकफजेष्वर्शःसु, मांसरसो वाते, पित्ते क्षीरं, यूषश्च कफे, तोयमुष्णं वातकफे, एवमन्यदप्यनुपानमर्शोदीपकदेन कल्पनीयम्। वातघ्ने पुनरदं योगो दद्या-

विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च ॥
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा।
श्वासकासपरीतानामेषा स्यादमृतोपमा ॥
शुण्ठ्याः स्थानेऽभया देया विड्ग्रहे पित्तवायुजे ॥
प्राणदेयं सितां दत्त्वा चूर्णमानाच्चतुर्गुणाम्।
अम्लपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे ॥
अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम्।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥ १८ ॥

काङ्कायनमोदकः।

पथ्यापञ्चपलान्येकमजाज्या मरिचस्य च।
पिप्पलीपिप्पलीमूल-चव्य-चित्रकनागराः ॥
पलाभिवृद्धाः क्रमशो यवक्षारपलद्वयम्।
भल्लातकपलान्यष्टौ कन्दस्तु द्विगुणो मतः।
द्विगुणेन गुडेनैषां वटकानक्षसम्मितान्।

---

चिकित्सिते पठ्यते, तत्र चातुर्जातसुधीरयोः प्रत्येकं कर्षमानमुक्तं, यथा—"तालीश-पत्रमरिच-चव्यानाम् पलं पलम्। कृष्णा तन्मूलयोर्द्वे द्वे पले शुण्ठीपलत्रयम्। चतुर्जातसुधीरयोः कर्षांशं सूक्ष्मचूर्णितम्। गुडेन वटकान् कृत्वा त्रिगुणेन सदा भजेत्। मद्ययूषरसारिष्टमस्तुपेयापयोऽनुपः। वातश्लेष्मात्मकां छर्दिं ग्रहणीं पार्श्वहृद्रुजाम्। ज्वरश्वयथुपाण्डुत्वगुल्मपानात्ययार्शसाम्। प्रसेकपीनसश्वासकासानाशु नियच्छति। अभयां नागरस्थाने दद्यादत्र विड्ग्रहे। छर्द्यादिषु च पैत्तेषु चतुर्गुणसितान्विता। चूर्णेन गुडिका कार्या गुडेन सितयापि वा। परं हि वह्निसम्पर्काल्लघिमानं भजन्ति ताः॥" इति। शुण्ठ्याः स्थाने इत्यादि।—चूर्णमानादिति।—समुदितचूर्णमानात्। केचित्तु गुडमानाच्चतुर्गुणमिति पठन्ति, तत्र, वाग्भटविरोधात्, प्रभूतमधुरत्वप्रसङ्गाच्च। अत्र दोषभेदेनानुपानमात्राभेदमाह, अनुपानमित्यादि॥ १८॥

पथ्यादौ।—मरिचस्यैतत्पलैकमिति सम्बध्यते। तेन मरिचस्य एकपल-

सलेनं भक्षयेत् प्रातस्तक्रमस्यौऽनु वा पिबेत् ॥
मन्दाग्निं दीपयत्येष ग्रहणीपाण्डुरोगनुत् ॥
काङ्कायनेन शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना ।
भिषग्जितमिति प्रोक्तं श्रेष्ठमर्शोविकारिणाम् ॥ १८ ॥

माणिभद्रो मोदकः ।

विडङ्गसारामलकाभयानां पलं पलं स्यात् त्रिवृतात्रयञ्च ।
गुड़स्य षड्द्वादशभागयुक्ता मासेन त्रिंशद्गुड़िका विधेयाः ॥
निवारणे यक्षवरेण दृष्टः स माणिभद्रः किल शाक्यभिक्षवे ।
अयं हि कासक्षयकुष्ठनाशनो भगन्दरप्लीहजलोदरार्शसाम् ।
यथेष्टचेष्टान्नविहारसेवी भवेन वृद्धस्तरुणो भवेच्च ॥ २० ॥

स्वल्पशूरणमोदकः ।

मरिचमहौषधचित्रकशूरणभागा यथोत्तरं द्विगुणाः ।
सर्वसमा गुड़भागः सेव्योऽयं मोदकः प्रसिद्धफलः ॥
ज्वलनं ज्वलयति जाठरमुन्मूलयति शूलगुल्मगदान् ।
निःशेषयति श्लीपदमर्शांसि नाशयत्याशु ॥ २१ ॥

बृहच्छूरणमोदकः ।

शूरणषोड़शभागा वह्नेरष्टौ महौषधस्यातः ।

---

मित्यर्थः । यथाभिरुद्धा क्रमश इति ।—यथाक्रमं पलैन बुद्धाः । कन्दस्तु द्विगुण इति ।—षोडशपलम् । द्विगुणेन गुडेनेति ।—समुदितचूर्णापेक्षया । भक्षयेदित्यादिनेति ।—कर्षमितान्, व्यवहारस्तु माषकैरिति ॥ १९ ॥

विडङ्गसारेत्यादौ—त्रिवृतात्रयमिति ।—त्रिवृतायाः पलत्रयम्, गुडस्य च षट्पलानि । द्वादशभागयुक्ता इति ।—द्वादशपलरूपविभागेन युक्ता कृता । मासेनेति ।—मासेनोपयोज्यमिति शेषः । अयमर्थः,—द्वादश पलानि विभज्य मासेनोपयोज्यम् । त्रिंशद्गुडिकाः समभागेन कुर्यात् इति तेन एकैकगुडिका चतुस्त्रिकाधिक नवमाषकोन्मित कर्षमाना भवति । कर्ष १, माष ८, रति ६ । व्यवहारस्तु दशभिरष्टाभिर्वा माषकैरिति । निवारणे इत्यत्र गुड़शालामिति शेषः । देवः इन्द्रः ॥ २० ॥

स्वल्पशूरणमोदकः स्पष्टः ॥ २१ ॥

च—१०

अर्द्धेन भागयुक्तिर्मरिचस्य च ततोऽपि चार्द्धेन ॥
त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्नानाम् ।
भागा महौषधसमा दहनांशा तालमूली च ॥
भागाः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि ।
भृङ्गेले मरिचांशे सर्वाण्येकत्र सञ्चूर्ण्य ॥
द्विगुणेन गुडेन युतः सेव्योऽयं मोदकः प्रकामधनैः ।
गुरुद्रव्यभोज्यरहितैश्चितरैरुपद्रवं कुर्यात् ॥
भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन ।
भीमस्य मारुतेरपि येन तौ महाग्नी जातौ ॥
अग्निबलवृद्धिहेतुर्न केवलं शूरणो महावीर्यः ।
प्रभवति शस्त्रक्षाराग्निभिर्विनाप्यर्शसामेषः ॥
श्वयथुश्लीपदजिद् ग्रहणीमपि कफवातसम्भूताम् ।
नाशयति वलीपलितं मेधां कुरुते वृषत्वञ्च ॥
हिक्काश्वासकासं सराजयक्ष्मप्रमेहांश्च ।
प्लीहानश्चायोग्यं हन्ति च रसायनं पुंसाम् ॥ २२ ॥

शूरणपिण्डी ।

चूर्णीकृताः षोडश शूरणस्य भागास्ततोऽर्द्धेन च चित्रकस्य ।
महौषधाद्द्वौ मरिचस्य चैको गुडेन दुर्नामजयाय पिण्डी ॥

---

शूरणषोडशभागा इत्यादौ—"त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्नानां भागा महौषधसमा" इति।—त्रिफलादीनां प्रत्येकं महौषधसमा भागाः, त्रिफलायाश्च प्रत्येकम्। कणा समूला इति।—पिप्पल्याः फलं मूलञ्चेत्यर्थः। समूला इत्यत्र स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् इत्यादिना पुंवद्भावो नोद्भावनीयः। तालीशपदं स्त्रीप्रत्ययान्ते परतो विधानात्। विशेषणत्वादस्य पूर्वनिपातोऽपि नोद्भावनीयः, त्रिफलाद्यवयवस्यैव विशेष्यत्वात्। दहनश्चित्रकः। भृङ्गेले मरिचांशे प्रत्येकं, भृङ्गं गुडत्वक्। गुरुद्रव्यभोज्यरहितैश्चितरैरिति।—प्रकामधनप्रतियोगितया दरिद्रेषु। उपद्रवमिति।—व्यापदमिति ॥ २२ ॥

पिण्डशां गुड़ो मोदकवत् पिण्डत्वापत्तिकारकः ॥ २३ ॥

व्योषाद्यं चूर्णम्।

व्योषाब्धयुष्करविड़ङ्गतिलाभयानाम्
चूर्णं गुड़ेन सहितन्तु सदोपयोज्यम्।
दुर्नामकुष्ठगरशोथशकृद्विबन्धा-
नग्नेश्चयत्यबलतां क्रिमिपाण्डुताञ्च ॥ २४ ॥

समशर्करं चूर्णम्।

शुण्ठीकणामरिचनागदलत्वगेलम्
चर्णीकृतं क्रमविवर्द्धितमूर्द्धमन्त्यात्।
खादेदिदं समसितं गुदजाग्निमान्द्य-
कासारुचिश्वसनकण्ठहृदामयेषु ॥ २५ ॥

लवणोत्तमाद्यं चूर्णम्।

लवणोत्तमवह्निकलिङ्गयवांश्चिरविल्वमहापिचुमर्दयुतान्।
पिब सप्तदिनं मथितालुलितान् यदि मर्दितुमिच्छसि पायुरुजाम्
॥ २६ ॥

---

चूर्णीकृता इत्यादि।—वाग्भटस्य। मोदकवदिति—पिण्डश इत्यर्थः ॥ २३ ॥

व्योषाद्यीत्यादि।—चव गुडसैकभागत्वं चूर्णयोगत्वात् इति। त्रिफलया योगो विभीतकामलकयोर्वान् गुडिकापि क्रियते, यदाह वाग्भटः—"गुडव्योषवरावेल्ल-तिलारुष्करचित्रकैः। पर्यांसि हन्ति गुडिका त्वग्विकारश्च शीलिता ॥" इति ॥२४॥

शुण्ठीत्यादि।—नागं नागकेशरचूर्णम्; दलं तेजपत्रम्। क्रमविवर्द्धितमूर्द्ध-मन्त्यादिति।—अन्त्यस्थितद्रव्यादारभ्य तदुपरितनद्रव्यमेकविवृद्धिक्रमेण वर्द्धयेदित्यर्थः। समसितमिति।—मिलित सर्वचूर्णसमशर्करम्; श्वसनमिति—श्वासः ॥ २५ ॥

लवणोत्तमेत्यादि।—वाग्भटस्य। लवणोत्तमं सैन्धवम्, वह्निश्चित्रकः, कलिङ्ग-यव इन्द्रयव.। चिरविल्वः करञ्जः, तस्य मूलम्; यत् पुनरस्य सुश्रुते फलग्रहण मुक्त तच्छोधने ज्ञेयम्। महापिचुमर्दः पर्वतनिम्बः, निम्बसदृशस्तत्पत्रो हस्व, वाहांग्रनीति लोकख्यातः। ग्रामनिम्ब एव पर्वतभवत्वेन पर्वतनिम्ब इत्याहुरन्ये, अस्य त्वग् ग्राह्या। मथितालुलितानिति—तक्रेणालोड़ितान् ॥ २६ ॥

श्रीबाहुशालो गुडः ।

त्रिवृत् तेजोवती दन्ती श्वदंष्ट्रा चित्रकं शटी ।
गवाक्षीमुस्तविश्वाह्व-विडङ्गानि हरीतकी ॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात् ।
षट्पलं हवुदारस्य शूरणस्य तु षोडश ॥
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम् ।
पूतन्तु तं रसं भूयः क्वाथ्येभ्यस्त्रिगुणो गुडः ॥
लेह्यं पचेत् तु तं तावद् यावद्दर्वीप्रलेपनम् ।
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत् ॥
त्रिवृत्तेजोवतीकन्द-चित्रकान् द्विपलांशिकान् ।
एलात्वक्मरिचञ्चापि गजाह्वाञ्चापि षट्पलाम् ।
द्वात्रिंशतं पलान्येव चूर्णं दत्त्वा निधापयेत् ।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः ॥
पञ्च गुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम् ।
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च ॥
दीपयेद् ग्रहणीं मन्दां यक्ष्माणञ्चापकर्षति ।
अपीनसं प्रतिश्यायमाढ्यवातं तथैव च ॥

---

त्रिवृत् तेजोवतीत्यादि ।—क्वचित् तमस्य । तेजोवती चवी, एवं सर्वत्र । यत्र पृथग्द्वी तेजोवती चास्ति तत्र परं तेजोऽन्या ज्योतिष्मती गृह्यते, यथा गुग्गुलुपञ्चतिक्ते घृते । गवाक्षी गोरक्षकर्कटी, तस्या मूलम्, एवं सर्वत्र । न तु गवाक्षी श्वेतापराजिता, क्वापि टीकाकृद्भिरव्याख्यातत्वात् । क्वाथ्येभ्यस्त्रिगुणो गुड इति ।—एकनवतिपलमात्रक्वाथ्यापेक्षया त्रैगुण्येन गुडस्य त्र्यधिकद्विशतिपलाधिकशतपलं भवति । कन्दः शूरणः । विडङ्गादीनां द्विपलत्वम्, एलादीनाञ्च षट्पलत्वम् । यद्यपि निर्देशस्य द्रव्यप्रधानत्वादेव प्रत्येकं सिध्यति, तथापि द्वात्रिंशत्पलानीति यदुक्तं तत् क्वचित् द्रव्यप्रधाननिर्देशेऽपि प्रत्येकता नाप्नोतीति सूचनार्थम् । तेन केचिदेकगुग्गुली त्रिकटोश्चूर्णं पञ्चपलमात्रमिदम् मिलित्वैव त्रिकटुचूर्णं पञ्चपलमिलितम् इत्यत्र-

अयं सर्वगदेष्वेव कल्याणो लेह उत्तमः।
दुर्नामारिरयश्चास्य दृष्टो वारसहस्रशः॥
भवन्त्येनं प्रयुञ्जाना शतवर्षं निरामयाः।
आयुषो दैर्घ्यजननो बलीपलितनाशनः॥
रसायनवरश्चैव मेधाजनन उत्तमः।
गुड़ः श्योनाकशालोऽयं दुर्नामारिः प्रकीर्त्तितः॥
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुड़ः।
क्षिप्तश्च निश्चलस्तिष्ठेत् पतितस्तु न शीर्यते॥
यदा दर्वीप्रलेपः स्याद् यावदा तन्तुलीभवेत्।
एष पाको गुड़ादीनां सर्वेषां परिकीर्त्तितः॥
सुखमर्दः सुखस्पर्शो गुड़ः पाकमुपागतः।
पीड़ितो भजते मुद्रां गन्धवर्णरसान्वितः॥ २८॥

गुड़भल्लातकः।

भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत्।
पादशेषे रसे तस्मिन् पचेद्गुड़तुलां भिषक्॥

---

शारश्चिरेति बोध्यम्। ज्ञानिसत पलान्येव पाठोऽन्यथा च्छन्दोभङ्गः स्यात्। क्वचिच्च शाविपश पलान्येवमिति पाठः। अदीनकमिति प्रति-श्वासमिदं। पौनशे च प्रति-श्याय इति पाठोऽपि स एवार्थः। अत्र अनुपानमनुक्तमपि वातकफे कोष्णाम्बु, पित्ते क्षीरादिकं ज्ञेयम्। न चात्र भल्लातकमवेशादुष्णजलम् अनुक्तमिति वक्तनीयम्; यतो भल्लातकस्नेह एव उष्णजलनिषेधो न भल्लातकशोषमात्रे। तथा चोक्तम्— "उष्णोदकानुपानन्तु स्नेहानामथ शस्यते। ऋते भल्लातकस्नेहात् तत्र तोयन्तु शीतलम्॥" इति। वृद्धास्तु शीतलतोयेन व्यवहरन्ति। तोयपूर्णे यदा पात्र इत्यादि।—गुड़-पाकलक्षणम्। वृद्धास्तु तोयपूर्णपात्रोपरि कोमलकदलीपत्रं दत्त्वा, गुड़स्य मुद्रा-पाकं निरूपयन्ति। न प्लवते—न भवति पतितः। पात्राधोगतोऽपि न शीर्यते—न विशीर्णतां याति॥ २८॥

गुड़भल्लातके—भल्लातकसहस्रे द्वे इति।—भल्लातकानां सहस्रद्वयम्, एवं सर्वत्र

भल्लातकसहस्रार्द्धं छित्वा तत्रैव दापयेत्।
सिद्धेऽस्मिंस्त्रिफलाव्योष-यमानीमुस्तसैन्धवम्॥
कर्षांशमन्वितं दद्यात् त्वगेलापत्रकेशरम्।
खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः॥
कुष्ठार्शःकामलामेह-ग्रहणीगुल्मपाण्डुताः।
हन्यात् प्लीहोदरं कास-क्रिमिरोगभगन्दरान्।
गुड़भल्लातको ह्येष श्रेष्ठस्त्वर्शोविकारिणाम्॥ २०॥

अपरो गुड़भल्लातकः।

दशमूल्यमृता भार्गी श्वदंष्ट्रा चित्रकं शटी।
भल्लातकसहस्रञ्च पलांशं क्वाथयेद् बुधः॥
पादशेषे जलद्रोणे रसे तस्मिन् विपाचयेत्।
दत्त्वा गुड़तुलामेकां लेहीभूतं समुद्धरेत्॥
माक्षिकं पिप्पलीं तैलमौरवूकञ्च दापयेत्।
कुड़वं कुड़वञ्चात्र त्वगेला मरिचं तथा॥

---

पलादिमानमनिर्द्दिष्टे; यथा तैलमानसैवं भल्लातकास्यौनि विंशतिरिति। यत्र तु पलादि श्रुतिस्तत्र तथैव व्यवहर्त्तव्यम्। यथा बाहुशालगुडे; "पलान्यष्टावरुष्करात्" इति। एवं हरीतक्यादावपि ज्ञेयम्। भल्लातकसहस्रार्द्धं छित्वेति—द्विधा कृत्वा गुडसहितकाथ एव पक्तव्यं हरीतकीवत्। त्रिफलादीनाञ्च प्रत्येकमेव कर्षमानम्॥ २०॥

द्वितीयगुडभल्लातके—पलांशमिति।—दशमूल्यादिभिः सम्बध्यते। भल्लातकसहस्रञ्च पूर्ववद्दाक्तिमानात्। क्वाथयेदिति।—पूर्वोक्तभल्लातकगुडसंवादात्, अत्रापि जलद्रोणं किम्वा क्वाथ्यद्रव्येभ्योऽष्टगुणे जले। माक्षिकं मधु। औरुवूकञ्च तैलमेरण्डतैलम्, एतञ्च प्रथमतः चित्वैव गुडः पक्तव्यः। सिद्धे मधु पिप्पलीचूर्णादि प्रक्षेप्यम्। एकः कुडव शब्दो माक्षिकादिभिः सम्बध्यते; अपरश्च त्वगेलादिभिः। माक्षिकैरण्डतैलयोश्च द्रवत्वात् प्रत्येकमष्टौ पलानि। त्वगेलामरिचादीनान्तु कुडवं मिलित्वेति केचित्; प्रत्येकमित्यन्ये। एतदेव युक्तं द्रव्यप्रधानत्वात् निर्द्देशस्य। आयुर्वेदसारेऽप्युक्तम्—"भल्लातकसहस्रं हि शटीदहनगोक्षुरान्। दशमूलामृताभार्गीः पलांशाः संविपाच्य च॥

चार्शः कासमुदावर्त्तं पाण्डुत्वं शोथमेव च।
नाशयेदग्निसादञ्च गुड़भल्लातकः स्मृतः ॥ ३१ ॥

चव्याद्यं घृतम्।

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च।
यमानीं पिप्पलीमूलमुभे च विड़सैन्धवे ॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्।
गुदवङ्क्षणशूलञ्च घृतमेतदपोहति ॥ ३२ ॥

व्योषाद्यं घृतम्।

व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि।
साधितं पिबतः सर्पिः पतन्त्यर्शांस्यसंशयम् ॥ ३३ ॥

उदकषट्पलं घृतम्।

सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके।
समक्षीरं घृतप्रस्थं स्वरार्शःप्लीहकासनुत् ॥ ३४ ॥

सिंह्यमृतं घृतम्।

पचेद्धारिद्रसुद्रौणं कण्टकार्य्यमृतामृतम्।

---

दत्वा गुड़तुला तत्र लेहवत् साधु साधयेत्। पिप्पल्याः मधुन, सिद्धे तैलश्चो-दुकस्य च। प्रत्येकं कुड़वं दत्वा त्वगेलामरिचस्य च। निश्चितं भक्षयेन्नित्यमर्शः-कासोदरापहम् ॥" इति। अत एव आयुर्वेदसारसंग्रहात् "कुड़वार्द्धं त्वगेलामरिचम्" इति पाठान्तरमपि प्रतिपेक्षणीयम् ॥ ३१ ॥

चव्यमित्यादि।—चरकस्य। कुस्तुम्बुरु धनीयकम्। जाते दध्नीति—मृजाते। अत जैज्जट—"स्वरसक्षीरमाड़ल्ये पाको यत्रेरितः क्वचित्। चतुर्गुणं जलं तत्र शैथ्या-धानार्थमावपेत् ॥" इत्याहुः। परिस्रवमिति गुदपरिस्रावम् ॥ ३२ ॥

व्योषाद्यं घृतं स्पष्टम् ॥ ३३ ॥

उदकषट्पलं घृतं स्पष्टम् ॥ ३४ ॥

तत्राग्नित्रिफलाव्योष-पूतिकत्वक्कलिङ्गकैः ॥
सकाश्मर्य्यविडङ्गैस्तु सिद्धं दुर्नाममेहनुत् ।
घृतं सिंहामृतं नाम बोधिसत्त्वेन भाषितम् ॥ २५ ॥

### पिप्पल्याद्यं तैलम् ।

पिप्पलीं मधुकं विल्वं शताह्वां मदनं वचाम् ।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च ॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् ।
अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ॥
पिच्छास्रावं गुदे शोथं वातवर्चोविनिग्रहम् ।
उत्थानं बहुशो यच्च जयेच्चैवानुवासनात् ॥ २६ ॥

---

पचेदित्यादौ ।—कण्टकारीगुडूच्योर्मिलित्वा शतं, निर्देशस्य भागप्रधानत्वात् । अन्ये तु—द्वन्द्वमूर्धस्थदर्शनात् प्रत्येकमेव शतमाहुः । चतुर्द्रोणे द्रोणावशेषं, अत एव घृताढकं बोध्यम्; चतुर्गुणेन पाकस्योत्सर्गसिद्धत्वात् । प्रस्थपक्षे तु षोडशगुणत्वमेव पाकस्य । अग्निरत्र चित्रकः; पूतीकस्य करञ्जस्य त्वक्, काश्मर्य्यं गाम्भारीफलम् । कल्कस्य तु स्नेहापेक्षया पादिकत्वमेव । बोधिसत्त्वेनेति ।—योगिविशेषेण, अन्ये तु लोकनाथेनेत्याहुः ॥ २५ ॥

पिप्पल्याद्यतैले—विल्वं विल्वशलाटुः; पुष्कराख्यमिति—पुष्करमूलं, तदभावे कुष्ठमेव द्विगुणं ग्राह्यम् । अत्र द्रवान्तरस्यानिर्दिष्टत्वात् त्रिगुण एव पाक इति केचित् । अन्ये तु—चतुर्गुणपाकस्योत्सर्गसिद्धत्वात् जलमप्यत्र द्विगुणमिच्छन्ति । अपरे तु—"क्षीरदध्यारनालेषु पाको यत्रेरितः क्वचित् । जलं चतुर्गुणं तत्र वीर्य्याधानार्थमावपेत् ॥" इति वचनात् जलमपि चतुर्गुणमाचक्षते, युक्तं चैतत्, यदाह वृद्धसुश्रुतः—"शटीपुष्करकुष्ठाह्वामदनामरदारुभिः । शताह्वाकुष्ठयष्ट्याह्ववचाबिल्वहुताशनैः ॥ सुपिष्टैर्द्विगुणं क्षीरं तैलं तोयचतुर्गुणम् । पक्वा बस्तौ निधातव्यं मूढवातानुलोमनम् ॥" इति ॥ २६ ॥

## रक्तार्शश्चिकित्सा ।

रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक् ।
दुष्टास्रे निगृहीते तु शूलानाहासृगामयाः ॥ ३७ ॥
लाजैः पेया पीता चुक्रिकाकेशरोत्पलैः सिद्धा ।
सा हन्त्यस्रस्रावं तथा बलापृश्निपर्णीभ्याम् ॥ ३८ ॥
शक्राह्वायः सविल्वो वा किंवा विल्वशलाटवः ।
योज्या रक्तार्शसैस्तद्वज्ज्योत्स्निकामूललेपनम् ॥ ३९ ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासाद् गुदजाः शाम्यन्ति रक्तवहाः ॥ ४० ॥

---

रक्तार्शसां चिकित्सामाह, रक्तार्शसामित्यादि ।—उपेक्षेत, न तु स्तम्भयेत् । निगृहीते इति सप्तमी । असृग्गदा इति शोणितरोगाः ॥ ३७ ॥

लाजै पेयेत्यादि ।—चुक्रिका चाङ्गेरी, केशरं नागकेशरम् । तथा बलापृश्निपर्णीभ्यामिति द्वितीयो योगः । अत्राप्यनेन लाजैः पेयेत्यनुवर्त्तते ॥ ३८ ॥

शक्राह्वाय इत्यादि ।—शक्रः कुटजः, उक्तं हि रत्नकोषे—"इन्द्रः शक्रपर्य्यायो वत्सको गिरिमल्लिका" इति । तद्वल्कलक्वाथः, उक्तं हि चरके—"कुटजत्वङ्निर्यूहः सनागरः स्निग्धो रक्तसङ्ग्रहणः" इति । वाग्भटेऽप्युक्तं—"सकफे प्रपिबेत् पाक्यं शुण्ठीकुटजवल्कलम्" इति । निश्चलस्तु इन्द्रयवक्वाथ इत्याह । सनागरं शुण्ठी-नागरं, स च प्रक्षेपविधिनेति केचित् । अन्ये तु—उक्तवाग्भटवचनसंवादात् शुण्ठीकुटजवल्कलयोः क्वाथ इत्याहुः । विल्वशलाटव इत्यत्रापि सनागर इति योज्यम् । अन्ये तु—केवलं विल्वं पिष्टा पेयमित्याहुः । ज्योत्स्निका कोषातकी घोषकभेदः ॥ ३९ ॥

नवनीततिलाभ्यासादित्यादि ।—धौतमथशमीतम् । अत्र केशरं पद्मकेशरं, रक्तस्तम्भनत्वात् । यदाह वाग्भटः—"शर्कराम्भोजकिञ्जल्क-सहितं सह वा तिलैः । अभ्यस्य रक्तगुदजान् नवनीतं नियच्छति ॥" इति । आधुनिकास्तु नागकेशरेण व्यवहरन्ति । दधिसरस्य मथितं तक्रं दधिसरमथितम् ; उक्तं हि जतूकर्णे—"नवनीत तिलैर्युक्तं शर्करा केशरैर्वा । नवनीतं घृतं वाज्यं दध्नो वा सुजितः सरः ॥" इति ॥ ४० ॥

समङ्गोत्पलमोचाह्व-तिरीटतिलचन्दनैः ।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितापहम् ॥ ४१ ॥

कुटजलेहः ।

कुटजत्वक्पलशतं जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥
वस्त्रपूतं पुनः क्वाथं पचेल्लेहत्वमागतम् ।
भल्लातकं विडङ्गानि त्रिकटु त्रिफलां तथा ॥
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ।
वचामतिविषां बिल्वं प्रत्येकञ्च पलं पलम् ॥
त्रिंशत्पलानि गुडस्य चूर्णीकृत्य निधापयेत् ।
मधुनः कुडवं दद्याद् घृतस्य कुडवं तथा ॥
एष लेहः शमयति चार्शो रक्तसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
ये च दुर्नामजा रोगास्तान् सर्वान् नाशयत्यपि ।
अम्लपित्तमतीसारं पाण्डुरोगमरोचकम् ॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ।
अनुपानं घृतं दद्यान्मधु तक्रं जलं पयः ।

---

समङ्गेत्यादि।—समङ्गा वराहक्रान्ता, उत्पलं नीलोत्पलम्, मोचकं शाल्मली-वेष्टकम्; तिरीटं पट्टिकालोध्रम्; एषां कल्कश्छागक्षीरयुक्तो पेय। चक्रं हि वाग्भटे—"लोध्रं तिलं मोचरसं समङ्गां चन्दनोत्पलम्। पाययित्वाजदुग्धेन शाल्यन्नेनैव भोजयेत्॥" इति। अन्ये तु—क्षीरपरिभाषया छागक्षीरं पञ्च पेय-मित्याहुः ॥ ४१ ॥

कुटजत्वक्पलशतमित्यत्र केचित् पलस्थाने फलमिति पठन्ति, तन्मते—कुटजत्वक्-फलयोर्मिलित्वैव पलशतम्। चन्द्राटेऽष्टभागावशिष्टमित्यत्र चतुर्भागावशिष्टमिति दृश्यते। अत्र घृतकुडवं प्रथमं दत्त्वा लेहः पक्वः, सिद्धे शीते भल्लातकाद-

रोगानीकविनाशाय कौटजो लेह उच्यते ॥ ४२ ॥

कुटजरसक्रिया ।—

कुटजत्वचो विपाच्यं पलशतमार्द्रं महेन्द्रसलिलेन ।
यावत् स्यादरसं तद्द्रव्यं स रसस्ततो ग्राह्यः ॥
मोचरसः ससमङ्गः फलिनी पलांशिभिस्त्रिभिस्तैश्च ।
वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम् ॥
पूतोत्क्वथितः सान्द्रः स रसो दर्वीप्रलेपनो ग्राह्यः ।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम् ॥
छागलीपयसा युक्ता पेया मण्डेन वा यथाग्निबलम् ।
जीर्णौषधश्च शालीन् पयसा च्छागेन भुञ्जीत ॥
रक्तार्शांस्यतीसारं शूलं सासृग्रुजो निहन्त्याशु ।
बलवच्च रक्तपित्तं रसक्रियैषा ह्युभयभागम् ॥ ४३ ॥

चूर्णप्रदेयं मधुना कुडवोऽष्टौ पलानि, घृतकुडवोऽप्येवम्। कुडवद्वैगुण्यन्तु पूर्वमेव स्थापितमिति ॥ ४२ ॥

कुटजत्वच इत्यादि ।—पल शतस्य तुला, तेन "तुलाद्रव्ये जलद्रोणः" इति वचनात् द्रोणमात्रं जलं ग्राह्यम् । तत्र "यावत् स्यादरसम्" इति वचनाच्चतुर्भागावशिष्टं क्वाथ्यम्, उक्तं हि—"चतुर्भागजलो प्रायो द्रव्य शतस्य भवेत्" इति । अन्ये तु तन्त्रान्तरीययोगान्ते "द्रोणोऽम्भस पलशतं विपाच्य कुटजत्वचोऽष्टभागस्थं" इत्यष्टभागावशिष्टदर्शनात्, अत्राप्यष्टभागशेष क्वाथो ग्राह्य इत्याहुः । व्यवहारस्तु पूर्वेणैव । महेन्द्रसलिलमान्तरीक्षजलम्, तदभावे भूमिस्थमपि तद्गुणकारि ग्राह्यम् । यदुक्तम्—"किञ्चिदनुव्यक्तानुरसं तनु लघु शीतं सुसुगन्धि सुरसञ्च । अनभिष्यन्दि च यत् तेन क्षितिस्थमैन्द्रवज्ज्ञेयम् ॥" फलिनी प्रियङ्गुः । दर्वीप्रलेपनो ग्राह्य इति ।—दर्वीप्रलेपावस्थायामवतारणीय इत्यर्थः । अत्र रसक्रिया लेहरूपैव, वाग्भटेऽप्युक्तम्—"पक्वावलेहं लीढ्वा च तद्यथाग्निबलं पिबेत्" इत्यादि । उभयभागमिति ।—यद्यपि युगपदूर्ध्वाधःप्रवृत्तरक्तपित्तस्यासाध्यत्वं, तथाप्युभयभागं हन्तीत्यस्य क्रमेणोर्ध्वगमधोगञ्च हन्तीत्यर्थः, तथाप्यस्य योगस्य याप्यत्वात् तत्प्रतिस्थापनमेव निहन्त्यादित्यस्यार्थो ज्ञेयः । अन्ये तु—योगप्रभावैरचिन्त्यत्वादसाध्यमपि हन्तीत्यर्थमाहुः ॥ ४३ ॥

कुटजाद्यं घृतम् ।—

कुटजफलवल्ककेशर-नीलोत्पललोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं शूलरक्तार्शसां भिषजा ॥ ४४ ॥

सुनिषण्णक-चाङ्गेरीघृतम् ।—

अवाक्पुष्पी बला दार्वी पृश्निपर्णी त्रिकण्टकम् ।
न्यग्रोधोडुम्बराश्वत्थ-शुङ्गाश्च द्विपलोन्मिताः ॥
कषाय एष पेयास्तु जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥
कलिङ्गं शाल्मलीपुष्पं वीरा चन्दनमञ्जनम् ।
कट्फलं चित्रकं मुस्तं प्रियङ्ग्वतिविषे स्थिरा ॥
पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका ।
विल्वं मोचरसः पाठा भागाः स्युः कार्षिकाः पृथक् ॥
चतुःप्रस्थशृतं प्रस्थं कषायमवतारयेत् ।
त्रिंशत् पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः ॥
सुनिषण्णक-चाङ्गेर्योः प्रस्थौ द्वौ स्वरसस्य च ।
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥

---

कुटजाद्यघृते कुटजस्य फलं वल्कलञ्च ; [illegible] [illegible]. [illegible], [illegible] पाठः । [illegible] [illegible] [illegible] ॥ ४४ ॥

अवाक्पुष्प्यादि ।—अवाक्पुष्पी [illegible]। [illegible] [illegible] [illegible] [illegible] मिलिता [illegible] कार्य्यं भवति। तथा सुनिषण्णक-चाङ्गेर्योर्मिलित्वा [illegible] । वीरा [illegible] [illegible]। [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] । [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] भवति, [illegible] [illegible] [illegible] वचन, [illegible] [illegible] भाग. [illegible] एव भवति, [illegible] [illegible] [illegible] [illegible] । [illegible]— "[illegible] [illegible]" [illegible] [illegible] [illegible] [illegible]।

उत्थाने चातिबहुशः शोथशूलगुदामये।
मूत्रग्रहे मूढवाते मन्दाग्नावरुचावपि॥
प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्द्धनम्।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम्॥ ४५॥

क्षारः।

प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्वकम्।
कालमुष्ककमाहृत्य दग्ध्वा भस्म समाहरेत्॥
आढकस्त्वेकमादाय जलद्रोणे पचेद्भिषक्।
चतुर्भागावशिष्टेन वस्त्रपूतेन वारिणा।
शङ्खचूर्णस्य कुडवं प्रक्षिप्य विपचेत् पुनः।

---

प्रथमो विरेको द्विगुणाधिक" इत्यपि वचनं द्रवद्वैगुण्यपरिभाषानुवर्तकत्वेनैव ज्ञेयम्। अतएव हरा इत्यवसंख्याविरपि द्रवद्वैगुण्यमनुमतम्। किञ्च परिभाषासिद्धमपि द्रवद्वैगुण्यं यदिह निर्दिशति, तद्द्रवद्वैगुण्यपरिभाषाया अनित्यतापि भवतीति सूचयति। तेन कुडवमध्यादिकं यद्दीयते द्वैगुण्यं, न कुडवादर्वाक् द्रव्यं, सिद्धो भवति। अन्ये तु—शास्त्रार्थप्रतिपादन-बुद्धिकार्यमिदं वचनमित्याहुः। किञ्चात्र विशेषणतया यद्यपि द्विगुणाधिकानीति निर्देशो युज्यते, तथापि प्रत्येकविशेषणतया पुंलिङ्गस्य एकवचनस्य च निर्देशः समर्थनीयः। उत्थाने चातिबहुश इति।—प्रवाहिकातिसरणे॥ ४५॥

क्षारमाह क्षारपाकविधिमाह, प्रशस्त इत्यादि।—कालमुष्ककः क्षपणो घण्टापाटलिः, स एव मोक्षकः, यदाह विश्वामित्रः—"मुष्ककः क्षारवृक्षो मोक्षकश्चैव च। पीतोऽप्योऽपि वर्णेषु क्षपणः प्रकीर्तितः॥" इति। तत्र च काण्डं तिलनालैर्दग्ध्वा भस्म कर्तव्यम्, इत्यमेव सुश्रुताभिधानम्। आढकमिति।—भस्मन आढकपरिमाणम्। जलद्रोण इति।—द्वैगुण्याद्द्विद्रोणपरिमाणे; अन्ये तु—अत्र द्वैगुण्यं नेच्छन्ति। शङ्खचूर्णस्य कुडवमनुपानं, षोडशांशिकत्वादक्षारस्य। दर्विदग्धेति

प्रायस्त्रिभागशिष्टेऽस्मिन्नच्छपैच्छिल्यरक्तता।
मस्त्रायते तदास्राव्य चाराम्भो ग्राह्यमिष्यते॥
तुर्य्यांशाष्टमकेन षोड़शभवेनांशेन संव्यूहिमो।
मध्यः श्रेष्ठ इति क्रमेण विहितः चारोदकाच्छङ्खकः॥
नातिसान्द्रो नातितनुः चारपाक उदाहृतः।
दुर्नामकादौ निर्दिष्टः चारोऽयं प्रतिसारणः॥
पानीयो यस्तु गुल्मादौ तं वारानेकविंशतिम्।
स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे॥ ४७॥

---

त्रिभागशिष्ट व्याख्याम् ? इत्याह—प्रायस्त्रिभाग इत्यादि। आस्राव्येति।—वस्त्रेण गालयित्वा। इदानीं प्रक्षेप्यशङ्खचूर्णस्य मानभेदेन प्रतिसारणीयचारस्य मृद्वादिभेदमाह—तुर्य्येत्यादि। चारोदकात् इति।—त्रिभागावशिष्टचारोदकमपेक्ष्य शङ्खकः शङ्खचूर्णं यदि तुर्य्येण चतुर्थांशेन विहितः प्रयुक्तो भवति, तदा संव्यूहिम इति मृदुचारो भवति। संव्यूहिम इति मृदुचारसंज्ञा। अष्टमकेनाष्टमांशेन यदि शङ्खचूर्णं दीयते, तदा मध्यः चारः, षोड़शभवेनांशेन यदि शङ्खचूर्णं दीयते, तदा श्रेष्ठ चार इत्यर्थः। यद्यपि संव्यूहिमे चारोदकाच्चतुर्थांशेन दीयमाने शङ्खचूर्णं मध्यश्रेष्ठचारे दीयमानशङ्खचूर्णापेक्षया प्रभूतमेव, तथापि चारस्य मृदुत्वमेव भूयसा शङ्खचूर्णेन चारोदकस्य तीक्ष्णताया अभिभूतत्वात्। पानीयचारे तु न शङ्खचूर्णयोग इति तत्र नैते भेदाः। प्रतिसारणीयचारपाकलक्षणं तथा सविषयमाह—नातिसान्द्र इत्यादि। प्रतिसारण इति—मर्दनप्रयोजकः। पातव्यचारोदकस्य विधानं विषयञ्चाह, पानीय इत्यादि।—पानीय इति पातव्यो यः चारः, तं चारं षड्गुणे चतुर्गुणे वा जले पाकं विनैव एकविंशतिवारान् प्रतिस्राव्य चारोदकं ग्राह्यम्। अन्ये तु चतुर्गुणे जले पक्वा चतुर्थावशिष्टं कृत्वा कम्बलपटाध्येै चारोदकम् एकविंशतिवारान् परिस्रावयेदेव न प्रतिसारणीयचारवत् अस्य पुनःपाक इति तान् पर्य्याये इत्याह। विश्वामित्रोऽप्याह,—"पानाय भावनार्थाय परिस्राव्य चतुर्गुणे। जले चाष्टावशिष्टे च चाराम्भो ग्राह्यमिष्यते॥" इति पानाय भावन चारोदकविधानं तदर्थमित्यर्थः। पानीयचारमात्रा च पलत्रिकार्द्धपलमात्रा क्रमादुत्तममध्यमाधमबलानलविषया ज्ञेया॥ ४७॥

क्षारसूत्रम् ।—

भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः ।
बन्धनात् सुदृढं सूत्रं भिनत्त्यर्शो भगन्दरम् ॥
प्राग्दक्षिणं ततो वामं पृष्ठजञ्चाग्रजं क्रमात् ।
पञ्चतिलेन संस्वेद्य दहेत् क्षारेण वह्निना ॥
वातजं श्लेष्मजञ्चार्शः क्षारेणास्रज-पित्तजे ।
महान्ति तनुमूलानि छित्त्वैव बलिनो दहेत् ॥
चर्मकीलं तथा छित्त्वा दहेदन्यतरेण वा ।
पक्वजम्बूपमो वर्णः क्षारदग्धः प्रशस्यते ॥ ४८ ॥
गोजीशेफालिकापत्रैरर्शः संलिख्य लेपयेत् ।
क्षारेण वाक्शतं तिष्ठेद् यन्त्रद्वारं पिधाय च ॥
तच्चापनीय वीक्षेत पक्वजम्बूफलोपमम् ।·

---

क्षारसूत्रमाह—भावितमित्यादि। पुनःपुनरिति—सप्ताहमित्यर्थः। प्राग्दक्षिण-मित्यादि।—एतच्च क्रमोपदर्शनं मन्मार्गेणाशक्तिविशिष्टपुरुषगम्यं वा; एष च क्रमो यस्य चतुर्ष्वेव पार्श्वेष्वर्शांसि भवन्ति तं प्रत्येव बोध्यः, यस्य पुनरेकतमपार्श्वे, तस्य तदेव दहनीयम्; एष च क्रमः क्षारे क्षारसूत्रेऽग्नौ च। पञ्चतिलेनेति।—पञ्चकोलसमीपस्थम्, यस्य च दाहो दुर्वैद्यैर्न क्रियते वाक्यारम्भात्। पञ्चतिलेनेति।—पञ्चतिल-स्नेहेन पानादिना स्नेहयित्वेत्यर्थः। क्षारेण वह्निना च क्रमशैव श्लेष्मज वातजञ्च दहेत्। रक्तजे पित्तजे पुनः क्षारेणैव दहेत्। क्षारो हि सर्वदोषोचितः। यदाह सुश्रुतः—"क्षारस्तु सर्वदोषाणामविरोधी सर्वशः" इति। अन्यतरेणेति—क्षारेण वह्निना वा। क्षारेण सम्यग्दग्धस्य लक्षणमाह—पक्वेत्यादि।—पक्वजम्बूवर्णः स्निग्धकृष्णवर्ण इत्यर्थः॥ ४८

प्रतिसारणीयक्षारे यथोपयुज्यमानमाह गोजीत्यादि।—गोजी शाकोटकः। क्षारेण लेपयेदित्यन्वयः। मन्त्रपाठेनोच्चारणकालो वाक्, तच्छतः शतं, क्षीणशतं वा। यन्त्रद्वारं गुदस्थितयन्त्रस्य द्वारं, पिधाय करतलादिना छादयित्वा। पक्वजम्बूफलोपम—सम्यग्दग्धं, हीनदग्धे तु लोहितं भवति। यदाह वाग्भटः;—"पक्वजम्बूनिभं सम्यग्दग्धं विपर्ययात्। ताम्राभं तोदकण्ड्वाद्यं दुर्गन्धं तत् पुनर्दहेत्।

यदि च स्यात् ततो भद्रं नो चेन्निम्मेत् तथा पुनः ॥
तत् तुषाम्बुप्लुतं साज्यं यष्टीकल्केन लेपयेत् ।
न निम्नं तालवर्णाभं वह्निदग्धं स्थितासृजम् ॥
निर्वाप्य मधुसर्पिर्भ्यां वह्निसञ्जातवेदनाम् ।
सम्यग्दग्धे तुगाक्षीरी-प्लक्षचन्दनगैरिकैः ॥
सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक् ।
सुखस्नमुपवेश्याशो तोयपूर्णेऽथ भाजने ॥
क्षारसुधाम्बुना पाय्यं विबन्धे सृष्टवर्चसोः ।
दाहे वस्त्यादिजे लेपः शतधौतेन सर्पिषा ॥
नवान्नं माषतक्रादि सेव्यं पाकाय जानता ।
पिबेद्व्रणविशुद्ध्यर्थं वराक्वाथं सगुग्गुलुम् ॥
जीर्णे शाल्यन्नमुद्गादि पथ्यं तिक्ताज्यसैन्धवम् ।
रूढसर्वव्रणं वैद्यः क्षारं दत्त्वानुवासयेत् ।
पिप्पल्याद्येन तैलेन सेवेद्दीपनपाचनम् ॥ ४८ ॥

---

अतिदग्धे सवेदनं मूर्च्छादाहज्वरादय । गुदे विशेषाद्विण्मूत्रसंरोधो वातिमरणम् । वातपित्तप्रशमनी शीता सर्व क्रिया हिता ॥" इति । तुषाम्बु काञ्जिकम् । न निम्नमित्यादिना सम्यग्वह्निदग्धलक्षणम् । वह्निदग्धमिति ।—वह्निना सम्यग्दग्धं, न निम्नमित्यादि लक्षणयुक्तं भवतीत्यर्थः । तालवर्णाभमिति ।—पक्वतालसमवर्णम् । ताम्रवर्णाभमिति पाठेऽपि—पक्वताम्रवृन्तसमवर्णमित्यर्थः । स्थितासृगिति ।—स्थितरक्तम्, एतत् यदा अर्शश्छित्वा दहति तदा ज्ञेयम् । दाहश्च सिरामुखोच्चलेन रक्तस्तम्भक इति । दाहानन्तर यद्विधेयं तदाह, निर्वाप्येत्यादि ।—सम्यग्दग्धे ह्यर्शसीत्यर्थः । तुगाक्षीरी वंशलोचना, तदभावे तालक्षीरी, प्लक्ष. पर्कटि, तस्य वल्कलम्, अमृता गुडूची । यद्यपि गुडूची पाकादुष्णवीर्या तथापि स्पर्शाच्छीतैव, यथा काञ्जिकमम्लमपि भक्षणात् पित्तकरं स्पर्शेन शीतमिति कृत्वा पित्तहरं भवति, तेन गुडूच्या निर्वापणत्व चिन्त्यमिति केनचिदुक्तं, तदप्यपास्तम् ; किं वा उष्णवीर्याया अपि गुडूच्या द्रव्यान्तरसंयोगमहिम्नैवास्य दाहप्रशमकत्वं ज्ञेयम् । तोयपूर्णे इति ।—कोष्णतोयपूर्णे इत्याहुः । क्षारसुधाम्बुनेति ।—क्षार यवक्षारम् । वराक्वाथमिति ।—वरा त्रिफला,

अग्निमुखं लौहम् ।—

विड़ङ्गचित्रकनिर्गुण्डी-सुण्ठीमुण्डतिकाजटाः ।
प्रत्येकशोऽष्टपलिका जलद्रोणे विपाचयेत् ॥
पलत्रयं विड़ङ्गस्य व्योषात् कर्षत्रयं पृथक् ।
त्रिफलायाः पञ्चपलं शिलाजतुपलं न्यसेत् ॥
दिव्यौषधिहतस्यापि वैकङ्कतहतस्य वा ।
पलद्वादशकं देयं रुक्मलौहस्य चर्णितम् ॥
पलैश्चतुर्विंशतिभिर्मधुशर्करयोर्युतम् ।
घनीभूते सुशीते च दापयेद्घृतादिके ॥
एतदग्निमुखं नाम दुर्नामान्तकरं परम् ।
मममग्निं करोत्याशु कालाग्निसमतेजसम् ॥

---

तिकाख्यं पञ्चतिक्तघृतम्। चारं दग्ध्वेति।—चारवर्त्तिं दग्ध्वा, चारवर्त्तिदाहानन्तरं पिप्पल्यादिना तैलेनानुवासयेदित्यर्थः ॥ ४८ ॥

प्रसिद्धफलमग्निमुखलौहमाह, विड़ङ्गचित्रकेत्यादि।—अत्र मुण्डतिका मुण्डिरी, काजटा मूषामलकी। अत्राः स्थाने कटेति पाठे—विड़ङ्गादीनां मूलमित्यर्थः। क्वाथश्च जलद्रोणे क्वाथचतुर्भागावशिष्टं पीतकपायवत्पेऽर्धमादेव सिद्धः। पृथगित्यनेन—व्योषस्य प्रत्येकं त्रिकर्षमानत्वम्; त्रिफलायास्तु मिलित्वा पञ्च पलानि। एताश्च विड़ङ्गादिशिलाजतुचूर्णानां पाकावतारसमये प्रक्षेपः। दिव्यौषधिः स्वर्णमाक्षिकं, मनःशिला वा, कालिकोकमणी वा। अन्यत्र तु मनःशिलाहतस्येति पाठान्तरदर्शनात् मनःशिलेति युक्तम्। लौहमारकत्वात् तु सर्वांशेनाविरुद्धानि। वैकङ्कतहतस्य वेति।—वङ्गाख्यां वहिश्चीति ख्यातं, वारेन्द्राविद वदौकडौञ्चिरिति ख्यातम्। किन्तु स्वर्णमाक्षिकादिकं विना सम्यग् लौहमारणं न सिध्यति; अतएव तत्साधनद्वयमनुवर्त्तनादि कर्त्तव्यम्। रुक्मलौहं—कान्तव्यतिरिक्तं वज्रपाण्ड्यादिलक्षणलौहम्, तदुक्तं निघण्टौ—"लौहमयसमुत्तापपापिण्डं वज्र रुक्मकुटिः लक्षलौहनामानि"। अत्रामृतस्यापि मध्वृतस्य चतुर्विंशतिपलानि पाकावतरणसमय एव, हमवेयेदौर्घ्ये, घृतं विना कश्चिदपि लौहस्य पाकादर्शनात्, अत एव क्वचित् पलैश्चतुर्विंशत्याज्यमधुशर्करयोरिति पाठान्तरं केचित् पठन्ति। मधुशर्करयोश्चतुर्विंशतिपलानि मिलित्वा;

पर्वता अपि जीर्य्यन्ति प्राशनादस्य देहिनः।
गुरुवृष्यान्नपानानि पयो मांसरसो हितः॥
दुर्नामपाण्डुश्वयथु-कुष्ठप्लीहोदरापहम्।
अकालपलितञ्चैतदामवातगुदामयम्॥
न स रोगोऽस्ति यञ्चापि न निहन्यादिदं क्षणात्॥
करीरकाञ्जिकादीनि ककारादीनि वर्जयेत्।
स्रवत्यतोऽन्यथा लौहं देहात् किट्टञ्च दुर्जरम्॥ ५०॥

भल्लातकलौहम्।—

चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता।
हस्तिपिप्पल्यपामार्ग-दण्डोत्पलकुठेरकाः॥
एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत्।
भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत्॥
तत्र पादावशेषेण लौहपात्रे पचेद्भिषक्।
तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुड़वद्वयम्॥
त्र्यूषणं त्रिफला वह्निः सैन्धवं विड़मौद्भिदम्।
सौवर्चलविड़ङ्गानि पलिकांशानि कल्पयेत्॥
कुड़वं वृद्धदारस्य तालमूल्यास्तथैव च।

---

शर्कराघृताभ्यां पाकं द्वादशपलानि सौर्ने मधुनः प्रक्षेपः, तेन शर्करायाः द्वादशपलानि, मधुना द्वादश पलानि, घृतस्य च चतुर्विंशतिपलानीति। अयस्कृतिविधिरमृतसार-लौहवत्॥ ५०॥

भल्लातकलौहे कुठेरकः पर्णासः। "भल्लातकसहस्रे द्वे" इत्याकृतिमानात्। तत्रैवेति—जलद्रोणे। तीक्ष्णलौहस्येति—पञ्चपाक्यादिलौहस्य। गव्यघृतस्य कुड़वद्वय-मिति द्वैगुण्यात् षोडश पलानि, एवं मधुनोऽपि। सिद्धे च त्र्यूषणादीनां प्रक्षेपः;

शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत् ॥
सिद्धे शीते प्रदातव्यं मधुनः कुड़वद्वयम् ।
प्रातर्भोजनकाले च ततः खादेद्यथाबलम् ॥
अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम् ।
क्रिमिगुल्माश्मरीमेहान् शूलञ्चाशु व्यपोहति ॥
करोति शुक्रोपचयं वलीपलितनाशनम् ।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ ५१ ॥

रसगुडिका—रसस्तु पादिकस्तुल्या विडङ्गमरिचाभ्रकाः ।
गङ्गापालङ्कजरसे खल्लयित्वा पुनः पुनः ॥
रक्तिमात्रा गुडार्शोघ्नी वह्नेरत्यर्थदीपनी ॥ ५२ ॥
वेगावरोधस्त्रीपृष्ठ-यानमुत्कटुकासनम् ।
यथास्वं दोषलञ्चान्नमर्शसः परिवर्जयेत् ॥ ५३ ॥

इति अर्शश्चिकित्सा ।

---

सर्वमपरमभल्लातकवत् । अत्रामृतभल्लातकेऽविविना पुटितं यथाप्याप्ति प्रथमोक्तद्रव्य पुटितञ्च लौहं ग्राह्यं, अभ्रकादिविधिरपि तथैव ॥ ५१ ॥

रसस्तु पादिक इति ।—विडङ्गादीनामेकतमभागापेक्षया ; तेन विडङ्गमरिचाभ्रकाणां प्रत्येकं त्रयो भागाः, पारदस्यैको भाग इत्यर्थः । शोधितपारद १ माषा, मारिताभ्रचूर्णं विडङ्ग मरिच प्रं ३ माषा । ग्रन्थान्तरेऽपि रसभागापेक्षया विडङ्गमरिचाभ्रकाणां प्रत्येकं भागत्रयमुक्तम् । गङ्गापालङ्केति ।—पालङ्कमहापत्रं गङ्गापालङ्कं, गाङ्गपाङ इति ख्यातम् । पुनः पुनरिति ।—यावत्माषं क्रतं नियम इत्यर्थः । रसाभ्रकशोधनञ्च यथावक्ष्यमाणविधिनैव विधेयम् । पृष्ठयानं—हस्त्यश्वादिपृष्ठे गमनम् ॥ ५२ ॥ ५३ ॥

इति अर्शश्चिकित्सा ।

# अथाग्निमान्द्यादि-चिकित्सा ।

समस्य रक्षणं कार्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ १ ॥

हिङ्ग्वष्टकं चूर्णम् ।—

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेतत्
जनयति जठराग्निं वातरोगांश्च हन्यात् ॥ २ ॥

समयवशूकमहौषधचूर्णं लीढं घृतेन गोसर्गे ।
कुरुते क्षुधां सुखोदकपानं विश्वौषधं चैकम् ॥ ३ ॥

अभ्रमण्डं पिबेत्तप्तं हिङ्गुसौवर्चलान्वितम् ।
विषमोऽपि समस्तेन मन्दो दीप्येत पावकः ॥ ४ ॥

अथ कालत्वात् [illegible] अग्निमान्द्यादिचिकित्सामाह, समस्येत्यादि । रक्षण-मिति पालनम् । वातनिग्रह —वातस्य प्रशमनमित्यर्थः ॥ १ ॥

त्रिकटुकमित्यादि । —[illegible] [illegible] [illegible] । अजमोदा यमानी, [illegible] [illegible] [illegible] । तथा हि—"[illegible] [illegible] [illegible] च [illegible] । यदि [illegible] [illegible] [illegible] ॥" इति समधरणधृतानामिति —[illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] तु [illegible] [illegible], [illegible] [illegible] [illegible] । [illegible] हिङ्गुभाग इति ।—[illegible] [illegible] हिङ्गुभाग [illegible] । [illegible] [illegible] [illegible] [illegible] [illegible] क्वचित् पाठ. ॥ २ ॥

समयवेत्यादि ।—[illegible] [illegible] । [illegible] [illegible] ।—[illegible] [illegible] [illegible] [illegible] वा । [illegible]—[illegible] [illegible] [illegible] [illegible] [illegible] । [illegible] [illegible] [illegible] [illegible] ॥ ३ ॥

[illegible] ।—[illegible] [illegible] [illegible] इति [illegible] । [illegible] तु—[illegible] [illegible] [illegible] [illegible] [illegible] [illegible] ॥ ४ ॥

अथ मण्डगुणाः।—

क्षुद्बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च।
ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः॥५॥

तीक्ष्णाग्निचिकित्सा।

नारीक्षीरेण संयुक्तां पिबेदौडुम्बरीं त्वचम्।
ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये॥
यत्किञ्चिद् गुरु मेध्यञ्च श्लेष्मकारि च भेषजम्।
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा॥ ६॥
मुहुर्मुहुरजीर्णेऽपि भोज्यमस्योपकल्पयेत्।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न निपातयेत्॥ ७॥
विश्वाभयागुडूचीनां कषायेण षडूषणम्।
पिबेत् श्लेष्मणि मन्देऽग्नौ त्वक्पत्र-सुरभीकृतम्॥

---

क्षुद्बोधन इत्यादि।—अष्टगुणो हि मण्ड इति।—यद्यपि माधवकरेण द्रव्यगुणे— "सुतण्डुलानां प्रसृतद्वयञ्च तदष्टगुणः कटुकञ्च तक्रम्। शुण्ठीसैन्धवहिङ्गुतैलम् पचेच्च सर्वैः क्रियते हि मण्डः॥" इत्यादिवचनान्तरं क्षुद्बोधन इत्यादि पद्यं पठितं, तथाप्यष्टमण्डस्यापि मण्डत्वसामान्यादेतन्न गुणाष्टकं ज्ञेयम्। अष्टाङ्गी धान्याकं, तत्र मनागुष्णं ग्राह्यं, विधिः पुनरस्य यथोक्तमानौ तण्डुलमुद्गौ तक्र-जले युक्त्या दत्त्वा विपाच्य मण्डो ग्राह्यः। पश्चात् त्रिकटुकादिभिर्यथा संस्कार इति॥ ५॥

अत्यग्निचिकित्सामाह, नारीक्षीरेणेत्यादि।—उडुम्बरत्वच कल्कं, पायसपक्षे गु-डुम्बरत्वचः पलं, तच्चूर्णं नारीक्षीरचतुर्गुणं दत्त्वा पायसः कार्यः। यत्किञ्चि-दित्यादि—माहिषीदुग्धादि॥ ६॥

मुहुर्मुहुरित्यादि।—तथाऽजीर्णेऽपि मुहुर्मुहुर्भोज्यमस्योपकल्पयेत्, यदा निरि-न्धनोऽग्निः, अन्तरमिन्धनाख्यं लब्ध्वा, एनमातुरं न निपातयेत् न मारयेत्, धातु-दाहादिति भावः। उक्तं हि—"आहारमग्निः पचति दोषानाहारवर्जितः। धातून् क्षीणेषु दोषेषु न जीवेदातुरस्तथा॥" इति॥ ७॥

विश्वाभयेत्यादि।—त्वक् गुडत्वक्; त्वक्पत्रे सुरभिमात्रकारके द्वे। पत्र-

पथ्यक्षौमं समरिचं षडूषणमुदाहृतम् ॥ ८ ॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ९ ॥

सिन्धूत्थपथ्यमगधोद्भववह्निचूर्ण-
मुष्णाम्बुना पिबति यः खलु नष्टवह्निः ।
तस्यामिषेण सघृतेन वरं नवान्नं
भस्मीभवत्यशितमात्रमिह क्षणेन ॥ १० ॥

सिन्धूत्थहिङ्गुत्रिफलायमानी-
व्योषैर्गुडांशैर्गुडिकां प्रकुर्यात् ।
तैर्भक्षितैस्तृप्तिमिवाप्नुवन् ना
भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥ ११ ॥

क्षौमं समरिचं षडूषणमिति —षडूषणं —"मरिचं पिप्पली शुण्ठी मूलं च [illegible]। पिप्पलीमूलसंयुक्तं चतुरूषणमुच्यते। [illegible] षडूषणम् ॥" इति। [illegible] ॥ ८ ॥

हरीतक्यादि।—[illegible] ॥ ९ ॥

सिन्धूत्थादि।—पथ्या हरीतकी, [illegible]। मगधोद्भवा पिप्पली, [illegible]। [illegible] ॥ १० ॥

सिन्धूत्थादौ—[illegible] ॥ [illegible]

कपित्थतक्रचाङ्गेरी-मरिचाजाजिचित्रकैः।
कफवातहरो ग्राही खड़ो दीपनपाचनः॥ १५॥

शार्दूलकाञ्जिकः।—

पिप्पली शृङ्गवेरञ्च देवदारु सचित्रकम्।
चविकां विल्वपेषीञ्चाजमोदाञ्च हरीतकीम्॥
महौषधं यमानीञ्च धान्यकं मरिचं तथा।
जीरकञ्चापि हिङ्गुञ्च काञ्जिकं साधयेद्भिषक्॥
एष शार्दूलको नाम काञ्जिकोऽग्निबलप्रदः।
सिद्धार्थतैलसम्भृष्टो दश रोगान् व्यपोहति॥
कासं श्वासमतीसारं पाण्डुरोगं सकामलम्।
आमञ्च शूलशूलञ्च वातगुल्मं सवेदनम्॥
अर्शांसि श्वयथुञ्चैव भुक्ते पीते च मात्रतः।
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम्॥ १६॥

अग्निमुखं चूर्णम्।—

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्।
पिप्पली त्रिगुणा चैव शृङ्गवेरं चतुर्गुणम्॥

---

भीरकादि इत्यादि पादत्रयम्।—[illegible] [illegible] [illegible] [illegible] [illegible]
[illegible]॥ १४॥

कपित्थेत्यादौ—कफवातहर इत्येव पाठः, न तु कफपित्तहर इति, [illegible] [illegible] कपित्थादीनां वातकफघ्नत्वात्। [illegible] इति—[illegible] [illegible] [illegible] [illegible] [illegible]॥ १५॥

पिप्पल्यादौ—[illegible] [illegible] [illegible] [illegible]। [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible]। [illegible]। [illegible]—[illegible] [illegible]। [illegible]—"[illegible] [illegible] [illegible]। [illegible] [illegible] [illegible] [illegible] [illegible]॥" इति॥ १६॥

यमानिका पञ्चगुणा षड्गुणा च हरीतकी ।
चित्रकं सप्तगुणितं कुष्ठञ्चाष्टगुणं भवेत् ॥
एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया ।
पिबेद् दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥
सोदावर्त्तमजीर्णञ्च प्लीहानमुदरं तथा ।
अङ्गानि यस्य शीर्य्यन्ते विषं वा येन भक्षितम् ॥
अर्शोहरं दीपनञ्च श्लेष्मघ्नं गुल्मनाशनम् ।
कासं श्वासं निहन्त्याशु तथैव यक्ष्मनाशनम् ॥
चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते ॥ १७ ॥

पानीयभक्तगुडिका ।—

रसोऽर्द्धभागिकस्तुल्या विडङ्गमरिचाभ्रकाः ।
भक्तोदकेन सम्मर्द्य कुर्य्याद् गुञ्जानिभान् गुडान् ॥
भक्तोदकानुपानैका सेव्या वह्निप्रदीपनी ।
वार्य्यन्नभोजनञ्चात्र प्रयोगे सात्म्यमिष्यते ॥ १८ ॥

हुतहुताग्निमुखं चूर्णम् ।—

द्वौ क्षारौ चित्रकं पाठा-करञ्जलवणानि च ।
सूक्ष्मैलापत्रकं भार्गी क्रिमिघ्नं हिङ्गु पौष्करम् ॥

---

हिङ्ग्वाद्य इत्यादौ—हिङ्गुविषयाद्यभागापेक्षया एवं द्विगुणेति। प्रसन्नयेति—मदिरामण्डपाने, दध्नेति गुडपाने, मस्तुनेति वच्यमाणपाने, सुरया कफपाने, उष्णवारिणा वातशान्ते कार्ये च ॥ १७ ॥

पानीयभक्तगुडिकायां—रसोऽर्द्धभागिक इत्येकभागापेक्षया; केचित्तु कार्षिकं रसस्यार्द्धं गन्धकं क्षिपन्ति। विडङ्गादीनां प्रत्येकं रसापेक्षया द्विगुणो भागः। चक्राऽधिकारोक्तपानीयभक्तगुडिकायान्तु विडङ्गादीनां रसापेक्षया प्रत्येकं त्रिगुणो भाग इति भेदः। भक्तोदकेनेत्यत्र भक्तपानीयेन ॥ १८ ॥

हुतहुताग्निमुखे—कारवं करञ्जमूलस्य त्वक्; यत्तु एतच्च सुश्रुतेन कीलितं पूर्वार्द्धं पञ्चमिश्रमनेन प्रमाणमुपदिष्टं, तच्छोधनविषयं ज्ञेयम्। नवनाभि

शठी दार्वी त्रिवृन्मुस्तं वचा चेन्द्रयवा तथा ।
धात्रीजीरकवृक्षाम्लं ग्रन्थी चोपकुञ्चिका ॥
अम्लवेतसमम्लीका यमानी सुरदारु च ।
अभयाऽतिविषा श्यामा हवुषारग्वधं समम् ॥
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ।
क्षाराणि लोहकिट्टञ्च तप्तं गोमूत्रसेचितम् ॥
सर्वाणि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
मातुलुङ्गरसेनैव भावयेच्च दिनत्रयम् ॥
दिनत्रयञ्च शुक्तेन चार्द्रकस्वरसेन च ।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ॥
उपयुक्तविधानेन नाशयत्यचिराद्गदान् ।
अजीर्णकमथो गुल्मं प्लीहानं गुदजानि च ॥
उदराण्यन्त्रवृद्धिञ्च अष्ठीलां वातशोणितम् ।
प्रणुदत्युल्बणान् रोगान् नष्टमग्निञ्च दीपयेत् ॥
समस्तव्यञ्जनोपेतं भक्तं दत्त्वा सुभाजने ।
दापयेदस्य चूर्णस्य बिडालपदमात्रकम् ।
गोदोहमात्रात् तत् सर्वं द्रवीभवति सोष्मकम् ॥ १८ ॥

---

[illegible]

भास्करलवणम् ।—

पिप्पली पिप्पलीमूलं धन्याकं कृष्णजीरकम् ।
सैन्धवञ्च विड़ञ्चैव पत्रं तालीशकेशरम् ॥
एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च ।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम् ॥
त्वगेले चार्द्धभागे च सामुद्रात् कुड़वद्वयम् ।
दाड़िमात् कुड़वञ्चैव द्वे पले चाम्लवेतसात् ॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम् ।
लवणं भास्करं नाम भास्करेण विनिर्म्मितम् ॥
जगतस्तु हितार्थाय वातश्लेष्मामयापहम् ।
वातगुल्मं निहन्त्येतद् वातशूलानि यानि च ।
तक्रमस्तुसुरासीधुशुक्तकाञ्जिकयोजितम् ॥
जाङ्गलानान्तु मांसेन रसेषु विविधेषु च ।
मन्दाग्नेरश्नतः शक्तो भवेदाश्वेव पावकः ॥
अर्शांसि ग्रहणीदोषं कुष्ठामयभगन्दरान् ।
हृद्रोगमामदोषांश्च विविधानुदरस्थितान् ॥
प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन् ।
विशेषतः शर्कराढीन् रोगान् नानाविधांस्तथा ।
पाण्डुरोगांश्च विविधान् नाशयत्यग्निर्यथा ॥ २० ॥

अग्निमुखम्—पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
हिङ्गु वचाजमोदा च पञ्चैव लवणानि च ॥

---

भास्करलवणे—केशरं नागकेशरपुष्पम् । पञ्च सौवर्चलस्येति ।—पञ्च पलानि सौवर्चलस्येत्यर्थः । त्वगेले चार्द्धभागे च इति—पलार्द्धे इत्यर्थः, तेन त्वगेलयोः प्रत्येकमर्द्धपलमित्यर्थः । गन्धाढ्यमिति ।—पत्रतालीशादिद्रव्ययोगादेव, न पुनरपरगन्धद्रव्यप्रक्षेपेण ॥ २० ॥

द्वौ क्षारौ हपुषा चैव दद्यादर्द्धपलोन्मितान् ।
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ॥
आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत् ।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥
अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम् ।
ग्रन्थ्यर्बुदापचीकास-कफमेदोऽनिलानपि ।
नाशयेद् ग्रहणीदोषं श्वयथुं सभगन्दरम् ॥
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः ।
सर्वांस्तान् नाशयत्याशु सूर्यस्तम इवोदितः ॥ २१ ॥

मस्तुषट्पलकं घृतम् ।—

पलिकैः पञ्चकोलैश्च घृतं मस्तुचतुर्गुणम् ।
सक्षारैः सिद्धमस्याग्निं कफगुल्मं विनाशयेत् ॥ २२ ॥

वडवामुखचूर्णम् ।—

पथ्यानागरकणाकरञ्जविल्वाग्निभिः सितातुल्यैः ।
वडवामुखं विजयते गुरुतरमपि भोजनं चूर्णम् ॥ २३ ॥

१२४ [illegible] —भल्लातकसहस्रार्द्धं जलद्रोणे विपाचयेत् ।
अष्टभागावशेषञ्च कषायमवतारयेत् ॥
घृतप्रस्थं समादाय कल्कानीमानि दापयेत् ।
त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च ।
द्वौ क्षारौ हपुषा चैव दद्यादर्द्धपलोन्मितान् ॥

---

[illegible] —[illegible] [illegible] [illegible]. [illegible] [illegible] ( [illegible] ). द्वौ क्षारौ [illegible] [illegible] ॥ ११ ॥

[illegible] [illegible] [illegible] ।— "[illegible] [illegible] [illegible] [illegible]" [illegible] [illegible] [illegible], [illegible] [illegible] [illegible]. ॥ ११ ॥ ११ ॥

दधिकाञ्जिकयूषाणि स्नेहमात्रासमानि च ।
आर्द्रकस्वरसञ्चैव शोभाञ्जनरसं तथा ॥
तत्सर्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत् ।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥
अर्शसां नाशनं श्रेष्ठं मूढवातानुलोमनम् ।
कफवातोद्भवे गुल्मे श्लीपदे च दकोदरे ॥
शोथं पाण्ड्वामयं कासं ग्रहणीं श्वासमेव च ।
एतान् विनाशयत्याशु तमः सूर्य इवोदितः ॥ २० ॥

नागगुड़.—द्वे पञ्चमूले त्रिफलामर्कमूलं शतावरीम् ।
दन्तीं चित्रकमास्फोतां रास्नां पाठां सुधां शटीम् ॥
पृथग्दशपलान् भागान् दग्ध्वा भस्म समावपेत् ।
त्रिःसप्तकृत्वस्तद्भस्म जलद्रोणे च गालयेत् ॥
तद्रसं साधयेदग्नौ चतुर्भागावशेषितम् ।
ततो गुड़तुलां दत्त्वा साधयेन्मृदुनाग्निना ॥
सिद्धं गुड़न्तु विज्ञाय चूर्णानीमानि दापयेत् ।
वृश्चिकालीं द्विकाकोल्यौ यवक्षारं समावपेत् ॥
एते पञ्चपला भागाः पृथक् पञ्च पलानि च ।
हरीतकीं त्रिकटकं सर्जिकां चित्रकं वचाम् ॥
हिङ्ग्वम्लवेतसाभ्याञ्च द्वे पले तत्र दापयेत् ।
अक्षप्रमाणां गुड़िकां कृत्वा खादेद् यथाबलम् ॥

---

बृहदग्निघृते—भल्लातकमहत्त्वार्द्रमित्याकृतिमानात् । शोभाञ्जनरसः, शोभाञ्जनस्य मूलत्वच. स्वरसः ॥ २० ॥

नागगुड़े—आस्फोता नवमल्लिका ( हाफरमालि ) इति ख्याता ; सुधा स्नुही, तस्य मूलम् । त्रिःसप्तकृत्व इति—एकविंशतिवारान् वाराभिधेये कृत्वसुप्रत्ययः । वृश्चिकाली वृश्चिकपत्री ; काकोल्यौ काकोली-क्षीरकाकोल्यौ । एते पञ्चपला भागाः पृथगिति छेदः । पञ्चपलानीत्यत्र पृथगिति शेषः तेन हरीतक्यादीनां वचान्तानां मिलिता

अजीर्णं जरयत्येव जीर्णं सन्दीपयत्यपि ।
भुक्तं भुक्तञ्च जीर्येत पाण्डुत्वमपकर्षति ॥
प्लीहार्शःश्वयथुश्चैव श्लेष्मकाससरोचकम् ।
मन्दाग्निविषमाग्नीनां कफे कण्ठोरसि स्थिते ॥
कुष्ठानि च प्रमेहांश्च गुल्मञ्च व्यपोहति ।
ख्यातः क्षारगुडो ह्येष रोगयुक्ते प्रयोजयेत् ॥ २५ ॥

चित्रकगुडः ।—

भासारोगे विधातव्या या चित्रकहरीतकी ।
विना धात्रीरसं सोऽस्मिन् प्रोक्तश्चित्रगुडोऽग्निदः ॥ २६ ॥

आमाजीर्ण-चिकित्सा ।

वचालवणतोयेन वान्तिरामे प्रशस्यते ॥ २७ ॥

विदग्धाजीर्ण-चिकित्सा ।

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ।
तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥२८॥
विदह्यते यस्य च भुक्तमात्रं दह्येत हृत्कोष्ठगलञ्च यस्य ।

---

यत्र यत्राजीर्णत्वं, । हिङ्ग्वादियेतस्योरपि मिलितैव दे पले । रोगयुक्त इति ।—न तु स्वस्थे, शोष्यधातुक्षयभयात् ॥ २५ ॥

भासारोग इत्यादि स्पष्टम् ॥ २६ ॥

अग्निमान्द्याजीर्णयोः परस्परकारणत्वादग्निमान्द्यप्रकरण एवाजीर्णचिकित्सामाह, वचेत्यादि ।—वचालवणयुक्तेनोष्णोदकेन किंवा वचया चोष्णेनोदकेन मदनफलेन वा वमनम् ॥ २७ ॥

विदग्धाजीर्णचिकित्सामाह, अन्नमित्यादि ।—सुश्रुतस्य । शीताम्बुना परिपाकमेतीति कथमुक्तं तदेवोपपादयति, तद्ध्येत्यादि ।—हि यस्मात् हेतौ । तदिति—शीताम्बु, अन्नाजीर्णिनः, पित्तं निहन्तीत्यन्वयः । आक्लेदिभावादिति—द्रवत्वात् ॥ २८ ॥

विदह्यत इत्यादि ।—सुश्रुतस्य । भुक्तमात्रमिति ।—भक्षणकाले वा, यावद्

द्राक्षासितामाक्षिकसम्प्रयुक्तां लीढ्वाभयां वै स सुखं लभेत ।
हरीतकी धान्यतुषोदसिद्धा सपिप्पली सैन्धवहिङ्गुयुक्ता ।
सोद्गारधूमं भृशमप्यजीर्णं विजित्य सद्यो जनयेत् क्षुधाञ्च ॥२९॥

विष्टब्धाजीर्णचिकित्सा ।

विष्टब्धे स्वेदनं पथ्यं पेयञ्च लवणोदकम् ।
रसशेषे दिवास्वप्नो लङ्घनं वातवर्जनम् ॥ ३० ॥

व्यायामप्रमदाध्ववाहनरतक्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान् ।

---

भुक्तमित्यर्थः; भुक्तमाकर्ण्य माक्षयच्छो वर्तते। किंवा भुक्तमात्रमिति भोजनानन्तरं, तत्कालमेवेत्यर्थः। "अन्नं विदग्धं हि नरस्य शीघ्रम्" इत्यादि वाक्यं, तथा—"विदह्यते यस्य तु भुक्तमात्रम्" इत्यादि वाक्यं, तथा—"अजीर्णं प्रति यस्य शङ्का" इत्यादि वचनानामनु योगत्रयवचनमनार्षमिति, अजीर्णे भेषजनिषेधस्य स्वयमेव मुनिनोक्तत्वात्, लङ्घनाद्युपदेशाच्च; 'तत्र तत्र वैलक्षण्यवैषम्येन प्रक्षिप्तं योगत्रयमिदमित्याह जेज्जटः। अपरे तु प्रभावादुरिपाकदर्शनाच्च योगत्रयमिदमार्षं भवत्येव, किन्तु अल्पाजीर्णे योज्यमेतत्, प्रभूताजीर्णे तु भेषजसम्बन्धं न कुर्यात्, अल्पाजीर्णे तु औषधं सेव्यमिति। हरीतकीत्यादौ।—धान्यतुषोदः सन्धानविशेषः, तदभावे काञ्जिकं, तेन सिद्धा कल्किता ॥ २९ ॥

विष्टब्धाजीर्णचिकित्सामाह, विष्टब्धे इत्यादि।—लवणोदकं सैन्धवयुक्तमुष्णोदकमित्यर्थः। रसशेषे दिवास्वप्न इत्यल्पदोषापेक्षया; महति च लङ्घनमुचितम्। लङ्घनमित्युपवासः; अन्ये तु—लङ्घनशब्देनात्र लाघवकरो विधिरिष्यते, तेन लघुं यथा ज्वरार्थं कषायपानीयं पाचनौषधं तथा स्वेदश्च प्राप्यते, न पुनर्लङ्घनमुपवासः, दौर्बल्यकारित्वादित्याहुः। वातवर्जनमिति—वातस्यासेवनम् ॥ ३० ॥

व्यायामेत्यादि।—रतेति भावे क्तः, रतमनुरक्तिरासक्तिरिति यावत्, तेन व्यायामादौ अतिरतत्वेन ये क्लान्तास्तानित्यर्थः, न तु रत सुरत, तस्य प्रमदाशब्देनैव लब्धत्वात्। वाहनञ्च हस्त्यादियानम्। व्यायामादिक्लान्तानाञ्च धातुपुष्ट्यर्थम्। यदुक्तं—"स्वप्नप्रसङ्गाच्च नरो वराह [redacted] पुष्यति" इति। अतीसारे दिवास्वापः कफवर्द्धकतया स्रोतःसंरोधकतया प्रभावाद्वा हितः, स च सर्वातीसारे कफजन्ये श्रेयः। शूलश्वासवदादिषु वात

क्षीणान् क्षीणकफान्विशून् मदहतान् वृद्धान् रसाजीर्णिनो
रात्रौ जागरितान्निरशनान् कामं दिवा स्वापयेत् ॥ २१ ॥

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः ।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम् ॥ २२ ॥

धान्यनागरसिद्धन्तु तोयं दद्याद्विचक्षणः ।
आमाजीर्णप्रशमनं दीपनं बस्तिशोधनम् ॥ २३ ॥

---

शान्त्या प्रभावाद्वा हित । क्षीणानिति—धातुक्षीणान्, तेन सुश्रुतोक्तरसादिधातुक्षयेऽपि दिवास्वाप. प्राप्यते । क्षीणकफानिति—स्वतन्त्र, किंवा व्यायामादिभ्योऽपि यस्य तेन व्यायामादिकक्षीणकफानेव दिवा स्वापयेत् । विशूनान्त निद्रानाशात्तान् दिवानिद्रा । मदहतानिति—मदनान्, तेषाञ्च मदनाशार्थं दिवास्वाप । वृद्धान् प्रति धातुपुष्ट्यर्थम् । रसाजीर्णिनो रसविशेषपाकार्थं दिवानिद्रा रात्रावपि, निद्रितस्यैवाहारपाकस्य दृष्टत्वात् । किंच निद्रायाश्च शीतमहोषादनिर्गच्छन् देहोष्मा जठरानलमुद्दीपयति, तेन शीघ्रमजीर्णस्य पाक । न च—दिवास्वप्नात् कफपित्तयो प्रकोपो भवति; तदुक्तं चरके—"दिवास्वप्नात् श्लेष्मपित्ते प्रकुप्येते" इति, तत्प्रकोपाच्चाग्न्युपघात एव कथं न स्यादिति वाच्य, यत शीतमहोषादुपजातजठराग्निर्जीर्णपाचक एव, न तदा कफपित्तयो. प्रकोप, प्रतिनियतशक्तिकत्वाद् भेषजानामिति । यत्तु वा कफपित्तप्रकोपस्तथापि नाग्निमान्द्यं, तथाविधदोषदूष्यसंयोगाभावात्, न वा' नियम., यत कफप्रकोपेऽवश्यमग्न्युपघात इति, कफपित्तप्रकोपश्चातिनिद्रादौ तत्रापि कफपित्तप्रकोपेऽग्न्युपघातादृष्टत्वादिति । रात्रौ जागरितानां जागरणजनितवातक्षोभप्रशमनार्थमेव दिवास्वप्न, स च रात्रिजागरणकालादर्धं कार्य.। यदाह वाग्भट,—"यथाकालमतोऽन्यदा रात्रौ जागरणादर्धं प्रात· स्वप्यादभुक्तवान्." इति । निरशनानिति ।—अत एव हारीते,—"भुक्त्वा स्वप्नमसेवेत स्वस्थोऽप्यस्वस्थितो भवेत्" इति ॥ २१ ॥

आलिप्येत्यादि स्पष्टम् ॥ २२ ॥

धान्यनागरेत्यादि ।—"कषाये वा कषायम्लौ." इत्यादिवचनेन तोयद्रव्याल्पभागत्वमुक्तं, तेनेहापि तोयात्तोयद्वयोर्धान्यनागरयोश्चतुर्भागमात्रता पक्ते वक्ष्यमाणे धान्यशाद्वेविकर्षमानं नागरन्तु कर्षार्धमानं ग्राह्यम् । यत्तु धान्यशुण्ठ्यपयोगे "शुण्ठ्याश्च धान्यतस्त्रयम्" इति केनचिदुक्तं, तदनार्षत्वान्नाद्रियते । वैद्यप्रचारस्तु शुण्ठ्याः पलार्धकं, धान्यस्य द्वय, एव अर्धेनेति ॥ २३ ॥

पथ्यादिकम्—पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्चलं पिबेत्।
मस्तुनोष्णोदकेनाथ बुद्ध्वा दोषगतिं भिषक्॥
चतुर्विधमजीर्णञ्च मन्दानलमथारुचिम्।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति॥ २४॥

भवेदजीर्णं प्रति यस्य शङ्का
स्निग्धस्य जन्तोर्बलिनोऽन्नकाले।
पूर्वं सशुण्ठीमभयामशङ्कः
स प्राश्य भुञ्जीत हितं हिताशी॥ २५॥

किञ्चिदामेन मन्दाग्निरभयागुड़नागरम्।
जग्ध्वा तक्रेण भुञ्जीत युतेनाद्यं षडूषणैः॥ २६॥

विसूचिका-चिकित्सा।

विसूचिकायां वमितं विरिक्तं सुलङ्घितं वा मनुजं विदित्वा।
पेयादिभिर्दीपनपाचनैश्च सम्यक् क्षुधार्त्तं समुपक्रमेच्च॥ २७॥

कुष्ठसैन्धवयोः कल्कं शुक्ततैलसमन्वितम्।

---

पथ्येत्यादि।—पथ्यादीनां त्रयाणां समो भागः, तच्च मिलित्वा कर्षप्रमाणं ग्राह्यं; "कर्षश्चूर्णस्य कल्कस्य" इत्यादिवचनात्॥ २४॥

भवेदजीर्णमित्यादि।—सुश्रुतस्य। एतच्चैवाजीर्णविषयकमिदं वाक्यं, भोजनोपदेशात्। रसशेषे हि स्वल्पदोषः, तेन तदौषधपूर्वकं भोजनं सम्भवतीति। पूर्वमिति—प्रातःकाले, यस्य पुरुषस्याजीर्णं प्रति शङ्का भवेत्, सोऽन्नकाले यस्य पुरुषस्य यः भोजनकालः तस्मिन् सशुण्ठीं शुण्ठीसहिताम् अभयां सम्प्राश्य भुञ्जीतेति योजना; न तु पूर्वं सम्प्राश्य भुञ्जीतेति योज्यं, सम्प्राश्येत्यनेनैव पूर्वकालस्य लब्धत्वादिति॥ २५॥

किञ्चिदित्यादि।—यद्यपि गुडेन शुण्ठीमित्यादि वचनं पूर्वमुक्तं तथापि तक्रषडूषणसम्बन्धाद् योगान्तरमेवैतद्बोध्यम्॥ २६॥

विसूचिकाचिकित्सामाह, विसूचिकायामित्यादि।—सुश्रुतस्य। पेयादीनाञ्च दीपनपाचनत्वं, दीपन-पाचन-धान्यपञ्चकादि-संस्कारात्॥ २७॥

कुष्ठेत्यादि।—आतुरस्य तात्कालिकी पीड़ा महती, तद्धेतुः च तैले पक्वमप्रा-

विसूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम् ॥ ३८ ॥
करञ्जनिम्बशिखरि-गुडूच्यर्जकवत्सकैः ।
पीतः कषायो वमनाद्घोरां हन्ति विसूचिकाम् ॥ ३९ ॥

व्योषं करञ्जस्य फलं हरिद्राम्
मूलं समादाय च मातुलुङ्ग्याः ।
छायाविशुष्का गुडिकाः कृतास्ता
हन्युर्विसूचीं नयनाञ्जनेन ॥ ४० ॥

गुडपुष्पसारशिखरितण्डुलगिरिकर्णिकाहरिद्राभिः ।
अञ्जनगुडिका विलयति विसूचिकां त्रिकटुसनाथा ॥ ४१ ॥
त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लेन पिष्टैः सवचाशताह्वैः ।

---

कम्, अतः किञ्चिदुष्णं तैलञ्च दत्त्वा कुष्ठसैन्धवयोः कल्केन अनुष्णेन मर्दनं कार्य्यमित्याशयः। तैलपाकपक्षे तु—कुष्ठसैन्धवयोः कल्कः पादिकः, तैलञ्च चतुर्गुणम्। खल्ली हस्तादौ शिरामोटनरूपा वेदना ॥ ३८ ॥

करञ्जेत्यादि।—करञ्जस्य फलम्; शिखरि अपामार्गस्य बीजम्। अर्जकः, श्वेतपर्णास इति कथकः, तथा हरीतकीमाला अस्ट्रोऽप्यर्जक इति पठ्यते; तस्मात् अर्जकस्थाने अर्जुनेति प्रमादपाठः। वत्सकः कुटजः। पीतः कषायो वमनादिति।—वमनार्थश्च कषायः।—"क्वाथद्रव्यस्य कुडवं श्रपयित्वा जलाढके। अर्द्धभागावशेषञ्च वमनेष्ववचारयेत् ॥" इति परिभाषया अर्द्धशृतः कार्य्यः। अर्द्धभागावशेषमित्यत्र चतुर्भागावशेष इति पाठो दृश्यते, तत्र नियमो नानुमन्यते। वमनघातीरत्वं, लोमलोकवमिकारकाक्षीर्षनिरासार्थम् ॥ ३९ ॥

व्योषमित्यादि।—सुश्रुतस्य। मातुलुङ्गी मधुकर्कटी। विसूचीशब्देनात्र विसूचीजनितमूर्च्छा-प्रमीलक-शिरोरोगादयो गृह्यन्ते, कारणे कार्य्योपचारात्। किं वा अञ्जनेन प्रभावादेव विसूची हन्यते, इति सुश्रुतटीकाकृतो व्याचक्षते ॥ ४० ॥

गुडपुष्पेत्यादि।—गुडपुष्पो मधूकवृक्षः, तस्य सारो ग्राह्यः। शिखरितण्डुला अपामार्गबीजानि। गिरिकर्णिका श्वेतापराजिता, तस्या मूलं ग्राह्यम्। त्रिकटुकान्वितो योगः। विलयति शमयति ॥ ४१ ॥

त्वक्पत्रेत्यादि।—त्वक् गुडत्वक्; पत्रं तेजपत्रम्। अम्लेन पिष्टैरिति—काञ्जिकेन

उद्वर्त्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वञ्च तदर्थकारि ॥ ४२ ॥

पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते ।
जातीफलस्य वा शीतं शृतं भद्रघनस्य वा ॥ ४३ ॥
विसूच्यामतिवृद्धायां पार्ष्णिर्दाहः प्रशस्यते ॥ ४४ ॥

अलसक-चिकित्सा ।

वमनन्त्वलसे पूर्वं लवणेनोष्णवारिणा ।
स्वेदो वर्त्तिर्लङ्घनञ्च क्रमश्चातोऽग्निवर्द्धनः ॥
सरुक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।
दारुहैमवतीकुष्ठ-शताह्वाहिङ्गुसैन्धवैः ॥

तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमर्त्तिं जठरे निहन्यात् ।

---

पिष्टैः । शताह्वा शलुफा इति ख्याता ; शताह्वैरित्यत्र जटाह्वैरित्यन्ये पठन्ति । यथा—"शताह्वाकागुरुमांसी-कुष्ठचित्रकत्वचो वचा । पिष्टमद्येन तत्कल्कं विसूच्यामङ्गमर्द्दनम् ॥" सुश्रुते तु शताह्वा जटामांसी चेति द्वयमपि न दृश्यते, यथा,—"कुष्ठचागुरुपत्रञ्च रास्ना त्रिगुलवचा वचा । पिष्टमद्येन तत्कल्कं विसूच्यामङ्गमर्द्दनम्" ॥ इति । तैलं विपक्वञ्च तदर्थकारीति ।—शुक्तपत्रादिभिः काञ्जिकैः काञ्जिकेन द्रवेण चतुर्गुणेन तैलं पक्वं खल्लीविसूचीकाघ्नं भवतीत्यर्थः ॥ ४२ ॥

पिपासायामित्यादौ ।—अनुत्क्लेश उत्क्लाशिका, उिक्‌रौति लोके ख्याता इति नियतः ; अन्ये त्वनुत्क्लेश इतीष्टदुत्क्लिष्ट-दोष इत्याहुः । लवङ्गाम्बु चाग्निसंतप्तं शीतम्, एवं जातिफलाम्बु भद्रघनाम्बु च ज्ञेयम् । भद्रघनं भद्रमुस्तकम् ; ग्रन्थान्तरे योगान्तरं दृष्टफलमपि बोद्धव्यम् ।—"आम्राम्र तद्विशेषत्वो मातुलुङ्गफलत्वचम् । पीता भद्रघनक्वाथमनुत्क्लेशाद्विमुच्यते" । पार्ष्णिर्दाह इति ।—पादयोः पार्ष्णिदाहस्तु मूर्च्छोपशान्त्यर्थम् । मूर्च्छान्तरस्याभावे सति तप्तशरादिशलाकया पाददाहः । स च प्रमाणात् पाददेशे एव कृतो हितो भवतीति वचनादुन्नीयते । सुश्रुतेऽप्युक्तं—"छाम्यामु प्रशस्तं पार्ष्णिदहनम्" इति । अष्टाङ्गेऽप्युक्तं—"हन्यात् विसूचीं पार्ष्णिदेशे च दाहः" इति । अतः पार्ष्णिदेशे इत्यत्र पादाग्रदेश इति ये पठन्ति ते भ्रान्ताः । पार्ष्णिदाहस्य सर्वैरुपदिष्टत्वात् ॥ ४३ ॥ ४४ ॥

अलसकचिकित्सामाह वमनमित्यादि ।—लवणेन सैन्धवेन । वर्त्तिरिति—फल-वर्त्तिः, सा चोदावर्त्ते वक्ष्यमाणा । अत इति ।—अत ऊर्द्ध्वमित्यर्थः । सरुगिति ।—सशूलम् । हैमवती वचा । तक्रेणेत्यादि ।—चरकस्थं । सक्षारमिति सहयवक्षारम्,

स्वेदो घटैर्वा बहुबाष्पपूर्णैरुष्णैस्तथान्यैरपि पाणितापैः ॥ ४५ ॥
तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ ४६ ॥

इत्यग्निमान्द्यादि-चिकित्सा ।

## अथ क्रिमि-चिकित्सा ।

पारसिय-यमानिका पीता पर्युषितवारिणा प्रातः ।
गुड़पूर्वा क्रिमिजातं कोष्ठगतं पातयत्याशु ॥ १ ॥
पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिबेत् ।
केबुकस्य रसं वापि पत्तूरस्याथवा रसम् ॥
लिह्यात् क्षौद्रेण वैडङ्गं चूर्णं क्रिमिविनाशनम् ॥ २ ॥

---

तत्तदर्द्धं घटे प्रक्षिप्य उदरे स्वेद इत्याह कश्चित्; तन्न, चरकेऽस्य योगस्य प्रदेह-प्रकरणे पठितत्वात्। तस्मात् यवचूर्णयवक्षारौ तक्रेण पिष्ट्वा किञ्चिदुष्णं कृत्वा उदरे लेपः कार्यः। स्वेदो घटैर्वा बहुबाष्पपूर्णैरिति।—तप्तक्वथितादिभिर्बाष्पपूर्णैर्घटैरन्यैश्च-रूपैर्वस्त्रपुटकादिभिस्तथा हस्ततापैरपि स्वेद इति योज्यम्। तीव्रार्त्तिरित्यादि।—वाग्भटस्य। अजीर्णी तीव्रशूलोऽपि सन् शूलघ्नमौषधं न पिबेत्। यतः आमेन सन्नो मन्दीभूतोऽग्निः दोषौषधाशनं पक्तुं न समर्थः॥ ४५ ॥ ४६ ॥

इत्यग्निमान्द्यादिचिकित्साविवृतिः।

---

अजीर्णान् क्रिमिसम्भव इत्यजीर्णानन्तरं क्रिमिचिकित्सामाह, पारसियेत्यादि।—पारसिय-यमानी खोरासानी यमानीति ख्याता। गुड़पूर्वेति।—गुड़ः पूर्वो यस्या इति गुड़ भक्षयित्वा मनाक् विलम्बं कृत्वा सा पातव्येत्यर्थः। पेयाममपि पर्युषितवारिणेति॥ १ ॥

पारिभद्रकेत्यादि।—पारिभद्रकः मन्दारविशेषः। केबुकस्येति।—केबुकस्य केउसाङ्

मुस्ताखुपर्णीफलशिग्रुदारु-क्वाथः सकृष्णाक्रिमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान् क्रिमीन् निहन्ति क्रिमिजांश्च रोगान् ॥ ३ ॥

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपिकाम् ।
जग्ध्वा सौवीरकञ्चानु पिबेत् क्रिमिहरं परम् ॥ ४ ॥
पलाशबीजस्वरसं पिबेद्वा क्षौद्रसंयुतम् ।
पिबेत् तद्बीजकल्कं वा तक्रेण क्रिमिनाशनम् ॥ ५ ॥
सुरसादिगणं चापि सर्वथैवोपयोजयेत् ॥
विडङ्गसैन्धवक्षार-काम्पिल्लकहरीतकीः ।
पिबेत् तक्रेण सम्मिश्य सर्वक्रिमिनिवृत्तये ॥ ६ ॥

---

इति व्याख्यातम्, तत्र मूलस्वरसः ग्राह्यः । एवं धत्तूरस्य ; धत्तूरः शालिञ्चः, क्षौद्रयुतमिति पदं कैश्चिदत्र पठ्यमानमपि योज्यम् । निम्बादिक्रमादि स्पष्टम् ॥ २ ॥

मुस्तेत्यादौ ।—आखुपर्णी मूषिकपर्णी, द्रवन्तीभेदो वा । फलशब्देनात्र त्रिफला ग्राह्या, रविगुप्तमतात् । क्रिमिशत्रुर्विडङ्गम् ॥ ३ ॥

आखुपर्णीदलैरित्यादि ।—आखुपर्णी द्रवन्ती, मूषिकपर्णी द्रवन्तीभेदो वा, मण्डूकपर्णीत्यन्ये । दलं कोमलदलम्, यदाह वाग्भटः—"आखुपर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः । पक्त्वा पूपलिकां खादेद् धान्याम्लञ्च पिबेदनु ॥" इति । पिष्टकेनेति ।—यवपिष्टकेन, क्रिमिहरत्वादिति सुश्रुतटीकाकृतः । शालितण्डुलपिष्टकेनेति निश्चलः । आखुपर्णीदलस्य भागत्रयं पिष्टकस्य चैको भाग इत्याहुः । सौवीरं काञ्जिकम् । यद्यपि सुश्रुते वाग्भटे च धान्याम्लं मातृकीत्यादिनाऽम्लमात्रस्यैव वचनमुक्तं, तथापि विशेषवचनादत्र काञ्जिकानुपानमिति न विरोधमावहति ॥ ४ ॥

पलाशबीजमित्यादि ।—पलाशबीजस्य स्वरसः तद्बीजकल्को वा । तक्रेणेति ।—तण्डुलाम्बुनाप्ययं योगो ज्ञेयः । तदुक्तं सुश्रुते—"पलाशबीजस्वरसं कल्कं वा तण्डुलाम्बुना" इति ॥ ५ ॥

सुरसेत्यादि ।—सुरसादिगणः सांश्रुतः ; सर्वथैवेति—कल्ककषायकल्पनया । विडङ्गसैन्धवेत्यादौ ।—काम्पिल्लको गुण्डारोचनी, कमलागुंडी इति ख्याता ॥ ६ ॥

विड़ङ्गपिप्पलीमूलशिग्रुमिर्मरिचेन च।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका॥
पीतं बिम्बीघृतं हन्ति पक्वामाशयगान् क्रिमीन्॥ ७॥

त्रिफलाघृतम्—

त्रिफला त्रिवृता दन्ती वचा काम्पिल्लकं तथा।
सिद्धमेभिर्गवां मूत्रे सर्पिः क्रिमिविनाशनम्॥ ८॥

विड़ङ्गघृतम्—

त्रिफलायास्त्रयः प्रस्था विड़ङ्गप्रस्थ एव च।
द्विपलं दशमूलञ्च लाभतः समुपाचरेत्॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत्।
प्रस्थोन्मितं सिन्धुयुतं तत् परं क्रिमिनाशनम्॥
विड़ङ्गघृतमेतच्च लेह्यं शर्करया सह।
सर्वान् क्रिमीन् प्रणुदति वज्रं मुक्तमिवासुरान्॥ ९॥
रसेन्द्रेण समायुक्तो रसो धुस्तूरपत्रजः।
ताम्बूलपत्रजो वापि लेपो यूकविनाशनः॥ १०॥

विड़ङ्गतैलम्—

सविड़ङ्गगन्धकशिलासिद्धं सुरभीजलेन कटुतैलम्।

---

विड़ङ्गेत्यादि।—चरकात्। तक्रसिद्धेति।—तक्रमत्रार्द्धोदकं ग्राह्यम्, अन्यथा अत्यम्लता स्यादित्याहुः। सुवर्चिका सर्जिकाक्षारः, तं दत्त्वा भक्षयेत्। बिम्बीघृतमिति।—बिम्बीघृते विपक्वबिम्बीफलस्य कल्कचतुर्गुणं जलम्॥ ७॥

त्रिफलेति।—त्रिफलाघृते दन्ती नागदन्ती, सा च स्थूलमूलेत्याहुः। तदुक्तं—"त्रिवृत्काम्पिल्लकवचा-नागदन्तीफलत्रये। गोमूत्रसाधितं सर्पिः पानात् क्रिमिनाशनम्॥" इति॥ ८॥

त्रिफलादि स्पष्टम्। विड़ङ्गघृतं क्वचित् पुस्तके तथा वृन्दे च; तत्र टीकाकृद्भिर्न धृतम्; इत्यधिकमेवेति ज्ञेयम्॥ ९॥

रसेन्द्रेणेत्यादौ।—रसेन्द्रः पारदः। ताम्बूलपत्रं पर्णं, "लेपनं यूकनाशनम्" इति पाठे—यूकां यूकाउन्दम्॥ १०॥

आजन्म नयति नाशं लिख्यासहिताश्च यूकाश्च ॥ ११ ॥

इति क्रिमिचिकित्सा ।

---

## अथ पाण्डुरोगचिकित्सा ।

साध्यन्तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्ध्वमधश्च शुद्धम् ।
सम्पादयेत् क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णमयैः प्रयोगैः ॥ १ ॥

---

सुविडङ्गेत्यादौ ।—गिरा मनःशिलेति केचिदाहुः । अन्ये तु गन्धकशिला गन्धकपाषाणमेवेति वदन्ति । गुञ्जाबीजकं मौसयं, तत्र चतुर्गुणं ग्राह्यम् ॥ ११ ॥

इति क्रिमि-चिकित्साविवृतिः ।

---

पूर्वोक्तक्रिमितः पाण्डुरोगस्य प्रादुर्भावात् क्रिम्यनन्तरं पाण्डुरोगचिकित्सामाह, साध्यमित्यादि ।—सुश्रुतस्य । समीक्ष्येति अनुबन्ध्यानुबन्धरूपं तद्दोषविशेषं सम्यगुपलभ्य स्निग्धमेव, न स्विन्नं पाण्डुरोगे स्वेदनिषेधात् । उक्तं हि सुश्रुते—"पाण्डुमेही रक्तपित्ती क्षतार्तः क्षामोऽजीर्णी दुर्बलोऽजीर्णयुक्तः । दग्धोदरी गर्भिणी पीतमद्यो नैते स्वेद्याः यश्च मर्त्योऽतिसारी ॥" इति । घृतेनेति ।—न तु तैलादिना सर्वपाण्डुरोगाणां पित्तप्रधानत्वात् रक्तदुष्टत्वाच्च । उक्तं हि सुश्रुते—"व्यायाममम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम् । निषेवमाणस्य प्रदूष्य रक्तं दोषास्त्वचं पाण्डुरतां नयन्ति ॥" इति । पित्ते घृतस्यैव प्रधानत्वात् घृतेनैव स्नेहनं युक्तम् । घृतञ्च भेषजसंस्कृतमेव देयं बहुगुणत्वात् । उक्तं हि चरके—"कल्याणकं पञ्चगव्यं महातिक्तमथापि वा । स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे ॥" इति । उक्तं हि सुश्रुते च—"स्नेहनमेव घृतेनेत्याहुः ।" ऊर्ध्वमिति वमनेन, अध इति विरेचनेन । यद्यपि पाण्डुरोगे वमनं निषिद्धं, यदुक्तं—"न वामयेत् तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीडितम्" इति, तथापि पीडितमिति वचनेन प्रवृद्धपाण्डुरोगविषयं तद्वचनं ज्ञेयम्; उपक्रमे तु कालर्तुदोषाद्यपेक्षया कफोद्रिक्तावस्थायां मृदुवमनं ज्ञेयम् । तथा च हारीते—"कालर्तुदोषप्रकृतिं शरीरं समीक्ष्य दद्याद्वमनं विधिज्ञः" इति । सुश्रुतेऽप्युक्तम्—"एतेऽप्यजीर्णव्यथिता वम्या ये च विषातुराः । अतीवोल्बणकफाले च स्युर्मधुकाम्बुना" इति । विरेचनन्तु तीक्ष्णमेव; यदुक्तं,—"स्निग्धस्य तीक्ष्णान्युभयतोभागानि कफोपदिष्टानि भिषग्विदध्यात्" इति ॥ इदानीं संशोधनानन्तरं कृतकर्मजनकस्य दोषविशेषशमनार्थमाह, सम्पादयेदित्यादि ।—हरीतकी

पिबेद्घृतं वा रजनीविपक्वं सत्रैफलं तैल्वकमेव चापि ।
विरेचनद्रव्यकृतं पिबेद्वा योगांश्च वैरेचनिकान् घृतेन ॥ २ ॥

हेतुप्रत्यनीकचिकित्सा ।

विधिः स्निग्धस्तु वातोत्थे तिक्तशीतस्तु पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥ ३ ॥
द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिके पिबेत् ।
कफपाण्डौ च गोमूत्र-क्लिन्नयुक्तां हरीतकीम् ॥
नागरं लौहचूर्णं वा कृष्णां पथ्यां तथाऽश्मजम् ।
गुग्गुलुं वाथ मूत्रेण कफपाण्ड्वामयी पिबेत् ॥

---

चूर्णमये. प्रयोगैर्वक्ष्यमाणैर्नवायसादिभिर्हरीतकीचूर्णवद्भिरित्यर्थः । हरीतकीचूर्णयुतैरिति पाठान्तरम् ॥ १ ॥

रजनीविपक्वमिति ।—हरिद्राकल्ककषायाभ्यां सिद्धमिति गयदासः । तन्न, कल्ककषायकरणस्य शास्त्रविरुद्धत्वात् ; तस्मात् हरिद्राकल्कसिद्धमित्यन्ये, अन्ये तु वक्ष्यमाणहरिद्राघृतमित्याहुः । तन्न, चरकवचनात्, इदं वाक्यं सौश्रुतमिति । त्रैफलमिति—त्रिफलाकषायकल्कसिद्धम् ; त्रिफलापटोलपिचुमर्देत्यादि कुष्ठोक्तं, वातरोगोक्तं वा ज्ञेयम् । तैल्वकमिति—वातव्याध्युक्तम् । विरेचनद्रव्यकृतमिति—त्रिवृतादिद्रव्यसंस्कृतं घृतम् ; इदं हि वाक्यं सौश्रुतम् । योगांश्च वैरेचनिकानिति ।—सौश्रुतविरेचनाध्यायोक्तान् घृतेन पिबेदिति ॥ २ ॥

हेतुप्रत्यनीकचिकित्सामाह, विधिरित्यादि । मिश्रके इति द्वन्द्वजे ॥ ३ ॥

द्विशर्करमित्यादि ।—त्रिवृच्चूर्णमेव द्विगुणशर्करं सत् पलार्द्धमात्रं पिबेत्, तेन शर्करा कर्ष १ मा ५ रत्ति ४ । त्रिवृच्चूर्णं माषा १० रत्ति ८ एवं मिलित्वा पलार्द्धमित्यर्थः, न तु त्रिवृच्चूर्णं पलार्द्धं सत् द्विशर्करं पलमेकम्, एवं मिलित्वा सार्द्धपलमिह अल्पदोषपरीतेऽस्मा मात्राया अनर्हत्वात् । गोमूत्रक्लिन्नयुक्तामिति ।—गोमूत्रेण क्लिन्नां पिष्टां, तदनु गोमूत्रेणैव युक्तामालोड्य पिबेदित्यर्थः ; वृद्धवाग्भटेऽप्युक्तम्—"गोमूत्रेण वा हरीतकीः कल्किता." इत्यादि ; अन्ये तु गोमूत्रेण क्लिन्नामुषितामित्याहुः ; अन्ये तु चरके पञ्चगव्यशोथे आरग्वधरसेनेति पठित्वा आरग्वधरसेन हरीतकीं पिबेदिति पूर्वेण योजयन्ति ; किन्तु वाग्भटसंवादात् पूर्वपाठ एव साधुः । नागरमित्यादि ।—नागरलौहचूर्णाभ्यामेको योगः ; कृष्णापथ्याभ्यां द्वितीयः, अश्मजः

सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः ॥ ४ ॥
फलत्रिकामृतावासा-तिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥ ५ ॥
अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः ॥ ६ ॥
अयोमलन्तु सन्तप्तं भूयो गोमूत्रसेचितम् ।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत् ॥
दीपनश्चाग्निजननं शोथपाण्ड्वामयापहम् ॥ ७ ॥

नवायसं चूर्णम्—

त्र्यूषणं त्रिफलामुस्त-विडङ्गचित्रकाः समाः ।
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा ॥

---

शिलाजतु, अयं योगस्तृतीयः ; गुग्गुलुरिति चतुर्थः ; गोमूत्रेणेति सम्बध्यते सर्वत्र । लौहचूर्णन्तु मारितं पुटितञ्च ग्राह्यं, तदभावे लौहपत्रिका ग्राह्या । सा च शालिञ्चरसत्रिफलाक्वाथैः पुटपाकेन संशोधनीया, एवं सर्वत्र ; तत्र मात्रकमिदं, मण्डूरचूर्णञ्च माषकचतुष्टयमित्याहुः । पञ्चगुडं पिप्पलीहरीतकीचूर्णं ; तथा गुडशिलाजतु माषा ३, घृतपेषितगुग्गुलु माषा ८, सर्वमेव गोमूत्रेण पानम् । सप्तरात्रमित्यादि—स्पष्टम् ॥ ४ ॥

फलत्रिकेत्यादौ । अमृता गुडूची, तिक्ता कटुकी, भूनिम्बश्चिरता ॥ ५ ॥

अयस्तिलेत्यादौ ।—लौहं मण्डूरं, न तु कचाईं ; यदाह सुदासषेणः—"अयः-कोलतिलत्र्योषैः समैर्माक्षिकधातुना । मधुना वटकान् कृत्वा जग्ध्वा तक्रं पिबेन्नरः ॥" इति । किमोऽपि तथा । माक्षिकधातुः स्वर्णमाक्षिकं, तदपि शुद्धं ग्राह्यं, तच्छोधनञ्च लौहप्रदीपादौ बोध्यम् । अनुतक्र इति तक्रानुपानः ॥ ६ ॥

अयोमलमित्यादि ।—अयोमलं पुरातनमण्डूरं, भूयो गोमूत्रसेचितमिति—बहुवारम् । एतस्य मण्डूरचूर्णस्य माषकद्वयं त्रिधा विभज्य भोजनादिमध्यान्तेषु मधुसर्पिर्भ्यां लीढं, पश्चादन्नमश्नीयात्, मात्रां वर्द्धयेत् । अनुपानमिह तक्रं दुग्धं वा ॥ ७ ॥

भक्षयेत् पाण्डुहृद्रोग कुष्ठार्शःकामलापहम्।
नवायसमिदं चूर्णं कृष्णात्रेयेण भाषितम्॥८॥

योगराजः।—त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च।
भागश्चित्रकमूलस्य विडङ्गानां तथैव च॥
पञ्चाश्मजतुनो भागाः पञ्च रूप्यमलस्य च।
माक्षिकस्य च शुद्धस्य लौहस्य रजसस्तथा॥
अष्टौ भागाः सितायाश्च तत् सर्वं सूक्ष्मचूर्णितम्।
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे।
उडुम्बरसमां मात्रां ततः खादेद् यथाग्नि वा॥

---

नवायसमित्यादि।—एकभागापेक्षया नवगुणं अयश्चूर्णम्, आदौ रक्तिद्वयं घृत-मधुभ्यां लौहपात्रे लौहमुषलिकया विमर्द्य लिह्यात्, रक्तिद्वयं क्रमशः वृद्धिः कार्या, माषकद्वयं यावदिति व्यवहारः। वाग्भटे तु तक्राद्यनुपानयोगः, यथा—"व्योषाग्नि-त्रिफलाविडङ्गमुस्तैस्तुल्यमयोरजः। चूर्णितं तक्रमध्वाज्य-कोष्णाम्भोभिः प्रयोजितम्॥" इति। एतदेव नवायसं सुश्रुते प्रमेहचिकित्सायां पठितम्॥८॥

त्रिफलाया इत्यादि।—चरकस्य। त्रिफलायास्त्रयो भागा इति मिलिता त्रयो भागाः, एवं त्रिकटुकस्यापि, निर्देशस्य मानप्रधानत्वात्। चित्रक विडङ्गयोरपि प्रत्येकं पलम्। शिलाजत्वादिलौहचूर्णान्तानां प्रत्येकं पञ्च पलानि, शर्करायास्त्वष्टौ पलानि, शिलाजतु च शिलाशुद्धिकोक्तविधिना शोधितम्। रूप्यमलस्येति।—रूप्यस्य ध्मायमानस्य यत् किट्टं निर्गच्छति तद्रूप्यमलम्। माक्षिकस्येति।—मारणपुटनादिना शुद्धस्य स्वर्णमाक्षिकस्य। अन्ये तु "पञ्चाश्मजतुनो भागाः पञ्च रूप्यमलस्य च" इत्यत्र "तथा रूप्य-मलस्य च" इति पठन्ति; तेन रूप्यमलस्येति शिलाजतुविशेषणं। ततश्च रसायनाधि-कारे रजतं कटुकं शीतमित्यादिना वर्णितमाजतु रूप्यमलत्वेनोक्तं तदिह ग्राह्यमिति व्याहुः। एतत्तु न व्यवहरन्ति वृद्धाः। वाग्भटे तु—लौहस्थाने रूप्यं पठितम्। यथा,—"ताप्याद्रिजतुरूप्याणां-मलाः पञ्च पलाः पृथक्। चित्रकत्रिफलाव्योषविडङ्गैः पलिकैः सह॥ शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुनाप्लुताः॥" इति। तदत्र प्रयोगे भेदाद्विरोधः, उक्तं हि,—"सुवर्णमथवा रूप्यं यौगे यत्र न लभ्यते। तत्र लौहेन कर्माणि भिषक् कुर्याद्विचक्षणः॥" इति। पूर्वोक्तस्यास्यापि शिलाजतु-लौहमल-स्वर्ण-

दिने दिने प्रयुञ्जीत जीर्णे भोज्यं यथेप्सितम्।
वर्जयित्वा कुलत्थांश्च काकमाचीं कपोतकान्॥
योगराज इति ख्यातो योगोऽयममृतोपमः।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम्॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम्।
कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम्।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च॥ ८॥
विशालाकटुकामुस्त-कुष्ठदारुकलिङ्गकाः।
कर्षांशा द्विपिचुं मूर्वा कर्षार्द्धा च घुणप्रिया।
पीत्वा तच्चूर्णमम्भोभिः सुखं लिह्यात् ततो मधु॥
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम्।
गुल्मानाहामवातांश्च रक्तपित्तञ्च तज्जयेत्॥ १०॥
लोहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनः।
पिबेत् पाण्ड्वामयी शोषी ग्रहणीदोषपीड़ितः॥
कल्याणकं पञ्चगव्यं महातिक्तमथापि वा।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे॥

---

माक्षिक-क्षीरजोभिश्चतुर्भिरेव हन्यते, तेन तन्त्रकारवचनयोर्न विरोध इति। चतुष्कर: कर्षः। अजरकम् अजीर्णम्। यद्यपि मेहश्च ना पुरुषः॥ ८॥

विशालेत्यादि।—विशाला गोरक्षकर्कटी। कर्षांशा च घुणप्रिया इत्यपपाठः, किन्तु कर्षार्द्धांशेति। उक्तं हि चरके—"विशालाकिटुकामुस्त-कुष्ठदारुकलिङ्गकाः। कर्षोन्मितानतिविषा कर्षार्द्धांश प्रदापयेत्। अर्द्धं मधुरसाया द्वौ सर्वमेतत् सुखाम्बुना। मदितं च रसं पूतं पीत्वा लिह्याच्च मध्वनु॥" इति; अत एव वचनबलात् कल्कक्वाथाग्रविधानमप्यत्र योगे बोध्यम्। तेन तच्चूर्णं सुखैः कदुष्णैरम्भोभिश्चतुर्गुणैर्मर्दयित्वा वस्त्रपूतं कृत्वा पिबेत्, पश्चाच्च मधु लिह्यादित्यर्थः॥ १०॥

लोहपात्र इत्यादि।—अत्र उक्तं चतुर्गुणं क्षीरं, पाकासुचयनः। कल्याण-

रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत्।
ततः प्रशमनी कार्य्या क्रिया वैद्येन जानता ॥ ११ ॥
त्रिफलाया गुडूच्या वा दार्व्व्या निम्बस्य वा रसः।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ॥ १२ ॥
अञ्जनं कामलार्त्तानां द्रोणपुष्पीरसः स्मृतः।
निशागैरिकधात्रीणां चूर्णं वा सम्प्रकल्पयेत् ॥ १३ ॥
नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम् ॥ १४ ॥

अयोरजोव्योषविडङ्गचूर्णम्
लिह्याद्धरिद्रां त्रिफलान्वितां वा।
सशर्करां कामलिनां त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी ॥ १५ ॥

दार्व्वी सत्रिफला व्योष-विडङ्गान्ययसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ १६ ॥

---

घृतं पञ्चगव्यघृतञ्च, उन्मादे वक्ष्यति। महातिक्तञ्च कुष्ठे, रेचनञ्च त्रिवृदर-लेन ॥ ११ ॥

त्रिफलाया इत्यादि—स्पष्टम् ॥ १२ ॥

अञ्जनमित्यादि।—अञ्जन नेत्राञ्जन, द्रोणपुष्पी दण्डकलस इति केचित्। निशा-दिभिश्चूर्णाञ्जनं कार्य्यं; तदुक्तं तन्त्रान्तरे,—"निशागैरिकधात्रीणां चूर्णेनाञ्जनं मतम्।" एतच्च मध्वक्तमञ्जनाकया कार्य्यमित्याहुः ॥ १३ ॥

नस्यमित्यादी।—कर्कोटमूलमिति कर्कोटिमूलरस इत्यर्थः। जालिनी पीत-घोषकः ॥ १४ ॥

सशर्करेत्यादि।—सुश्रुतस्य। त्रिभण्डी त्रिवृता, रेचनार्थमयं योगः। गवाक्षी गोरक्षकर्कटी, श्वेतापराजिता इत्यन्ये, कश्चित् सशर्करेत्यादि योगमित्याह, निश्चलः। कार्त्तिकस्तु सगुडा च शुण्ठीत्यत्र चकारं भिन्नक्रमं योजयित्वा शुण्ठी सगुडेति व्याख्याय गवाक्षीमपि सगुडामाह। एवं सुश्रुतटीकायां चन्द्रटोऽपि व्याख्यातवान् ॥ १५ ॥

दार्व्वीत्यादि।—चरकस्य। दार्व्वीत्वक् ॥ १६ ॥

तुल्या अयोरजःपथ्या-हरिद्राः क्षौद्रसर्पिषा ।
चूर्णिता कामली लिह्यात् गुडक्षौद्रेण वाभयाम् ॥ १७ ॥
धात्रीलौहरजोव्योष-निशाक्षौद्राज्यशर्कराः ।
लीढ्वा निवारयत्याशु कामलामुद्धतामपि ॥ १८ ॥

दग्ध्वाक्षकाष्ठैर्मलमायसन्तु
गोमूत्रनिर्वापितमष्ट वारान् ।
विचूर्ण्य लीढं मधुनाचिरेण
कुम्भाह्वयं पाण्डुगदं निहन्ति ॥ १९ ॥

पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके ।
कामलायाश्च या दृष्टा सापि कार्य्या भिषग्वरैः ॥ २० ॥

विडङ्गाद्यं लौहम्—

विडङ्गमुस्तत्रिफला-देवदारुषडूषणैः ।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥
तैरक्षमात्रां गुडिकां कृत्वा खादेद् दिने दिने ।
कामलापाण्डुरोगार्त्तः सुखमाप्स्यतेऽचिरात् ॥ २१ ॥

---

तुल्या इत्यादि स्पष्टम् ॥ १७ ॥ धात्रीत्यादि स्पष्टम् ॥ १८ ॥

दग्ध्वेत्यादि।—मुकुलस्य। अक्षको विभीतकवृक्षः। सुश्रुते वृन्दमाधव-चन्द्रटादिषु—"गोमूत्रनिर्वापितसप्तवारम्" इत्येव पाठो दृश्यते, अन्ये तु—"गोमूत्रनिर्वापितमष्टवारम्" इत्येव पठन्ति ॥ १९ ॥

पाण्डुरोगकामलाचिकित्सां हलीमकेऽप्यतिदिशति, पाण्डुरोगक्रियामित्यादि।—क्रिया विरेचनादिरूपा ॥ २० ॥

विडङ्गाद्यं—तुल्यमात्रमयश्चूर्णमिति।—मिलितविडङ्गचूर्णादिसमं चूर्णं लौहमयश्चूर्णमित्यर्थः। अत्र लौहस्य प्राधान्यात् तदपेक्षयैवाष्टगुणगोमूत्रेण लौहचूर्णं पक्त्वाऽवतारिते च विडङ्गादिचूर्णस्य प्रक्षेप इति केचित्। अन्ये तु—विडङ्गादिचूर्णसहितस्यैव लौहचूर्णस्य पाकः; गोमूत्रस्याष्टगुणत्वं सर्वचूर्णापेक्षयैव। अत्र द्रवैर्गुणं न व्याकरन्ति वृद्धाः। यावद्भाव सुखपाकेत्याहुः। अक्षमात्रां गुडिकां कुर्यात्, न तु तन्मात्रं खादेत्। मात्रा देहाग्निबलापेक्षिणी; अत एव बुद्ध्या विभज्य कर्त्तव्या ॥ २१ ॥

त्र्यूषणाद्यं मण्डूरम्—

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ ।
दार्वीत्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च ॥
एषां द्विपलिकान् भागांश्चूर्णं कृत्वा पृथक् पृथक् ।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत् ततः ।
उदुम्बरसमान् कुर्याद् वटकांस्तान् यथाबलम् ॥
उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम् ।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥

---

त्र्यूषणमित्यादि ।—चरकस्य । दार्वीत्वगिति षष्ठीसमासः, न तु दार्वी त्वक् चेति, "ताप्य दार्व्यास्त्वच चव्यम्" इति वाग्भटवचनात् । ग्रन्थिकं पिप्पलीमूलम् । द्विपलिकानुद्देशद्रव्यैः पृथग्द्विपलैरष्टाविंशतिपलानि भवन्ति । मण्डूरञ्च समुदितचूर्णाद्द्विगुणं षट्पञ्चाशत्पलमानं भवति । गोमूत्रञ्च मिलितचूर्णापेक्षयाष्टगुणम्, मण्डूरमानापेक्षया द्वैगुण्यमपि नास्ति । अन्ये तु—मूत्रमष्टगुणं मण्डूरात् तदिच्छन्त्येव वदन्ति । तच्चिन्त्यमनुमतोऽयं पक्षः । अतो दीपिकाकारमतमेव युक्तं प्रतिभातीत्युक्तम् । एतच्च न युक्तम्, यदाह वाग्भटः,—"ताप्य दार्व्यास्त्वच चव्य ग्रन्थिक देवदारु च । व्योषादिनवकञ्चेति चूर्णयेद्द्विगुणं ततः । मण्डूरञ्चाञ्जननिभं सर्वतोऽष्टगुणे पचेत् । पृथग्विपक्वे गोमूत्रे वटकीकरणक्षमे । प्रक्षिप्य वटकान् कुर्यात् तान् खादेत् तक्रभोजनः" इति । वाग्भटटीकायाञ्च—सर्वत इति मण्डूरमिलितचूर्णादष्टगुणं गोमूत्रमिति व्याख्यातम् । इत्यत्राभटेऽपि मूत्रं सर्वतोऽष्टगुणमित्युक्तम् । पृथक् पृथगिति ।—एकपृथक्शब्दो द्विपलिकानीत्यनेन सम्बध्यते, द्वितीयपृथक्शब्दश्च मण्डूरचूर्णेनैव पृथक् कृत्वा सम्बध्यम्, तस्मिन्नासन्नपाके व्योषादिचूर्णप्रक्षेपः, चूर्णबहुत्वात्, एवं सर्वत्र बहुचूर्णप्रक्षेपविषये आसन्नपाक एव प्रक्षेपः, स्वल्पचूर्णस्य तु प्रक्षेपः सम्यक्पाके सत्येव, यत एवोक्तम्—"प्रायो न पाकचूर्णानां भूरिचूर्णस्य तेन हि । आसन्नपाके प्रक्षेपः स्वल्पस्य पाकमागते ।" पाकमागते इति सम्यक्पाक इत्यर्थः । पाकलक्षणञ्च—"रसो गन्धः शुभः पाके वर्तिः स्यादङ्गुष्ठमर्दनात्" इति । उदुम्बरसममिति—कर्षमानान् । पञ्चषण्माषकेण प्रायेण

कुष्ठान्यजरकं शोथमूरुस्तम्भं कफामयान् ।
अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति च ॥
निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते ।
ग्राहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णतः ॥ २२ ॥

पुनर्नवामण्डूरम्—

पुनर्नवात्रिवृत्शुण्ठी-पिप्पलीमरिचानि च ।
विडङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् ॥
त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकं तथा ।
कुटजस्य फलं तिक्तां पिप्पलीमूलमुस्तकम् ॥
एतानि समभागानि मण्डूरं द्विगुणं ततः ।
गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने ॥
पाण्डुशोथोदरानाह-शूलार्शःक्रिमिगुल्मनुत् ॥ २३ ॥

मण्डूरवज्रवटकः—

पञ्चकोलं समरिचं देवदारु फलत्रिकम् ।
विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥
ततोऽक्षमात्रान् वटकान् पिबेत् तक्रेण तक्रभुक् ।
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् ॥

---

प्रवाहः। अजरकमजीर्णम्। बहुश इति बहुवारान्। चक्रेऽत्र तु—ग्राहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णत इत्येव पाठो लिखितः। यतो दीपिकायां मण्डूरापेक्षयैवाष्टगुणत्वं, तेनायमेव पाठः प्रतिभातीति वदता स्वीकृतम्; गोमूत्रं सर्वचूर्णत इति लेखनादपि प्रतिसंस्कृत्य लिखितम् ॥ २२ ॥

पुनर्नवामण्डूरे गोमूत्रस्याष्टगुणत्वं मण्डूरापेक्षयैव, सन्निहितत्वात् व्यवहाराच्च; अत्रापि द्वैगुण्यं न व्यवहरन्ति ॥ २३ ॥

मण्डूरवज्रवटके "विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः" इति पञ्चकोलादिभागा

अर्शांसि ग्रहणीरोगमूरुस्तम्भमथापि वा।
क्रिमिं प्लीहानमुदरं गलरोगञ्च नाशयेत्॥
मण्डूरवज्रनामायं रोगानीकविनाशनः॥ २४॥

धात्र्यरिष्टम्।—धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक्।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुड़वान्वितम्॥
शर्करार्द्धतुलोन्मिश्रं पक्षं स्निग्धघटे स्थितम्।
प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः॥
कामलापाण्डुहृद्रोग-वातासृग्विषमज्वरान्।
कासहिक्काऽरुचिश्वासांश्चैषोऽरिष्टः प्रणाशयेत्॥ २५॥

द्राक्षाघृतम्।—पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः।
कामलागुल्मपाण्ड्वर्त्ति-ज्वरमेहोदरापहः॥ २६॥

हरिद्राघृतम्।—हरिद्रात्रिफलानिम्ब-बलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम्॥ २७॥

मूर्वाद्य घृतम्।—मूर्वातिक्तानिशायास-कृष्णाचन्दनपर्पटैः।
त्रायन्तीवत्सभूनिम्ब पटोलाम्बुददारुभिः॥

---

त्रिकटुमुस्तविड़ङ्गत्रिफलान्विता इत्यर्थः। अत्रापि मण्डूराद्द्विगुणत्वं गुडस्य, चतुर्गुणत्वञ्च मूत्रस्य॥ २४॥

धात्रीफलेत्यादि।—चरकस्य। क्षौद्राष्टभागमिति।—क्षौद्रस्याष्टमो भागः, नवम-भागकल्पस्यास्य सप्त भागा इति निष्पत्तिः। शर्करार्द्धतुला पञ्चाशत् पलानि, कुड़-वमिति लेखकदोषात् प्रमादपाठः॥ २५॥

पुराणसर्पिष इति।—पुराणं दशवर्षस्थितं सर्पिः। जलमत्र चतुर्गुणमुक्तम्। अन्ये तु—"पिष्ट्वा द्राक्षार्द्धप्रस्थं तु सलिलं तच्चतुर्गुणम्। पुराणसर्पिषः प्रस्थं पचेत् क्षीरचतुर्गुणम्॥" इति हारीतदर्शनात् क्षीरमत्र चतुर्गुणमाहुः॥ २६॥

हरिद्रेत्यादौ।—क्षीरं चतुर्गुणम्॥ २७॥

मूर्वाघृते चक्रेण जलाकल्पं ग्राह्यम्॥ २८॥

अक्षमात्रैर्घृतप्रस्थं सिद्धं क्षीरं चतुर्गुणम्।
पाण्डुताज्वरविस्फोटशोथार्शोरक्तपित्तनुत् ॥ २८ ॥

व्योषाद्यं घृतम्—

व्योषं बिल्वं द्विरजनी त्रिफला द्विपुनर्नवम्।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम्।
सर्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान् ॥ २९ ॥

इति पाण्डुरोगचिकित्सा।

---

## रक्तपित्त-चिकित्सा।

नोद्रिक्तमादौ संग्राह्यं बलिनोऽप्यश्नतश्च यत्।
हृत्पाण्डुग्रहणीरोग-प्लीहगुल्मज्वरादिकृत् ॥
ऊर्द्ध्वं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥

---

व्योषमित्यादि।—वाग्भटस्य। चित्रं चित्रकमूलम्। यष्टीरजोऽत्र मुद्रादि-शोधितं ग्राह्यम्। वृश्चिकाली विछातीति ख्याता। क्षीरमत्र चतुर्गुणं बोध्यम्, वचनात्—क्षीरं घृतसमम्, जलन्तु चतुर्गुणमित्याह ॥ २९ ॥

इति पाण्डुरोगचिकित्साविवृतिः।

---

पाण्डुरोगवत् रक्तपित्तस्यापि पित्तरक्तकारणत्वाद्विकारात् पाण्डुरोगानन्तरं रक्तपित्तमाह, नोद्रिक्तमित्यादि।—नोद्रिक्तमित्यादिना सौश्रुतमिदमाह; उद्रिक्त-मतिमात्रेण प्रवृत्तमुक्तम्। अश्नत इत्यनेन सन्तर्पणोत्थितत्वं दर्शयति। सार्द्धं संग्रहणे दोषमाह हृदित्यादि।—रोगशब्दस्य हृदादिभिः सम्बन्धः, प्रत्येकमिति शेषः। ऊर्द्ध्वं प्रवृत्तदोषस्येति—सुश्रुतस्य। अतिप्रवृद्धदोषस्येति पाठान्तरम्। अपतर्पणम् लङ्घनम्। चरके रक्तपित्ते लङ्घनकरणोपपत्तिर्दर्शिता, यथा—"प्रायेण हि समुत्क्लिष्टमामदोषाच्छरीरिणाम्। वृद्धिं प्रयाति पित्तासृक् तस्मात्तल्लङ्घनमादितः।"

ऊर्द्ध्वगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम्।
प्रागधोगमने पेया वमनञ्च यथाबलम् ॥ १ ॥
तर्पणं सघृतक्षौद्र-लाजचूर्णैः प्रदापयेत्।
ऊर्द्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥
जलं खर्जूरमृद्वीका-मधुकैः सपरूषकैः।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम् ॥ २ ॥
त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु।
मोदकः सन्निपातोर्द्ध-रक्तपित्तज्वरापहः ॥ ३ ॥
शालपर्ण्यादिना सिद्धा पेया पूर्वमधोगते।
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः ॥ ४ ॥

---

इति। दोषनिदानापेक्षया यत् कर्त्तव्यं तदाह, ऊर्द्ध्वग इत्यादि।—यदाह चरकः,—"मार्गौ दोषानुबन्धञ्च निदानं प्रसमीक्ष्य च। लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत्॥" इति। अस्यार्थः,—यदि ऊर्द्ध्वमार्गेण कामं विषं कफजो दोषः, निदानञ्च सदा लङ्घनम्, अन्यथा तर्पणम्। तर्पयतीति तर्पणमशनम्। तेन यवागूतर्पणञ्च ग्राह्यम्। ये तु मन्थतर्पणं तर्पणमिति, तन्मते—यवागूदानपक्षो न संगृहीतः स्यात्।—प्रागधोगमन इति।—अधोगे रक्तपित्ते प्राक् पूर्वं पेयादिरनिषिद्धः ॥ १ ॥

तर्पणमित्यादि।—चरकस्य। स्पष्टम्। तेन द्रवेण सक्तूनामापीडनं कार्यं तदाह, जलमित्यादि।—अथ खर्जूरादिना जलं षडङ्गविधानेन साधयेत्। एतच्च जलमद्यं मधुरमपूर्वं कफक्षयश्च रक्तपित्तशमनोद्धतया दीपितं वदन्त ॥ २ ॥

विरेचनमाह त्रिवृतेत्यादि।—त्रिवृतेति—श्वेतमूलम्; श्यामेति—श्यामामूला त्रिवृत, न तु श्यामा लता प्रियङ्गुर्वा, यतः ग्रहणात्रिवृतः कल्पस्थाने दर्शितत्वात्। यत "मोदके त्रिवृतो गुडः" इति वचनात् शर्करायाश्चूर्णेनिर्दिष्टेऽपि, मधु पुनरेक-द्रवाधर्मं, किंवा मधुशर्करे मिलित्वा चूर्णात्रिगुणम्, एकत्वेऽपि मोदकार्हत्वात्। एवं दोषः मृदुनेऽपि स्यान्न, तीक्ष्णात्तु विकल्पनातः प्रक्षेपं ज्ञात, सर्वगतत्वात्-कश्च मोदकप्रोक्तमाह ॥ ३ ॥

शालपर्ण्यादिना सिद्धेति।—शालपर्ण्यादि लघुपञ्चमूलं तदुक्तिकारे उक्तं तो

शालिषष्टिकनीवार-कोरदूषप्रशातिकाः।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥
मसूरमुद्गचणकाः समकुष्टाढ़कीफलाः।
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम् ॥
शाकं पटोलवेत्राग्र-तण्डुलीयादिकं हितम्।
मांसं लावकपोतादि-शशैणहरिणादिजम् ॥ ५ ॥
विना शुण्ठीं षडङ्गेन सिद्धं तोयञ्च दापयेत् ॥ ६ ॥
क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम्।
अवम्यमविरेच्यञ्च स्तम्भनैः समुपाचरेत् ॥ ७ ॥
वृषपत्राणि निष्पीड्य रसं समधुशर्करम्।
पिबेत् तेन शमं याति रक्तपित्तं सुदारुणम् ॥ ८ ॥

---

च स्वल्पमच्छं देयम्। एवं शाल्पषष्ट्यादिरुपयोगः दोषाद्यपेक्षया देयमित्याहुः। व्यवहारस्तु प्रायः स्वल्पपञ्चमूलेनेति। शमनमिति।—अयो द्रवद्रव्यालोडिताः प्रकाशः ॥ ४ ॥

शाल्यादौ।—नीवार उड़िधान इति ख्याता, कोरदूषः कोद्रवः, स चेह पुरातनो ग्राह्यः, तेन कोरदूषस्य रक्तपित्तहेतुत्वं चरके निदानस्थाने प्रोक्तं, तदभिनवाभिप्रायेणेति केचित्। अन्ये तु निष्पावमाषपूपादियुक्तस्यैव कोरदूषस्य संयोगमहिम्ना रक्तपित्तहेतुत्वं निदाने प्रोक्तं, केवलस्य तु कषायमधुरत्वेनलात् रक्तपित्तघ्नत्वमित्याहुः। प्रशातिका रक्तशूका, रक्त धड़िया इति ख्याता, सा जलमध्ये जायते भवति। प्रियङ्गुः कङ्गुः, काउनीति लोके। आढकी तुवरी ॥ ५ ॥

विना शुण्ठीमित्यादि स्पष्टम् ॥ ६ ॥

निर्दिष्टवमनविरेचनमाह क्षीणेत्यादि।—क्षीणानुबन्धिनं यक्ष्मानुबन्धयुतम् ॥ ७ ॥

वासकयोगमाह वृषेत्यादि। वृषस्य पत्राणि पुटपाकविधिना सम्पिष्य तेषां रसो ग्राह्यः, अन्यथा तादृशरसो दुर्लभो भवति। अयञ्च योग जर्दिते बोध्य इत्याहुः। 'योगोऽयं मधुशर्करायोर्विरेकेण तत्तुल्यकषायेणापि बोध्यः; तदाह वाग्भटः,—"पित्ताढ्यं शमयेत् पीतो निर्यासो वाटरूषजः। मधुशर्करयायुक्तः केवलो वा शृतोऽपि वा ॥" इति ॥ ८ ॥

कटरुपकनिर्य्यूहे प्रियङ्गुमृत्तिकाञ्जने।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ९ ॥

वासाकषायोत्पलमृत्प्रियङ्गु-
लोध्राञ्जनाम्भोरुहकेशराणि।
पीत्वा सिताक्षौद्रयुतानि हन्यात्
पित्तासृजो वेगमुदीर्णमाशु ॥ १० ॥

तालीशचूर्णसहितः पेयः क्षौद्रेण वासकस्वरसः।
कफपित्ततमककासस्वरभेदशोणितपित्तहरः ॥ ११ ॥

कटरुपकमृद्वीका-पथ्याक्वाथः सशर्करः।
क्षौद्राढ्यः कासमश्वास-रक्तपित्तनिबर्हणः ॥ १२ ॥

वासायां विद्यमानायामाशायां जीवितस्य च।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ? ॥ १३ ॥

---

कटरुपकनिर्य्यूह इत्यादि।—कटरुपो वासकः; मृत्तिका सौराष्ट्री मृत्, तद्भावे पङ्कपर्पटी; अञ्जनं रसाञ्जनम्; क्षौद्रान्तोऽयं योगः। तथाच वाग्भटे—"वासारसेन फलिनीमृद्रसाञ्जनमाक्षिकम्। पित्तासृक् शमयेत् पीतम्" इति। विनीय सन्क्षोभ्य प्रक्षिप्येति वा। प्रियङ्ग्वादीनां मिलितानां कर्षं क्षौद्रस्य च कर्षं प्रक्षिप्य पिबेत्, परिभाषाबलात्। उक्तं हारितेन,—"कर्षयुग्मं कल्कस्य" इत्यादि, तथा "मात्रा क्षौद्रघृतादीनाम्" इति। कर्षं स्यात्.—चूर्णादीनां कर्षमात्रत्वं सततप्रयोग एव भवति। यदि पुनरनेकपरिभाषानुसारेण प्रियङ्ग्वादीनां प्रत्येकं गृह्यते, तदा भेषजभूयस्त्वं स्यात्, प्रियङ्ग्वादीनामल्पत्वं पुनर्भवति; व्यवहारस्तु प्रियङ्ग्वादिकल्कक्षौद्रयोः प्रत्येकं चतुःपञ्चमाषक प्रक्षेप इति ॥ ९ ॥

वासाकषाय इत्यादि।—सुश्रुतस्य। उत्पलादीनां क्षौद्रान्तानां प्रक्षेपः। सितामधुनोः प्रत्येकं माषा, उत्पलादीनां मिलित्वा माषा इत्याह ॥ १० ॥

तालीशेत्यादि।—पल वासकस्वरसस्य पलं, तालीशचूर्णस्य शाणकार्षं, मधु आपचतुष्टयमिति व्यवहरन्ति ॥ ११ ॥

कटरुपकेत्यादि।—चरकस्यायं योगोऽभावे इति जेज्जटः, इदमने नार्थं चन्द्रादिषु बहुसंग्रहेष्वपीति ॥ १२ ॥

वासायामित्यादि।—स्पष्टम् ॥ १३ ॥

एलादिगुडिका—

एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा ।
सितामधुकखर्जूर-मृद्वीकाश्च पलोन्मिताः ॥
संचूर्ण्य मधुना युक्त्या गुडिकाः कारयेद्भिषक् ।
अक्षमात्रां ततश्चैकां भक्षयेत्तु दिने दिने ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥
शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम् ।
गुडिका तर्पणी हृष्या रक्तपित्तञ्च नाशयेत् ॥ २४ ॥
लोहगन्धिनि निश्वासे चोद्गारे रक्तगन्धिनि ।
पृथ्वीकां प्राणमात्रान्तु खादेद्द्विगुणशर्कराम् ॥ २५ ॥
नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम् ।
सेतुरिव तोयवेगं रुणद्धि मूर्ध्नि प्रलेपेन ॥ २६ ॥
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा ।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करञ्चेक्षुरसं हितं वा ॥ २७ ॥

---

यथा चूर्णीकृतं द्रव्यं सर्वमार्द्रं भावनाविधिः । द्रवेण यावता द्रव्यमेकीभूयार्द्रता भवेत् । तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ ॥" इति ॥ २३ ॥

एलेत्यादि ।—त्वक्क्षीरी पत्रकम् ।—अर्द्धाक्षा इति प्रत्येकं कर्षार्द्धमानाः । एवं सितादयश्च प्रत्येकं पलोन्मिताः । युक्त्या इति ।—यावता मधुना गुडिका भवति तावन्मात्रं मधु देयम् । आढ्यवातं वातरक्तम्, ऊरुस्तम्भमित्यन्ये ॥ २४ ॥

पृथ्वीकां प्राणमात्रामिति ।—पृथ्वीका स्थूलजीरकं, न तु सूक्ष्मैला, टीकाकृद्भिर्व्याख्यातत्वात् । प्राणो माषचतुष्टयम् । स्थूलजीरकस्य तीक्ष्णत्वे उष्णत्वेऽपि द्विगुणशर्करायोगात् प्रभावाद्वा पित्तघ्नत्वम् ॥ २५ ॥

नासेत्यादि ।—आमलकं घृते भृष्टं काञ्जिके पिष्ट्वा मूर्ध्नि लेपो देयः ॥ २६ ॥

घ्राणप्रवृत्त इत्यादि ।—सुगमम् । जलादयः सशर्कराः पञ्च नस्ययोगा इति गदाधरः । तथा जलमपि घ्राणमार्गे सशर्करं पानीयं, पयोऽपि सशर्करं,

नासाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥
चक्षुःस्राविणि रक्ते तु पूरयेत् तेन चक्षुषी ।
मेढ्रपायुप्रवृत्ते तु वस्तिकर्मसु तद्धितम् ॥
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत् ॥ २० ॥

शतावरीघृतम्—शतावरी दाडिमतिन्तिडीकम्
काकोलिमेदे मधुकं विदारीम् ।
पिष्ट्वा च मूलं फलपूरकस्य
घृतं पचेत् क्षीरचतुर्गुणं भः ।
कासज्वरानाहविबन्धशूलं
तद्रक्तपित्तं घृतमाशु हन्यात् ॥ २१ ॥

बृहच्छतावरीघृतम्—

शतावर्यास्तु मूलानां रसप्रस्थद्वयं मतम् ।
तत्समश्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत् ॥
जीवकर्षभकौ मेदा महामेदा तथैव च ।
काकोली क्षीरकाकोली मृद्वीका मधुकं तथा ॥
मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम् ।
शर्करामधुसंयुक्तं मिश्रं विस्रावयेद्भिषक् ॥
रक्तपित्तविकारेषु वातरक्तगदेषु च ।

---

नयनादिव रक्तस्रावी शीतसंस्पर्शनिर्गमनात्; व्यवहारस्तु प्रायः केवलस्यैवेति । तन्मूलस्य स्वगावीरस्य प्रयोगं चतुर्गुणं, दृष्ट्वा चेचेति चक्रपाणिरित्याह: ॥ १० ॥

शतावरीत्यादि ।—चरकस्य । केचिदत्र दाडिमकम् श्रीतरपाठिकमित्याहुः । तिन्तिडीकं महार्द्रकम् । काकोल्युक्ते मेदे काकोलीमेदे, मध्यपदलोपी समासः; किंवा काकोलीशब्दः प्रत्येकमभिसम्बध्यते, मेदे इति मेदाद्वयं, तन्मात्रप्रमाणात्; उक्तं हि—"काकोली मधुकं मेदे तिन्तिडीकं महार्द्रकम् । शतावरी विदारी च बीजपूरजटान्वितम् ॥ सिद्धं चतुर्गुणे क्षीरे रक्तपित्तं व्यपोहति ॥" इति ॥२१॥

कामदेवघृतम्—

अश्वगन्धापलशतं तदर्द्धं गोक्षुरस्य च।
शतावरी विदारी च शालपर्णी बला तथा॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा।
काश्मरीफलमेतत्तु माषबीजं तथैव च॥
पृथग्दश पलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत्।
चतुर्भागावशेषन्तु कषायमवतारयेत्॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम्।
बालकं नागपुष्पञ्च आत्मगुप्ताफलं तथा॥
नीलोत्पलं शारिवे द्वे जीवनीयं विशेषतः।
पृथक् कर्षसमञ्चैव शर्करायाः पलद्वयम्॥
रसस्य पौण्ड्रकेक्षूणामाढ़कं तत्र दापयेत्।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत्॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम्।
हलीमकं तथा शोथं स्वरभेदं बलक्षयम्॥
अरोचकं मूत्रकृच्छ्रं पार्श्वशूलञ्च नाशयेत्।
एतद्राज्ञां प्रयोक्तव्यं बह्वन्तःपुरचारिणाम्॥
स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहिनाम्।
क्लीवानामल्पशुक्राणां जीर्णानामल्परेतसाम्।

---

चमत्वात् मधुनीऽपि चतुष्पलकमाहुः। अत्र कैश्चिदन्ते—"कासं ज्वरं पित्तभवञ्च शूलं गुल्मं यकृत् प्लीहगदांश्च हन्ति" इति पाठद्वयं पठन्ति। चान्येऽप्युक्तं—"हिक्का-गुल्मयक्ष्मश्वास-कासहृद्रोगकामलाः। तिमिरज्वरजीर्णत्व-स्वरभेदांश्च नाशयेत्॥" इति॥ ११॥

अश्वगन्धेत्यादौ।—तदर्द्धमिति गोक्षुरस्य पञ्चाशत् पलानि; शतावर्य्यादीनां सप्तानाञ्च प्रत्येकं पञ्चाशत् पलानीत्यर्थः। अश्वत्थशुङ्गादीनाञ्च पञ्चानां पृथक् दश

त्वगेलापत्रमरिच-धान्यकानां पलार्द्धकम् ।
न्यस्येत् चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् पुनः ॥
तत् पक्वं स्थापयेद्भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम् ।
तद्यथाग्निबलं खादेद् रक्तपित्ती क्षतक्षयी ॥
कासश्वासतमश्छर्दि-तृष्णाज्वरनिपीड़ितः ।
वृष्यं पुनर्नवकरं बलवर्णप्रसाधनम् ॥
उरःसन्धानकरणं बृंहणं स्वरवर्द्धनम् ।
अश्विभ्यां निर्मितं सिद्धं कुष्माण्डकरसायनम् ॥
खण्डामलकमानानु-सारात् कुष्माण्डकद्रवात् ।
पात्रं पाकाय दातव्यं यावान् वात्र रसो भवेत् ।
अत्रापि मुद्रया पाको निस्त्वचं निष्कुलीकृतम् ॥ ११ ॥

---

द्वे पले गोरसस्य चेति ।—कणाशुण्ठ्योः प्रत्येकं पलद्वयं; गोरसस्य च द्वे पले; तन्त्रान्तरसम्मतमेतत् । तद्यथा—"पिप्पलीभिः कणाशुण्ठी-गोरसैश्चूर्णितैः" इति । वैद्यसम्प्रदायेऽप्येवमेवोक्तम् । व्यवहारोऽप्येवमेव । अन्ये तु पलार्द्धमिति पदेन सम्बन्धात् गोरसस्य पलार्द्धमित्याहुः; तन्न, तन्त्रान्तरविरोधात् । त्वगेलादीनाञ्च चतुर्णां प्रत्येकं पलार्द्धम् । आयुर्वेदसारेऽप्युक्तं—"कुष्माण्डकानां रूढानां खिन्नं शतपलं पचेत् । प्रस्थे घृतस्य प्रस्थे मधुकेऽथ वीचिते ॥ खण्डाच्छतं कणाशुण्ठ्योर्द्विपलं नागरादपि । चात्मोषधं त्रिगन्धञ्च पृथगर्द्धपलांशिकम् । घृतार्द्धं माक्षिकोपेतं तत् खादेद्रक्तपित्तजित् ॥" इति । घृतार्द्धमिति—घृतार्द्धमानमित्यर्थः । खण्डामलकमानानुसारादित्यादि ।—खण्डामलकी कुष्माण्डतुलार्द्धे कुष्माण्डरसामलकरसयोः प्रत्येकं प्रस्थ उक्तः; तेन कुष्माण्डमत्र पात्रे यावदिति द्विगुणत्वेन प्रस्थचतुष्टयं दातव्यमित्यर्थः । पक्षान्तरमाह—"यावान् वात्र रसो भवेत्" इति ।—खिन्नकुष्माण्डस्यातिपीड़नेन यावान् रसो भवति तावानेव पात्र इत्यर्थः; व्यवहारोऽप्यनेनैव । मुद्रयापि पाकः, उक्तं हि तन्त्रान्तरे—"दृढं पुरातनं चापि कुष्माण्डं कठिनं दृढम् । त्वक्शिराभ्यां विनिर्मुक्तमण्वीभिर्वर्जितम् ॥ खिन्नं सुपिष्टं दृषदि वस्त्रेणैव प्रपीड़ितम् । विशुष्कमातपे किञ्चित् पात्रं तत् मुद्रया धृतम् ॥ पीडुम्बरकटाहे तु पचेत् प्रस्थे च सर्पिषः । कृत्वा चौडुनिकं तद्धितम्

वासाखण्डकुष्माण्डकः—

पञ्चाशच्च पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः ।
पाच्यं पलशतं खण्डं वासाक्वाथाढ़के पचेत् ॥
मुस्ताधात्रीशुभाभार्गी-त्रिसुगन्धैश्च कार्षिकैः ।
ऐलेयविश्वधन्याक-मरिचैश्च पलांशिकैः ॥
पिप्पलीकुडवञ्चैव मधुमानीं प्रदापयेत् ।
एतच्चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् पुनः ॥
तद् यथाग्निबलं खादेद् रक्तपित्ती क्षतक्षयी ।
हृष्यं पुनर्नवकरं बलवर्णकरञ्च तत् ॥
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम् ।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥ ३७ ॥

---

विपचेत् खण्डयेनं भिषक् । कुष्माण्डपीठमात् वीर्यं यत् तेन विपचेत् पुनः ॥" इति । मुद्रया पाक इत्यादि—चाङ्गुलिपीडनजन्यं चिह्नं मुद्रा, तया पाको ज्ञेय. । एतच्चोप-चयार्थं, तैलाभ्यदपि पक्वाचयं ज्ञेयम् ॥ ३६ ॥

पञ्चाशच्च पलमित्यादि ।—पलानि पूर्ववत् स्विन्नं, संस्कृतकुष्माण्डात् पञ्चाशत्-पलम् । न चात्र खण्डकुष्माण्डवत् कुष्माण्डरसो ग्राह्यः, पाकार्थं वासाक्वाथस्यैवोक्त-त्वात् । वासाक्वाथस्तु चतुःषष्टिः पलानि, अन्यत्रापि चतुःषष्टिः शरावाः ; व्याख्यन्तु चतुःकृष्ण-प्रमाणम् । शुभा वंशलोचना, त्रिगन्धम् एलात्वक्पत्रकम् । मधुमानीति मधुनो-ऽर्द्धप्रस्थं पलानि । अत्र केचित् माणिकायां द्वैगुण्यमिच्छन्ति ,—किन्तु—"माणिका-कुडवौ चेति या वा संज्ञा पल्कैः कृता । चार्द्रद्रव्ये द्रवे चैव न तत्र द्विगुणो विधिः ॥" इति वचनात्, तथा चारपाणिवचने माणिकादौ पलानि वैव्यवहारवादृष्टानैव पलानि, न तद्द्वैगुण्यात् चोदय पलानीत्यर्थः । चरकेऽपि पूर्वं शरावनिष्पत्र पूर्वपदेन द्रवार्थे द्वैगुण्याभावः सूचितः, तथा हि पूर्वपदं द्वैगुण्यप्रतिषेधपरम्, अन्यथा पूर्वपदं व्यर्थं स्यात् । एतत्तु माणिकाकुडवौ चेति वचनस्य केनापि क्वचिदप्यनिर्लिखितत्वादनादरं-णाद्य माणिकायां द्वैगुण्यमिच्छन् चरकोक्तशरावादिष्वेव माणिकायाः चोडशपलत्व व्याख्यातवान् ॥ ३७ ॥

वासाखण्डकुष्माण्डकः—

पञ्चाशञ्च पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः ।
पात्रं पलशतं खण्डं वासाक्काथाढ़के पचेत् ॥
मुस्ताधात्रीशुभाभार्गी-त्रिसुगन्धैश्च कार्षिकैः ।
ऐलेयविश्वधन्याक-मरिचैश्च पलांशिकैः ॥
पिप्पलीकुड़वश्चैव मधुमानीं प्रदापयेत् ।
एतच्चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् पुनः ॥
तद् यथाग्निबलं खादेद् रक्तपित्ती क्षतक्षयी ।
हृद्यं पुनर्नवकरं बलवर्णकरञ्च तत् ॥
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम् ।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥ ३७ ॥

---

विपेत् खण्डमतं भिषक् । कुष्माण्डपीडनात् तोयं यत् तेन विपचेत् पुनः ॥" इति । मुद्रया पाक इत्यादि—अङ्गुलिपीडनजन्य चिह्नं मुद्रा, तथा पाको ज्ञेय । एतच्चोप-लक्षणं, तेनान्यदपि पक्कलक्षणं ज्ञेयम् ॥ ३६ ॥

पञ्चाशच पलमित्यादि ।—अत्रापि पूर्ववत् स्विन्नं, खण्डितकुष्माण्डात् पञ्चाशत्-पलम् । न चात्र खण्डकुष्माण्डवत् कुष्माण्डरसो ग्राह्यः, पाकार्थं वासाक्काथस्यैवोक्त-त्वात् । वासाक्काथस्तु चतुः षष्टि पलानि, जलन्तापि चतुःषष्टिः शरावाः ; क्काथस्तु षोडश-शरावकप्रमाणढकम् । शुभा वंशरोचना, ऐलेयम् एलवालुकम् । मधुमानीति मधुनोऽ-ष्टौ पलानि । अत्र केचित् मानिकायाः द्वैगुण्यमिच्छन्ति ;—किन्तु—"मानिका-कुड़वौ चेति या वा संज्ञा पलैः कृता । चार्द्रद्रव्ये द्रवे चैव न तत्र द्विगुणं विदुः ॥" इति वचनात्, तथा चारपाणिवचने मानिकाष्टौ पलानीत्येवमवधारणादष्टावेव पलानि, न तद्द्वैगुण्यात् षोड़श पलानीत्यर्थः । चरकेऽपि पूर्वं शरावनियत पूर्वपदेन शरावे द्वैगुण्याभावः सूचितः, तथा हि पूर्वपदं द्वैगुण्यप्रतिषेधपरम्, अन्यथा पूर्वपदं व्यर्थं स्यात् । यच्च मानिकाकुड़वौ चेति वचनस्य केनापि क्वचिदप्यलिखितत्वादनार्षत्व-मायद्य मानिकायां द्वैगुण्यमिच्छन् चरकोक्तच्युणादिभूते मानिकया षोड़शपलत्व व्याख्यातवान् ॥ ३७ ॥

वासाखण्डः—तुलामादाय वासायाः पचेदष्टगुणे जले।
तेन पादावशेषेण पाचयेदाढकं भिषक्॥
चूर्णानामभयानाञ्च खण्डाच्छुद्धाच्छतं तथा।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्॥
कुडवं पलमात्रन्तु चातुर्जातं सुचूर्णितम्।
क्षिप्त्वा विलोडितं खादेद्रक्तपित्ती क्षतक्षयी।
श्वासकासपरीतश्च यक्ष्मणा च प्रपीडितः॥ ३८॥

खण्डाद्यो लौहः—

शतावरी छिन्नरुहा वृषो मुण्डतिका बला।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा॥
भार्गी पुष्करमूलञ्च पृथक् पञ्च पलानि च।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम्॥
दिव्यौषधहतस्यापि माक्षिकेण हतस्य वा।
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम्॥
खण्डतुल्यं घृतं देयं पलषोडशिकं बुधैः।

---

तुलामादायेत्यादि।—पचनार्द्रां वासां, एवं सर्वत्र, निम्बादिकामपि। यदाह हि—"वासानिम्बपटोलकेतकिबलाकूष्माण्डकेन्दीवरी-वर्षाभूकुटजाश्वगन्धसहिताः ये पूति-गन्धामृताः। मांसं नागबलाद्वयञ्च पुरतो दिङ्गाद्रके निम्बयो ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेदृशास्ते यथा।" इति। अष्टगुणे जल इति—द्रवाद्यपेक्षे; मान द्वैगुण्यम्,—"न द्वैगुण्यं तुलामाने पलोद्दिष्टागते तथा" इत्युक्तेः। चतुर्थांशाव पच-विंशतिशरावाः। चूर्णानामिति—हरीतकीचूर्णानामाढकं चतुःषष्टिशरावमित्यर्थः; "प्रायो न पाकश्चूर्णानाम्" इति प्रायःशब्दात् पाकोऽप्यस्तीति सूचयति, तेन चूर्णानां पाकोऽपि न विरोधः। "चातुर्जातं पलमात्रम्" इति प्रत्येकं पलमात्रं, निर्देशस्य मान-प्रधानत्वात्॥ ३८॥

खण्डकाद्यं लौहमाह, शतावरीत्यादि।—छिन्नरुहा गुडूची; वृषो वासकः, मुण्डतिका मुण्डीरी; गायत्री खदिरः। त्रिफलायास्त्वच इति—निर्वीजत्रिफलायाः।

पचेत् ताम्रमये पात्रे गुड़पाको यथा मतः ॥
प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकत्वचः ।
शृङ्गी विडङ्गं कृष्णा च शुण्ठ्यजाजी पलं पलम् ॥
त्रिफला धान्यकं पत्रं द्व्यक्षं मरिचकेशरम् ।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥
यथाकालं प्रयुञ्जीत बिडालपदकं ततः ।
गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पयः ।
गुरुहृद्यानुपानानि स्निग्धं मांसादि बृंहणम् ॥
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ।
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्रिमीन् ॥
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा ।
आनाहं रक्तसंस्रावमम्लपित्तं निहन्ति च ॥
आरोग्यं पुष्टिदं श्रेष्ठं कामाग्निबलवर्द्धनम् ।
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम् ॥

---

दिव्यौषधिसंज्ञा शिला, कपामूल वा, माक्षिकं स्वर्णमाक्षिकम्। मत शिलास्वर्णमाक्षिकाभ्यां प्रत्येकं भिन्निता वा प्रक्षिप्य दग्ध्वा च लौहं मारणीयम्। खण्डतुल्यमिति च्छेदः; तेन खण्डस्यापि द्वादश पलानि। केचित् तु रक्तपित्तहन्तृत्वात् खण्डस्य प्रचुरतरमेवाधिकरोतीति घृतपदेन सह खण्डतुल्यमिति योजयन्ति, तत्र तु न सम्यक्, लौहयोगत्वादस्य लौहमात्राधिक्येन तन्मात्रापकर्षस्यायुक्तत्वात्; रक्तपित्तप्रत्यनीकत्वम् लौहस्य स्वरूपत एव महाशक्तिकत्वात् विशेषतो रक्तपित्तहरम्। तत् तु द्रव्यपुटादिभावितत्वेन महावीर्यकत्वयोपपन्नम्; व्यवहारश्च लौहसमतयैव। प्रस्थार्द्धमिति—षोडश पलानि। शुभा वंशलोचना; अश्मजतुक शिलाजतु, त्वक् गुडत्वक्; शुभादीनां जीरकान्तानां प्रत्येकं पलं; त्रिफलादीनां केशरान्तानां प्रत्येकं द्व्यक्षं, कर्षद्वयमित्यर्थः। विडालपदकं कर्षः; एतच्च पूर्वपुरुषाभिप्रायेण प्रमाणमुक्तं, व्यवहारस्तु रक्तिविषतु पञ्चकादारभ्य रक्तिद्वयवृद्ध्या माषचतुष्टयं यावत् वृद्धिः। गव्यक्षीरानुपानमिति।—क्षीरापेक्षया चतुःषष्टिगुणं, क्षीरान्तरे तथा दर्श-

क्षीराद्यं साधवकारं खण्डकाद्यं प्रकीर्त्तितम् ॥
छागं पारावतं मांसं तित्तिरिः क्रकराः मृगाः ।
कुरङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत् ॥
नारिकेलपयःपानं सुनिषण्णकवास्तुकम् ।
शुष्कमूलककौशाख्यं पटोलं वृहतीफलम् ॥
फलं वार्त्ताकु पक्वाम्रं खर्जूरं स्वादु दाड़िमम् ।
यकारपूर्वकं यच्च मांसञ्चानूपसम्भवम् ॥
वर्जनीयं विशेषेण खण्डकाद्यं प्रकुर्वता ।
लोहान्तरवदत्रापि पुटनादिक्रियेष्यते ॥ ३९ ॥
यच्च पित्तज्वरे प्रोक्तं वहिरन्तश्च भेषजम् ।
रक्तपित्ते हितं तच्च क्षीणक्षतहितञ्च यत् ॥ ४० ॥

इति रक्तपित्त-चिकित्सा ।

---

मात् । उक्तं हि—"मधुपाने चतुःषष्टिगुणं माषः सदा बुधाः" इति । क्षीराद्यमिति क्षीराख्यमाद्यं नारिकेलाकारं चण्डकाद्ये क्षीरेति ख्यातम् । सकारपूर्वकमिति विहिताम् क्रकरकुरङ्गकृष्णसारान् विहाय, दद्यात् । यकारपूर्वकं यमीतकर्कोटादि, तत् परित्याज्यम् । लोहान्तरवदत्रापि परिमलादि ज्ञेयं, मधुघृतमर्द्दनादिकञ्च । अत्र केचित् मध्वाज्यसंयोगं कुर्वन्ति । एतदनुकूलञ्च वचनं पठन्ति,—"न रसेन विना लौहं मध्वाज्याभ्यां विना" इति, तथा—"मधुहीन विना लौहं यः करोति पुमानिह । उदरे तस्य किट्टानि जायन्ते नात्र संशयः ॥" इति । एतत् तु न व्यवहारसिद्धम् । यतः रसायनहितलौहप्रयोगस्य मन्दसन्तापप्रतिपादनार्थं तथाधकश्लोके [illegible] प्रक्षेपणार्थञ्च [illegible] चक्रपाणौ वाक्यद्वयमिदं पठितम् । पुमानिहेति, वृद्धवाग्भटवचनद्वयमपि तत्रैव बोध्यं, नान्यत्र । अन्यथा सामान्यत एव परिभाषितमिदं स्यादिति ॥ ३९ ॥ ४० ॥

इति रक्तपित्त-चिकित्सा विवृतिः ॥

अधोभागीकृते दोषे छर्दिः क्षिप्रं निवर्त्तते ॥ ९ ॥

गुडूचीत्रिफलारिष्ट-पटोलैः क्वथितं पिबेत्।
क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्तात्मसम्भवाम् ॥ १० ॥
क्वाथः पर्पटजः पीतः सक्षौद्रश्छर्दिनाशनः ॥ ११ ॥

कफात्मिकायां वमनं प्रशस्तम्
सपिप्पली-सर्षप-निम्बतोयैः।
पिण्डीतकैः सैन्धवसंप्रयुक्तै-
श्छर्द्यां कफामाशयशोधनार्थम् ॥ १२ ॥

विडङ्गत्रिफलाविश्व-चूर्णं मधुयुतं जयेत्।
विडङ्गप्लवशुण्ठीनामथवा श्लेष्मजां वमिम् ॥ १३ ॥

मज्जाम्रवं वा बदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम्।
दुरालभां वा मधुसंप्रयुक्तां लिह्यात् कफच्छर्दिविनिग्रहार्थम् ॥१४॥

---

हरीतकीनामित्यादि।—स्पष्टम् ॥ ९ ॥

गुडूच्यादौ।—पित्तात्मसम्भवामिति पक्वपित्तसम्भवाम् ॥ १० ॥

क्वाथ इत्यादि।—स्पष्टम् ॥ ११ ॥

कफात्मिकायामित्यादौ।—सपिप्पलीसर्षपनिम्बतोयैरिति।—निम्बपत्रजलस्यामेव क्वाथे पिप्पल्यादीनां प्रक्षेप इति चन्द्रिका; अन्ये तु—जीवकदम्भात वर्जादव-क्वाथे पिप्पल्यादीनां प्रक्षेप इति चन्द्रिका; अन्ये तु—जीवकदम्भात वर्जादव-शुध्यते; तेन पिप्पल्यादिकल्कयुतावापेन निर्दिशत्याहुः। यत्कटेऽप्युक्तं—"वमनार्था धर्मेविन-ज्ञानादिफ्नीतसर्षपैः। युक्तेन कोष्णतोयेन" इति। तस्मादुक्तमपि वमन-योग्यत्वेन सैन्धवं ग्राह्यम्। पिण्डीतको मदनफलम्। कफामाशयशोधनार्थमिति—कफपूर्णामाशयशोधनार्थम्; कफस्यामाशयस्य च शोधनार्थमित्यन्ये ॥ १२ ॥

विडङ्गेत्यादौ।—द्वयं श्लेष्मच्छर्दिघ्नम् ॥ १३ ॥

मज्जाम्रवमित्यादि।—आम्रवं जम्बुफलास्थि। बदरस्य चूर्णमिति।—बदराख्य-चूर्णमिति चरके पठ्यते, तस्माद् बदरबदरास्थि चूर्णम्; अन्ये तु—बदरस्य चूर्णमिति दशिला बदरास्थिमज्जचूर्णमित्याहुः। मुस्तायुतां कर्कटकस्य शृङ्गीमिति—द्वितीयो योगः। दुरालभां वेति—तृतीयो योगः। योगत्रयेऽपि मधु सम्बध्यते ॥ १४ ॥

तर्पणं वा मधुयुतं तिसृणामपि भेषजम् ।
कृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम् ॥
तिसृष्वपि भवेत् पथ्यं माक्षिकेण समायुतम् ॥ १५ ॥
द्रव्यादापोथितात् तोये प्रतप्ते निशि संस्थितात् ।
कषायो योऽभिनिर्य्याति स शीतः समुदाहृतः ॥
षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयोः ।
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम् ॥ १६ ॥
श्रीफलस्य गुडूच्या वा कषायो मधुसंयुतः ।
पेयश्छर्दिजये शीतो मूर्वा वा तण्डुलाम्बुना ॥ १७ ॥

जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्य-
ह्रीबेरवारि मधुना पिबतोऽल्पमल्पम् ।
छर्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता
लीढ़ा निहन्ति मधुनाथ दुरालभा वा ॥ १८ ॥

---

तर्पणमित्यादि।—तर्पणं लाजशक्तुभिः कृतम्। तिसृणामिति।—पृथग्वातादिजानाम्, अन्यथा बहुवचनानुपपत्तिः। एतेन त्रिदोषजच्छर्दिहरत्वमप्युक्तं भवति, यतः पृथग्वातादिच्छर्दिभेषजयुक्तमेव सान्निपातिकच्छर्दिभेषजं भवति, यतस्तेषां तद्योगत्वात्। कृतमित्यादि।—गुडूच्याः। अत्रापि पूर्ववत् व्याख्येयम्। हिमसंज्ञितमिति।—शीतकषायसंज्ञितं, तदर्थमेव लक्षणपरिभाषामाह, द्रव्यादित्यादि।—द्रव्यखण्डमम्बु प्रक्षिप्य भेषजार्थपलं जलषट्पलमिति। रसाख्यायां पलद्वयमिति।—रसक्रियायां यत्र भेषजमुष्णोदके प्रक्षिप्य स्वरसानुकल्पः क्रियते तत्र कार्षिकं भेषजस्य पलद्वयं दत्वा स्वरसानुकल्पः कार्यः ॥ १५ ॥ १६ ॥

श्रीफलस्येत्यादि।—श्रीफलं बिल्वं, तस्य मूलं ग्राह्यं,—"बिल्वमूलं मरुत्-श्लेष्मच्छर्दिघ्नं न च पित्तलम्" इति गुणपाठात्, एवमन्यत्रापि। गुडूच्या वा कषाय इति।—गुडूच्याः क्वाथ एव शीतलः कार्यः, न तु शीतकषायः, मात्रार्जुनकादौ तथोक्तत्वात्; यथा—"छिन्नरुहायाः क्वाथं सुशीतं यो नरः पिबेन्मधुना। छर्दिं स दारुणां त्रिदोषकृतां निवारयति" इत्यादि ॥ १७ ॥

जम्ब्वित्यादि।—गवेधुको तृणः, धान्यं धान्यकम्; सेव्यमुशीरम्; वारि

जात्या रसः कपित्थस्य पिप्पली-मरिचान्वितः ।
क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्दिमुल्बणाम् ॥ १९ ॥
पिष्ट्वा धात्रीफलं द्राक्षां शर्कराञ्च पलोन्मिताम् ।
दत्त्वा मधुपलञ्चात्र कुडवं सलिलस्य च ।
वाससा गालितं पीतं हन्ति च्छर्दिं त्रिदोषजाम् ॥ २० ॥

एलादिचूर्णम्—एलालवङ्गगजकेशरकोलमज्ज-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
च्छर्दिं निहन्ति कफमारुतपित्तजाञ्च ॥ २१ ॥

कोलामलकमज्जानो मक्षिकाविट् सिता मधु ।
सकृष्णातण्डुलो लेहश्छर्दिमाशु नियच्छति ॥ २२ ॥
अश्वत्थवल्कलं शुष्कं दग्ध्वा निर्वापितं जले ।
तत्तोयपानमात्रेण छर्दिं जयति दुस्तराम् ॥ २३ ॥
यस्याङ्गं चन्दनोपेतं सम्यक् क्षीरप्रपेषितम् ।
तेनैवालोड्य पातव्यं रुधिरच्छर्दिनाशनम् ॥ २४ ॥
लाजाकपित्थमधुमागधिकोषणानाम्
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम् ।

---

शीतकषाय इत्यर्थः । पुनरुक्तमपि शीतकषायोक्तं, विशेषनियोगेन योगान्तरत्वात् न पौनरुक्त्यम् ॥ १८ ॥

जात्या इत्यादि ।—जाती कामभक्ती ; कपित्थस्येति—कपित्थरसेन । एष एकार्थो योगः ॥ १९ ॥

पिष्ट्वेत्यादि ।—इदन्तु अम्लपानापेक्षया पेयं, शेषं स्पष्टम् ॥ २० ॥

एलेत्यादि ।—स्पष्टम् ॥ २१ ॥

कोलेत्यादि ।—कोलं बदरं, तदस्थिमज्जा ग्राह्या । कृष्णातण्डुलः पिप्पलीतण्डुलः ॥ २२ ॥

अश्वत्थेत्यादि ।—स्पष्टम् ॥ २३ ॥

यस्याङ्गमित्यादौ ।—तेन इति—क्षीरेण ॥ २४ ॥

पित्तोत्थितां पित्तहरैर्विपक्वम्
निहन्ति तोयं पय एव वापि ॥ ३ ॥
काश्मर्यशर्करायुक्तं चन्दनोशीरपद्मकम् ।
द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ ४ ॥
पित्तजायान्तु तृष्णायां पक्वोडुम्बरजो रसः ।
तत्क्वाथो वा हिमस्तद्वच्छारिवादिगणाम्बु वा ॥ ५ ॥
स्याज्जीवनीयसिद्धं क्षीरघृतं वा पित्तजे तर्षे ॥ ६ ॥
तद्वद्द्राक्षाचन्दनखर्जूरोशीरमधुयुक्तं तोयम् ॥ ७ ॥
सशारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे वा ।

जलदानात् तृष्णाया उपरोधं दुःखं कदापि न कुर्यात् ; किंवा क्लिमर्थं पुनरिद-मन्याय्यं जलं दीयते इत्याह, तृष्णेत्यादि ।—यस्मात् तृष्णाया उपरोधे सति प्राणत्यागः स्यात्, अतः पुरुषः कदापि तृष्णोपरोधं न कुर्यादित्यर्थः । चन्द्रटस्तु—"पिबन् सुखोष्णं मनुजोऽपि रोगी तृषो विमुच्येत हि शालभायाः" इति पठति । क्वचित्—"पिबेत् सुखोष्णं मनुजोऽप्ययन्तु जलोत्पादुन्भस्य तदेव पानम्" इति ॥ १ ॥ २ ॥

पित्तोत्थितामित्यादि ।—सुश्रुतस्य ।—पित्तहरैरिति—काकोल्यादिभिः । चन्द्र-टस्तु—"पित्तप्रशमैस्तु तृतः कषायः सशर्करः क्षौद्रयुतः सुपीतः । शीतस्तथा पित्तकृतां निहन्ति क्षीरं घृतं वाप्यथ जीवनीयैः ॥" इति पठति, व्याचष्टे च—पित्तप्रशमैरित्युत्प-लादिभिः काकोल्यादिभिश्चेति ॥ ३ ॥

काश्मर्यादिमधुकान्त एको योगः । शीतकषायोऽयम् । अन्ये तु—एषां कल्को जलेन पेय इत्याहुः ॥ ४ ॥

पित्तजायामित्यादि ।—वाग्भटस्य । पक्वोडुम्बरज इत्यपपाठः, सुश्रुतवचनात् । हिम इति—शीतकषायः । तद्वदिति—हिम इत्यर्थः ; शारिवादिगणश्च वाग्भटोक्तः । स्याज्जीवनीयेत्यादि ।—चरकस्य ।—क्षीरघृतमिति—क्षीरोत्थं घृतम् । वा पित्तजे तर्षे इति ।—वातजे चेत्यर्थः, न तु संसर्गजे ; तेषामनुक्तत्वात् ; किंवा चन् वातानामपि इन्द्रजानां गुणानामभिधाने यो न्यायः स एवात्राप्यनुसरणीय इति ॥ ५ ॥ ६ ॥

तद्वदित्यादौ ।—तोयं शीतकषायमित्याहुः ; चक्रस्तु तद्वदिम्बुमपेन इति पठति, व्याचष्टे च—पेन इत्यत्र तर्षे इति सम्बन्ध इति । सशारिवेत्यादि ।—सुश्रुतस्य ।

कुर्य्यात् कषायांश्च तथैव युक्तान् मधूकपुष्पादिषु चापरेषु ॥ ८ ॥
बिल्वाढ़किधातकिपञ्चकोल-दर्भेषु सिद्धं कफजां निहन्ति ॥ ९ ॥
हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥ १० ॥
अजीरकाण्याद्रकशृङ्गवेर-सौवर्चलान्यर्द्धजलप्लुतानि ।
मद्यानि हृद्यानि च गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णाम् ॥ ११ ॥
क्षतोत्थितां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ॥ १२ ॥

---

सप्तमी षष्ठ्यर्थे, तेन आरग्वधादिगणचतुष्टयस्य कषायं कुर्य्यादित्यर्थः। मधुरो गणः,—काकोल्यादिः; मधुरो गण इत्यत्र प्रथमो गण इति कृत्वा पठित्वा विदारीगन्धादि-गण इति व्याचष्टे, तन्न प्रामाणिकं, वृद्धैरव्याख्यातत्वात्। अनेन गणचतुष्टयेन चत्वारः कषायाः कार्य्या इति चत्वार एव योगाः। तथैव युक्तानिति।—शीतकषाय-विधिना कृतान्; सुश्रुते कषायकल्पने चास्य वचनस्य पठितत्वात्। अन्यस्तु—"तथैव युक्तान्" इत्यत्र यदुक्तवान् इति, पूर्व्वोक्तविधानेन पचेन जलं दत्त्वा प्रभाते निशि वासनं कुर्य्यात्। मधूकपुष्पादिषु चापरेष्विति।—अपरान् शीतकषायं कुर्य्यादित्यर्थः। मधूक-पुष्पादीनि तु मधूक-शोभाञ्जन-कोविदार-प्रियङ्गुपुष्पाणि चत्वारि रक्तपित्तप्रशमनेषु पठितानि; किंवा आदिशब्दः प्रकारवाची, तेन मधूकपुष्पद्राक्षाकाश्मर्य्यखर्ज्जूरा-णीति चत्वारि ॥ ७ ॥ ८ ॥

बिल्वाढ़क्यादि।—बिल्वस्य मूलम्; आढ़की तुवरी। सिद्धमित्यतः परं जलमिति शेषः; जलमिति।—षड़ङ्गविधानेनेति चक्रः, अन्ये तु—क्वाथमाहुः। अत्र सुश्रुतटीकाकृतो धातकीपञ्चकोलस्थाने धान्यकपञ्चमूलमिति पठन्ति, पञ्चमूलं स्वल्प-मित्याहुः, सर्व्वासु तृषासु पित्तमध्यत्वेन पञ्चकोलमनुचितमित्याहुः। दर्भं कुशः। निम्बप्रसवोदकेनेति।—निम्बकुसुमक्वाथेनेति चक्रः; निम्बपुष्पक्वाथेनेत्य-न्ये; निम्बपल्लवक्वाथेनेति जेज्जटः, शुक्लवेतस्, तस्यान्तर्व्वमनाद्। आर्द्रकशृङ्ग-वेरसौवर्चलानीत्यत्र आदित्वात्। आर्द्रकशृङ्गवेरम् आर्द्रकमेव। अजीरकादिकञ्च सौरभकटुत्वमात्रकारकं देयम् ॥ ९—११ ॥

क्षतोत्थितामित्यादि।—क्षाद्‌शोकः मुमुखः। रुग्विनिवारणेनेति।—व्रणवेदना-निर्व्वापणेन कारणोच्छेदात् तत्कार्य्यरूपा क्षतजा तृष्णा शाम्यतीत्यर्थः। रसाना-मिति—मांसरसानाम्। असृजश्च पानैरिति।—छागादिरक्तस्य अपक्वस्य पानैरित्यर्थः,

पयोत्थितां क्षीरजलं निहन्यान्मांसोदकं वाथ मधूदकं वा।
गुर्वन्नजामुल्लिखनैर्जयेत्तु क्षयाहृते सर्वकृताञ्च तृष्णाम् ॥ १३ ॥

लाजोदकं मधुयुतं शीतं गुडविमर्दितम्।
काश्मर्यशर्करायुक्तं पिबेत् तृष्णार्दितो नरः ॥ १४ ॥

अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥ १५ ॥

आम्रजम्बूकषायं वा पिबेन्माक्षिकसंयुतम्।

---

एतच्चात्यर्थमोहितसृषी सत्यां ज्ञेयम्। पयोत्थितामित्यादौ।—क्षीरजलमिति—क्षीरनिर्मितं जलमिति; क्षीरजलमित्यत्र क्षीरघृतमिति उज्ज्वलः पठति, व्याचष्टे च—क्षीरोत्थं घृतं क्षीरमथितं वा घृतमिति। मांसोदकमिति।—मांसरस एव, अन्ये तु—माषोदकमिति पठित्वा माषयूषमिति व्याचक्षते। मधूदकं वेति।—मधुमिश्रितमुदकमित्यर्थः। उदकञ्चात्र ऐन्द्रं; तदनुकारि भूमिष्ठमुदकं वा चरकसंवादात्। न च विरोधः, अनुष्णोपयोगात्; उक्तं हि सुश्रुते—"मध्वम्बुनी मधुमधिंशौ च ॥ ततस्त्वथ मायोराग्" इति। ननु पयसायां उष्णमेवोचितं, मधूदकन्तु शीतमिति तत् कथमत्र प्रयुक्तमिति? नैवं; पयसापि शीतवीर्येण जन्यते, यदुक्तं—"रसक्षयाद् या क्षयसम्भवा या तां सन्निपातादिति विविदाहुः" इति। तत्र यद्यपि कफापित्तं वा आविष्कं तदा मधूदकं देयम्। अन्ये तु—मधूदकमित्यत्र मधुकोदकमेवेति पठित्वा व्याचष्टे—यष्टिमधुजलमिति; तत्र युक्तं, चरकसंवादात्। उल्लिखनैरिति।—वमनैः। न केवलं गुर्वन्नजामेव वमनैर्जयेत्, किन्तर्हि?—अन्यामपीत्याह, क्षयाहृते इत्यादि।—क्षयोपजापि सर्वदोषारब्धा, तस्यां क्षीणधातुत्वात् वमनं न कार्यम्। सर्वकृतामिति।—सर्वदोषकृतामामजामिति कार्त्तिकः, अन्ये तु—"क्षयाहृते सर्वकृतास्तु तृष्णा" इति पठन्ति; क्षयजां विहाय अन्याः सर्वाश्चतस्रो वातपित्तकफामगुर्वन्नैः कृततृष्णा वमनैर्जयेदिति व्याख्यानयन्ति। अस्मिन् पक्षे—गुर्वन्नजायाः पृथगभिधानं विशेषार्थम् ॥ १२ ॥ १३ ॥

लाजोदकमित्यादि।—लाजचूर्णभावितमुदकं शीतकषायो वा। काश्मर्यं गाम्भारीफलम् ॥ १४ ॥

अतिरूक्षेत्यादि।—मधुररसाधिक्येनात्र सम्यङ्मधुरता ज्ञेया ॥ १५ ॥

छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति ॥ १६ ॥
वटशुङ्गसितालोध्र-दाडिमं मधुकं मधु ।
पिबेत् तण्डुलतोयेन च्छर्दितृष्णानिवारणम् ॥ १७ ॥
गोस्तनेक्षुरसः क्षीर-यष्टीमधुमधूत्पलैः ।
नियतं नस्यतः पानैस्तृष्णा शाम्यति दारुणा ॥ १८ ॥
क्षीरेक्षुरसमाध्वीकैः क्षौद्रसीधुगुडोदकैः ।
वृक्षाम्लाम्लैश्च गण्डूषास्तालुशोषनिवारणाः ॥ १९ ॥
तालुशोषे पिबेत् सर्पिर्घृतमण्डमथापि वा ॥ २० ॥
मूर्च्छाच्छर्दितृषादाह-स्त्रीमद्यभृशकर्षिताः ।
पिबेयुः शीतलं वारि रक्तपित्ते मदात्यये ॥ २१ ॥
धान्याम्लमास्यवैरस्य-मलदौर्गन्ध्यनाशनम् ।
तदेवालवणं पीतं मुखशोषहरं परम् ॥ २२ ॥

---

आम्रजम्बुकषायं चेति ।—आम्रजम्ब्वोः पल्लवस्य क्वाथे, पल्लवक्वाथायाऽपि युज्यते, "जम्ब्वाम्रपल्लवमस्तु क्षौद्रं दत्त्वा सुशीतलम्" इति पठितत्वात् ॥ १६ ॥

वटेत्यादौ ।—शुङ्गादीनां चूर्णम् ॥ १७ ॥

गोस्तनेत्यादि ।—गोस्तना द्राक्षा । एभिः प्रत्येकं नस्यम् । चाहटके तु—द्राक्षादिद्वयं द्राक्षायष्टिमधुनीलोत्पलं कल्कीकृत्य प्रक्षिप्य मधु च प्रक्षिप्य सर्वमालोड्य पेयमिति । तथा पयआमलकक्षीरादिभिः प्रत्येकं सम्भूय, बहुवचननिर्देशात् । यद्यपि तालुशोषे घृतं निषिद्धं, यदुक्तं—"दृष्टाव्यर्दितदाहेतवाच वर्जितस्तालुशोषिणः । न पिबेयुर्घृतम्" इति, तथापि चरकसंवादादस्य वचनतो द्रव्यान्तरयुक्तं घृतपानं बोध्यम्; यतो विशिष्टविधित्वात्र विरोधः; यथा वक्ष्यति तालुशोषेऽपि पिबेद्घृतं द्रव्यान्तरसम्बन्धेनेति, किम्वा वातोल्वणावस्थायामेतत् घृतपानं बोध्यम् । तालुशोषस्य बहुप्रकार एव, तेनेह सहजमस्याभिधानम् ॥ १८ ॥ १९ ॥

घृतमण्डमिति ।—घृतस्योपरिभागः, अत एव घृतस्योपरि स्थानो भाग इति काम-विजिगीषिते चक्रेपाध्यायः । श्रीकण्ठस्तु घृतस्योपरि स्थितभाग, घृतमण्डमित्याह । मूर्च्छेत्यादि स्पष्टम् ॥ २० ॥ २१ ॥

धान्याम्लमिति ।—धान्याम्लं काञ्जिकम् ॥ २२ ॥

वैशद्यं जनयत्यास्ये सन्दधाति मुखे व्रणान् ।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ २३ ॥
कोलदाडिमवृक्षाम्ल-चुक्रीकाचुक्रिकारसः ।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥ २४ ॥
वारि शीतं मधुयुतमा कण्ठाद्वा पिपासितम् ।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥ २५ ॥
वटशुङ्गामयक्षौद्र-लाजनीलोत्पलैर्दृढा ।
गुडिका वदन-न्यस्ता क्षिप्रं तृष्णां नियच्छति ॥ २६ ॥
ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम् ।
भोजयेत् तेन शाम्येत्तु छर्दिस्तृष्णा चिरोत्थिता ॥ २७ ॥
पूर्वामयातुरः सन् दानस्तृष्णार्दितो जलं याचन् ।
न लभेत चेदाश्वेव मरणमाप्नोति दीर्घरोगं वा ॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति ।
तस्मात् सर्वास्ववस्थासु न क्वचिद्वारि वार्यते ॥ २८ ॥

इति तृष्णा-चिकित्सा ।

---

सन्दधाति मुखे व्रणानिति ।—रोपयतीत्यर्थः ॥ २३ ॥

कोलेत्यादौ ।—चुक्रीका चाङ्गेरी । चुक्रिकेति—चुकाइ इति ख्याता । मुखालेप इति ।—मुखकुहरे लेपः, कपोलादौ लेप इति तु नियमः ॥ २४ ॥

वारि शीतमित्यादि ।—त्रितयमप्यामयं योगः । या कण्ठतोयपानादनु किञ्चिन्मधुपानमित्युपदिशन्ति वृद्धाः ॥ २५ ॥

वटशुङ्गेत्यादि ।—वटशुङ्गो वटप्ररोहः । आमयः कुष्ठम् । मधु तु यावता कठिना गुडिका भवति तावन्मात्रं देयम् ॥ २६ ॥

ओदनं रक्तशालीनां शीतमिति ।—सद्यस्कपानीयभक्तम् ॥ २७ ॥

प्रसङ्गात् तृष्णार्त्ते जलमप्रदाने दोषमाह, पूर्वामयेत्यादि ।—पूर्वामयातुरः सन् ज्वररक्तपित्तादिरोगग्रस्तः सन् । दीन इति ।—तृष्णापीडितत्वेनैव क्लान्तमनाः । कथं म्रियत ? इत्याह,—तृषित इत्यादि ॥ २८ ॥

इति तृष्णा-चिकित्सा विवृतिः ।

## अथ मूर्च्छा-चिकित्सा ।

सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलश्च ।
शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि ॥१॥
सिद्धानि वर्गे मधुरे पयांसि सदाडिमा जाङ्गलजा रसाश्च ।
तथा यवा लोहितशालयश्च मूर्च्छासु शस्ताश्च सतीनमुद्गाः ॥ २ ॥

यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेत् ।
रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः ॥ ३ ॥
मद्यजायां वमेन्मद्यं निद्रां सेवेद् यथासुखम् ।
विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥ ४ ॥
कोलमज्जोषणोशीर-केशरं शीतवारिणा ।
पीतं मूर्च्छां जयेल्लीढा कृष्णा वा मधुसंयुताम् ॥ ५ ॥
महौषधामृताक्षुद्रा-पौष्करग्रन्थिकोद्भवम् ।

---

सेकावगाहौ शीतौ भवतीत्यनुवर्तते शीतचिकित्साधिकारात्, मणय इत्यादि।—मुक्तादय। मणयो मुक्तास्फटिकप्रभृतयः ते च सहाराः हारसहिता इत्यर्थः। पानानि च गन्धवन्तीति कर्पूरादिगन्धयुक्तानि पानीयानीत्यर्थः। सर्वासु मूर्च्छास्वनिवारितानीत्यनेन वातकफजातासु मूर्च्छास्वपि हेतुप्रत्यनीकचिकित्सां बाधित्वा, एते शीतविधयो व्याधिप्रत्यनीकतया पित्तानुबन्धाच्च न वारणीया इति दर्शयति ॥ १ ॥

वर्गे मधुर इति।—काकोल्यादौ। सदाडिमा इति।—दाडिमाम्लसहिता इत्यर्थः। सतीनो वर्त्तुलकलायः ॥ २ ॥

यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेदिति।—वातादिमूर्च्छासु यथाक्रमं वातादिज्वरहराणि यानि तानि प्रयोजयेदित्यर्थः। रक्तजायामिति।—रक्तदर्शनजायाम् ॥ ३ ॥

मद्यजायामिति।—मद्यमितजायाम् ॥ ४ ॥

कोलमज्जादौ।—ऊषणं मरिचम् ॥ ५ ॥

पिबेत् कणायुतं क्वाथं मूर्च्छायेषु मदेषु च ॥ ६ ॥
शतावरीबलामूल-द्राक्षासिद्धं पयः पिबेत् ।
ससितं भ्रमनाशाय बीजं वाट्यालकस्य वा ॥ ७ ॥
पिबेद्दुरालभाक्वाथं सघृतं भ्रमशान्तये ।
त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा ॥ ८ ॥
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥ ९ ॥
मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुडार्द्रकं प्रातः ।
सप्ताहात् पथ्याशी मदमूर्च्छाकामलोन्मादान् ॥ १० ॥
अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च ।
सूचीभिस्तोदनं शस्तं दाहः पीडा नखान्तरे ॥ ११ ॥
लुञ्चनं केशरोम्णाञ्च दन्तैर्दंशनमेव च ।
आत्मगुप्तावघर्षश्च हितास्तस्यावबोधने ॥ १२ ॥

इति मूर्च्छा-चिकित्सा ।

---

महौषधेत्यादौ ।—शुण्ठी कणकारी ; ग्रन्थिकं पिप्पलीमूलम् । भ्रमः कुतिश्चो मोहयन् चक्रभ्रान्तिः । पथ्योऽभ्यासः ॥ ६—८ ॥

कौम्भं सर्पिर्दशवर्षात्मकम् ; अन्ये तु—"स्थितं वर्षशतं श्रेष्ठं कौम्भं सर्पिस्तदु-च्यते" ॥ ९ ॥ १० ॥

अञ्जनानीति ।—तीक्ष्णाञ्जनानि पथ्यादीनामि । अवपीडाः नासिकायां निर्गु-ण्ड्यादिरसा अवपीडा ये दीयन्ते । धूमाः वैरेचनधूमाः । प्रधमनं चूर्णनस्यम् । सूचीभि-रित्यादौ—पीडा नखान्तर इति ।—नखमांसयोर्मध्ये पीडनम् ॥ ११ ॥

आत्मगुप्ता शूकशिम्बी ॥ १२ ॥

इति मूर्च्छा-चिकित्सा विवृतिः ।

## अथ मदात्यय-चिकित्सा।

मद्यं खर्जूरमृद्वीका-वृक्षाम्लाम्लिकदाडिमैः।
परूषकैः सामलकैर्युक्तं मद्यविकारनुत्॥ १॥
सतीनमुद्गमिश्रान् वा दाडिमामलकान्वितान्।
द्राक्षामलकखर्जूरपरूषकरसेन वा।
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान्॥ २॥
मद्यं सौवर्चलव्योष-युक्तं किञ्चिज्जलान्वितम्।
जीर्णमद्याय दातव्यं वातपानात्ययापहम्॥ ३॥
मुद्गयूषः सितायुक्तः स्वादुर्वा पैशितो रसः।
पित्तपानात्यये योज्याः सर्वतश्च क्रिया हिमाः॥ ४॥
पानात्यये कफोद्भूते लङ्घनञ्च यथाबलम्।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः॥ ५॥
सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम्।
आभिः क्रियाभिर्मिश्राभिः शान्तिं याति मदात्ययः॥
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत्॥ ६॥

---

मूर्च्छाविष्टमदात्ययस्यापि मद्यजन्यत्वात् मूर्च्छानन्तरं मदात्ययचिकित्सामाह।—मद, एवात्ययकारको मदात्ययः। किंवा मदशब्देनैव मदहेतुतया मद्यमुच्यते, तेन तदती-त्ययो मदात्ययः। मद्य इत्यादि।—द्रवैरम्लैर्हितमेभिर्मद्यः, द्रव्येश्च खर्जूरा-दीनां ग्राह्यः। अम्लीका तिन्तिडीफलम्। वृक्षाम्लोऽम्लवेतसः। सतीनेति।—सतीनो, वर्तुलकलायः। सतीनमुद्गमिश्रैरिति पाठे—कामरसस्य विशेषणम्। चरके हि एत-द्वचनात् पूर्वं कामरसमित्युक्तम्॥ १॥ २॥

मद्यमित्यादि।—सौवर्चलव्योषयुक्तं लवणकटुकत्रिकास्वादकं देयम्। किञ्चिज्जल-मष्टभागिकमित्याहुः॥ ३॥

मुद्गयूष इत्यादि।—स्वादुरित्यनेन संस्कारार्थं कटुद्रव्योपयोगोऽत्र न कार्य इति दर्शयति॥ ४—६॥

लङ्घनाद्यैः कफे क्षीणे जातदौर्बल्यलाघवे ।
ओजस्तुल्यगुणं क्षीरं विपरीतञ्च मद्यतः ॥ ७ ॥
क्षीरप्रयोगं मद्यं वा क्रमेणाल्पाल्पमाचरेत् ॥ ८ ॥

पुनर्नवाद्यं घृतम्—

पयः पुनर्नवाक्वाथं यष्टीकल्कप्रसाधितम् ।
घृतं पुष्टिकरं पानान्मद्यपानहतौजसः ॥ ९ ॥

अष्टाङ्गलवणम्—

सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम् ।
त्वगेलामरिचार्धांशं शर्कराभागयोजितम् ॥
हितं लवणमष्टाङ्गमग्निसन्दीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥ १० ॥
चव्यं सौवर्चलं हिङ्गु पूरकं विश्वदीप्यकम् ।
चूर्णं मद्येन दातव्यं पानात्ययरुजापहम् ॥ ११ ॥

जलामृतचन्दनरूषिताङ्गः
स्रग्वी सभक्तां पिशितोपदंशाम् ।

---

यस्यामवस्थायां क्षीरप्रयोगः कर्त्तव्यस्तामाह, लङ्घनाद्यैरिति ।—आद्यशब्दात् शोधनादीनां ग्रहणम् ॥ ७ ॥

क्षीरप्रयोगमित्यादि ।—एतद्वचनात् पूर्वं—"पयसा च हते रोगे बले जाते निवर्त्तयेत्" इति वचनमस्ति, तेनात्र क्षीरप्रयोगमित्यत्र पूर्वोक्तेन निवर्त्तयेदित्यनेन सम्बन्धात् क्षीरप्रयोगं क्रमेण निवर्त्तयेत् । मद्यञ्च क्रमेणाल्पाल्पमाचरेदित्यर्थः ॥ ८ ॥

पयः पुनर्नवाक्वाथेत्यादौ ।—क्षीरं घृतसमं, क्वाथस्त्रिगुणश्चतुर्गुणो वेत्याहुः ॥ ९ ॥

सौवर्चलमित्यादि ।—अत्र सौवर्चलादीनां चतुर्णां समभागता; त्वगेलामरिचानां एकभागापेक्षया प्रत्येकमर्द्धांशिकत्वम्; शर्कराभागोऽपि सौवर्चलाद्येकतमद्रव्यसमः ॥ १० ॥

चव्यमित्यादौ ।—पूरकं—बीजपूरस्य फलमिति निश्चलः । दीप्यकं यवानी ॥ ११ ॥

मद्यं येन प्रकारेण विकारं न जनयेत् तदाह, जलेत्यादि ।—सुश्रुतस्य ।—चन्दनेन

पिबन् सुरां नैव लभेत रोगान्
मनोमतिघ्नञ्च मदं न याति ॥ १२ ॥
द्राक्षाकपित्थफलदाडिमपानकं यत्
तत् पानविभ्रमहरं मधुशर्कराढ्यम् ॥ १३ ॥
पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा।
सर्पिः कल्याणकं वापि मदमूर्च्छाहरं पिबेत् ॥ १४ ॥
सच्छर्दिमूर्च्छातिसारं मदं पूगफलोद्भवम्।
सद्यः प्रशमयेत् पीतमा छर्देर्वारि शीतलम् ॥ १५ ॥
वल्मीककरीषघ्राणाज्जलपानाल्लवणभक्षणादपि।
शाम्यति पूगफलमदश्चूर्णरुजा शर्कराकवलात् ॥ १६ ॥
शङ्खचूर्णरजोघ्राणात् खल्वं मदमपोहति ॥ १७ ॥
कूष्माण्डरसः सगुड़ः शमयति मदमाशु मदनकोद्रवजम् ॥१८॥
धोस्तूरजञ्च दुग्धं सशर्करं पानयोगेन ॥ १९ ॥
इति मदात्यय-चिकित्सा।

---

कथितं नियमं यथा। विधिवत् मांसम् ... यथा तथा। ... मतिघ्नमिति विशेषणात् द्वितीयादिमदं न प्राप्नोति, प्रथमन्तु मनोऽनुमवातीतं ... एवेत्यर्थः ॥ १२ ॥

द्राक्षेत्यादि।—सुगमम्। द्राक्षादिभिः पानकं सूदशास्त्रानुसारेण कार्य्यम् ॥ १३ ॥

पथ्येत्यादि।—सुगमम्। ... गदत्वसामान्यात् पृथक् पृथक् चिकित्सामाह, सच्छर्दीत्यादि।—वल्मीकेत्यादि।—... इति केचित्। करीष इति—शुष्कगोमयः; अन्ये तु—वल्मीकरीषं ... आहुः। अत्र च वल्मीकरीषादयः पृथक् प्रयोक्तव्याः। चूर्णरुजेति।—अतिमात्रचूर्णभक्षणे ... इत्यादिदाहः। एतच्च ... लिखितम्। खल्वं मदं—पूगफलजमेव। कूष्माण्डेत्यादि।—मदनं धान्यविशेषः, ... इति ख्यातः। धोस्तूर धुस्तूरफलभक्षणजम् ॥ १४—१९ ॥

इति मदात्यय-चिकित्सा-विवृतिः ॥

## अथ दाह-चिकित्सा ।

यत् पित्तज्वरदाहोक्तं दाहे तत् सर्वमिष्यते ॥ १ ॥
शतधौतघृताभ्यक्तं दिह्याद्वा यवसक्तुभिः ।
कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान् ॥ २ ॥
छादयेत् तस्य सर्वाङ्गमारनालार्द्रवाससा ।
लामज्जेनाथ शुक्तेन चन्दनेनानुलेपयेत् ॥ ३ ॥
चन्दनाम्बुकणास्यन्दि-तालवृन्तोपवीजितः ।
सुप्याद्दाहार्दितोऽम्भोज-कदलीदलसंस्तरे ॥ ४ ॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने ।
शस्यते शिशिरं तोयं तृष्णादाहप्रशान्तये ॥ ५ ॥
क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनान्वितैः ।
अन्तर्दाहं प्रशमयेदेतैरन्यैश्च शीतलैः ॥ ६ ॥

कुशाद्यं तैलं घृतञ्च—

कुशादिशालपर्णीभिर्जीवकाद्येन साधितम् ।
तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम् ॥ ७ ॥

---

मदात्ययप्रदाहस्यापि मद्यपानजन्यत्वात् मदात्ययाधिकारात् एव दाहचिकित्सा । यदित्यादि ।—कोलेत्यादि द्वितीयो योगः ; अत्रापि दिह्यादिति योज्यम् । लामज्ज-मुशीरं ; शुक्तं सन्धानविशेषः ; तालवृन्तं तालपत्रनिर्मितव्यजनम् ॥ १—५ ॥

क्षीरिकषायो, वटोडुम्बरादिक्वाथः । क्षीरादिकञ्चैतत् पानपरिषेकादौ योज्यम् ॥६॥

कुशादीत्यादि ।—कुशादिपञ्चमूलं, तृणपञ्चमूलं, तच्च सुश्रुतोक्तं कुश-काश-नल-दर्भकाण्डेक्षुमूलरूपम् । अत्र शालपर्णीशब्देन विदारीगन्धादिगणस्य ग्रहणमिति वृन्दटिप्पनी ; अन्ये तु—शालपर्ण्यादिपञ्चमूलस्य ग्रहणमित्याहुः । पिप्पल्यादिशब्दा-भावात् शालपर्णीमात्रस्यैव ग्रहणमित्याह । जीवकाद्येनेति ।—जीवकाद्यष्टवर्गेण, जीवकाद्यष्टवर्गश्च जीवक-ऋषभक-मेदा महामेदा-काकोली क्षीरकाकोली-ऋद्धि-वृद्धयः ;

फलिनी लोध्रसेव्याम्बु हेमपत्रं कुटन्नटम्।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ ८ ॥
क्लीवेरपद्मकोशीर-चन्दनचोदवारिणा।
सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ ९ ॥

इति दाह-चिकित्सा।

---

## अथोन्माद-चिकित्सा।

उन्मादे वातिके पूर्वं स्नेहपानं विरेचनम्।
पित्तजे कफजे वान्तिः परो वस्त्यादिकः क्रमः ॥ १ ॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते।

---

एवं सर्व्वत्र सुश्रुतयोगे जीवनीयाष्टकम्। चरकयोगे पुनरेव चविकाक्षीरविदारीमाष-पर्णी-मुद्गपर्णी-जीवन्ती-मधुकसहितं जीवनीयदशकं ज्ञेयम्। अत्र क्वाथादिग्रहण-दर्शनेऽपि क्वाथ', जीवकाद्येन कल्कः। अन्ये तु—"कल्कक्वाथानिर्द्देशे गणात् तस्मात् समाचरेत्" इति वचनात् सर्व्वत्रैव कल्कक्वाथावित्याहुः ॥ ७ ॥

फलिन्यादी।—फलिनी प्रियङ्गुः; सेव्यमुशीरम्; अम्बु बालकं, हेम नागकेशरं; पत्रं तेजपत्रं; कुटन्नटं कैवर्त्तमुस्तकं; कालीयकं कालीया इति ख्यातं, पीतकाष्ठं गन्धद्रव्यविशेषः; श्वेतचन्दनमिति केचित् कालीयकक्वाथश्च पेषणार्थमिति वदन्ति ॥ ८ ॥

क्लीवेरेत्यादी।—चोदं चूर्णम्। एषां चूर्णानि शीतलजलेन मिश्रयित्वा अवगाहनं कार्य्यम् ॥ ९ ॥

इति दाह-चिकित्सा विवृतिः ॥

---

यद्यपि मदात्ययस्य उन्मादमहत्त्वेन तथा पूर्वोक्तरीत्या च मदात्ययानन्तर-मुन्माददाहावेव वक्तुमुचितौ, तथापि सूचीकटाहन्यायेन दाहमभिधाय उन्माद-चिकित्सितमुच्यते, उन्मादे इत्यादि।—परो वस्त्यादिकक्रम इति।—पश्चात् स्नेहवस्ति-निरूहण-शिरोविरेचनात्मकः क्रमः कार्य्यः। चरकेऽप्युक्तं—"निरूहण स्नेहवस्तिः

उन्मादे तच्च कर्त्तव्यं सामान्याद्धेतुदूष्ययोः ॥ २ ॥
ब्राह्मीकुष्माण्डीषड्ग्रन्था शङ्खपुष्पिकास्वरसाः ।
उन्मादहृतो दृष्टाः पृथगेते कुष्ठमधुमिश्राः ॥ ३ ॥
दशमूलाम्बु सघृतं युक्तं मांसरसेन वा ।
ससिद्धार्थकचूर्णं वा पुराणं वैककं घृतम् ॥ ४ ॥
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥ ५ ॥
श्वेतोन्मत्तोत्तरदिशा-मूलसिद्धस्तु पायसः ।
गुडाज्यसंयुतो हन्ति सर्वोन्मादांस्तु दोषजान् ॥ ६ ॥
उन्मादे समधुः पेयः शुद्धो वा तालशाखजः ।
रसो नस्येऽभ्यञ्जने च सार्षपं तैलमिष्यते ॥ ७ ॥
अपक्वघटकोष्ठीर-पीतोन्मादविनाशिनी ।
बद्धं सार्षपतैलाक्तमुत्तानमातपे न्यसेत् ॥ ८ ॥

---

शिरसश्च विरेचनम् । ततः कुर्याद् यथादोषं तेषां भूयस्त्वमाचरेत् ॥" इति । सामान्याद्धेतुदूष्ययोरिति ।—उन्मादापस्मारयोर्हेतुर्मल-उपघातादिः दूष्यञ्च हृदयं समान मित्यर्थः । सामान्याद्दोषदूष्ययोरिति केचित् पठन्ति ॥ १ ॥ २ ॥

ब्राह्मीत्यादयश्चत्वारो योगाः । कुष्माण्डीफलमत्र पुराणं ग्राह्यमित्याहुः ॥ ३ ॥ ४ ॥

पुराणघृतलक्षणमाह उग्रगन्धमित्यादि ।—चरकस्य ।—चरकटीकाकृतस्तु केचित् इमं श्लोकमनार्षं वदन्ति, केचिद्दशवर्षातीतं घृतं पुराणमिति ब्रुवते, तन्नादर-वादात् ॥ ५ ॥

श्वेतेत्यादि ।—श्वेतोन्मत्तः श्वेतधुस्तूरस्तस्य उत्तरदिशि स्थितं मूलं ग्राह्यम् । महेश्वरस्तु—उत्तरदिशि स्थितं श्वेतधुस्तूरमूलं पिष्टा पल १, घृततण्डुल पल ४, दुग्ध-शराव ४, पायसं साध्यं, तदनुरूपे गुडघृते दत्त्वा खादयेदित्याह ॥ ६ ॥

उन्माद इत्यादि ।—शुद्ध इति केवलः । तालशाखज इति ।—हिन्तालत्वाद्भवः ; रस इति स्वेदः ; तेन कोमलतालशाखाभवो रसः मधुमद्येपेय, शुद्धो वा मधुना विनाऽपि ॥ ७ ॥

सिद्धार्थको वचा हिङ्गु करञ्जौ देवदारु च।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्।
बस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा।
अपस्मारविषोन्माद-कृत्यालक्ष्मीज्वरापहः ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥ ९ ॥

सूर्यपर्णाद्या वर्त्तिः—

सूर्यपर्णं हिङ्गु लवणं वचा कटुकरोहिणी।
शिरीषनक्तमालानां बीजं श्वेताश्च सर्षपाः।
गोमूत्रपिष्टैरेतैर्वा वर्त्तिर्नेत्राञ्जने हिता।
चतुर्थकमपस्मारमुन्मादञ्च नियच्छति ॥ १० ॥
गुहस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।
ताडनञ्च मनोबुद्धि-स्मृतिसंवेजनं हितम् ॥
तर्ज्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम्।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥ ११ ॥

---

चतुष्कटकीति।—चामचटकों अङ्कोलस। महतिमित्यादि।—एतच चौतो-निग्रहार्थमुद्देशमात्रेण ॥ ८ ॥

सिद्धार्थक इत्यादि।—अत्र करञ्जद्वयस्य ग्रहणात्, श्वेता श्वेतापराजिता, कटभी शाकट्कीति ख्याता, अन्ये तु—"करह" इत्याहुः; शिरीषस्य फलम्। भयद्‌ हन्ति।—भयोत्पादकहरः, कृत्या अभिचारः, राजद्वारे च प्रस्तत इति।—वशीकरण द्वारा। अनेनेति।—सिद्धार्थकादीनां कल्केन ॥ ९ ॥

सूर्यपर्णमित्यादि।—स्पष्टम् ॥ १० ॥

गुहस्येत्यादि।—चरकस्य।—गुहस्येति।—भ्रमितस्य। आचारविभ्रंशे कथुन्मादे। संवेजनमुद्वेजनं, तर्जनं त्रासनं, विस्मृतेर्हेतोरिति।—उन्मादहेतुभयहर्षादिविस्मारकतया

कामशोकभयक्रोध-हर्षेर्ष्यालोभसम्भवान् ।
परस्परं प्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ १२ ॥
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तैः सान्त्वाश्वासैश्च तान् जयेत् ॥ १३ ॥
प्रदेहोत्सादनाभ्यङ्ग-धूमाः पानञ्च सर्पिषः ।
प्रयोक्तव्यं मनोबुद्धि-स्मृतिसंज्ञाप्रबोधनम् ॥
कल्याणकं महच्चापि दद्याद्वा चैतसं घृतम् ।
तैलं नारायणञ्चापि महानारायणं तथा ॥ १४ ॥

पानीयकल्याणकं घृतम्—

विशाला त्रिफला कौन्ती देवदार्वेलवालुकम् ।
स्थिरा नतं रजन्यौ द्वे शारिवे द्वे प्रियङ्गुका ॥
नीलोत्पलैलामञ्जिष्ठा-दन्तीदाडिमकेशरम् ।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः ।
चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत् ॥

---

प्रभावादेव मनः प्रकृतिं स्वभावं गमयन्ति । परस्परप्रतिद्वन्द्वैरिति ।—यथोऽन्यप्रत्यनीकैः । तस्य तत्सदृशप्राप्तेरिति ।—भावे क्तः ; तत्सदृशप्राप्तिभिरित्यर्थः । सान्त्वाश्वासैरिति ।—सान्त्वं सामप्रयोगः, वशीभूतकरणार्थं उपायविशेषः ; आश्वासः, सन्तोषवचनम् । उत्सादनं चूर्णघर्षणम् । नारायणतैलं महानारायणतैलञ्च वातव्याधौ वक्ष्यति ॥ १२—१४ ॥

विशालेत्यादि ।—विशाला गोरक्षकर्कटी ; कौन्ती रेणुका ; एलवालुकं स्वनामख्यातं सुगन्धि द्रव्यं ; स्थिरा शालपर्णी ; नतं तगरपादुका, तदभावे शिग्नीक्षारः, केशरं नागकेशरं ; मालती जाती, तस्याः कुसुमं ; नवमिति—कुसुमविशेषणम् । अष्टाविंशतित्वं कल्कानां पाठादेव सिद्धं, किमर्थमुच्यते अष्टाविंशतिभिरिति ?—अत्र यद्यपि त्रिफलायाः प्रत्येकमेव भागो गृह्यते त्रित्वगणितत्वात्, तथापि त्रिफलायाः प्रत्येकभागग्रहणख्यापनार्थम् अष्टाविंशतिभिरित्युक्तम् । यद्यपि त्रिफला-

अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये।
वातरक्ते प्रतिश्याये तृतीयक-चतुर्थके॥
वस्त्यर्शोमूत्रकृच्छ्रेषु वीसर्पोपहतेषु च।
कण्डूपाण्ड्वामयोन्मादे विष-मेहगरेषु च॥
भूतोपहतचित्तानां गद्गदानामरेतसाम्।
शस्तं स्त्रीणाञ्च वन्ध्यानामायुर्वर्णबलप्रदम्॥
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहविनाशनम्।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च॥ १५॥

क्षीरकल्याणकं घृतम्—

द्विजलं सचतुःक्षीरं क्षीरकल्याणकन्त्विदम्॥ १६॥

महाकल्याणकं घृतम्—

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम्।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरं चतुर्गुणम्॥

---

शब्देन द्राक्षाकाश्मर्य्यफलयोरुच्यते, तथापि हरीतक्यादित्रिफलाया एवात्र ग्रहणं प्राधान्यादिव, एवमन्यत्रापि। पुंसवनेष्विति।—पुत्रकारकयोगेषु॥ १५॥

तदेव घृतं यदा जलस्याष्टौ शरावान् क्षीरस्य षोडश शरावान् दत्त्वा पच्यते, तदा क्षीरकल्याणकं भवति। (इति पानीयकल्याणक-क्षीरकल्याणक घृते) ॥ १६॥

एभ्य एवेति।—कल्याणकोक्तविशालादिभ्यः। स्थिरादीनीत्युक्तेर्विदारीगन्धादि पञ्चमूलस्यापि ग्रहणं स्यादत आह, एकविंशतिमिति।—वृहत्पञ्चमूलग्रहणनिरासार्थं वा एकविंशतिमित्युक्तम्। गृष्टिरेकवारप्रसूता धेनुः। अत्र चतुर्गुणक्षीरस्य निर्दिष्टत्वात्तत्सर्पिःसिद्धौ द्रव एव देयः, तेनानिर्दिष्टमानक्वाथोऽत्र षोडशगुण एवेति पञ्चगुणः पाकः। युक्तञ्चैतत्, पञ्चप्रभृति-द्रव स्थलादिपरिभाषायोगेनास्यार्थस्य समानन्यायत्वादिति केचित्। अन्ये तु—क्षीरेणैवात्र चतुर्गुणे प्राप्तेऽत्र कषायः "एकेनापि चातुर्गुण्यम्" इत्यादिपरिभाषया - परिशिष्टेन "घृतात् तोयं चतुर्गुणम्" इति द्रव्यचातुर्गुण्यपरिभाषया क्षीरसमानमात्रतयात्र चतुर्गुण एव देय इति वदन्ति।

वयःस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा ।
महापुरुषदन्ता च वयःस्था नाकुलीद्वयम् ॥
कटम्भरा वृश्चिकाली स्थिरा चैव च तैर्घृतम् ।
सिद्धं चतुर्थकोन्माद-ग्रहापस्मारनाशनम् ॥
महापैशाचिकं नाम घृतमेतद्यथाऽमृतम् ।
मेधाबुद्धिस्मृतिकरं बालानाञ्चाङ्गवर्द्धनम् ॥ १९ ॥

हिङ्ग्वाद्यं घृतम्—

हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ २० ॥

लशुनाद्यं घृतम्—

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम् ।
तदर्द्धं दशमूलस्य द्व्याढकेऽपां विपाचयेत् ॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा ।
कोलमूलकवृक्षाम्ल-मातुलुङ्गार्द्रके रसैः ॥
दाडिमाम्बुसुरामस्तु-काञ्जिकाम्लैस्तदर्द्धिकैः ।

---

चोरा चोरकाख्यौषधी, शृङ्गिपर्णीत्यपरे ; चोरकः चोरपुष्पी ; वयःस्था ब्राह्मी, गुडूची अन्ये, अपरे तु—निर्गुण्डीत्याहुः ; शूकरी वाराहिका, तदभावे चर्मकारालुकः ; छत्रा मधुरिका , अतिच्छत्रा शतपुष्पा ; पलङ्कषा गुग्गुलुः ; महापुरुषदन्ता शतावरी ; वयःस्था मत्स्याक्षी, ब्राह्मीत्यन्ये ; नाकुलीद्वयं रास्नाद्वयं,—रास्ना गन्धरास्ना च ; कटम्भरा कटभी प्रसारणी वा ; वृश्चिकाली वृश्चिकपत्री, विछातीति ख्याता ; स्थिरा शालपर्णी । स्वल्पैश्च विकल्पाभावात् महत्त्वमोऽयं महागुणकारकत्वादित्याहुः ; अन्ये तु—गडूच्या स्थिरापृथक्पर्ण्यादिना स्वल्पेऽप्यधिकस्यापि तथाप्यत्र दर्शितत्वात् तदपेक्षयास्य महत्त्वमाहुः ॥ १९ ॥

हिङ्ग्वाद्ये ।—व्योषस्य प्रत्येकं द्विपलांशता ॥ २० ॥

लशुनस्याद्ये ।—अविनष्टस्येति ।—विपक्वस्य ; तुलार्द्धं पञ्चाशत् पलानि ; तदर्द्धं दशमूलस्येति मिलित्वा दशमूलस्य पञ्चविंशतिः पलानि ; पादशेष इत्यादौ , लशुनस्य रसं तथा इति ।—प्रस्थमेव । दाडिमाम्बु दाडिमरसः । तदर्द्धिकैरिति—तदर्द्धेन

साधयेत् त्रिफलादारु-लवणव्योषदीप्यकैः।
यमानीचव्यहिङ्ग्वम्ल-वेतसैश्च पलार्द्धिकैः।
सिद्धमेतत् पिबेच्छूल-गुल्मार्शोजठरापहम्॥
ब्रध्नपाण्ड्वामयप्लीह-योनिदोषक्रिमिज्वरान्।
वातश्लेष्मामयांश्चान्यानुन्मादांश्चापकर्षति॥ २१॥
सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः॥
पूजाबल्युपहारेष्टि-होममन्त्राञ्जनादिभिः।
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक्॥ २२॥
कृष्णामरिचसिन्धूत्थ मधुगोपित्तनिर्मितम्।
अञ्जनं सर्वभूतोत्थ महोन्मादविनाशनम्॥ २३॥
दार्वीमधुभ्यां पुष्यायां कृतश्च गुडिकाञ्जनम्।
मरिचं चातपे मासं सपित्तं स्थितमञ्जनम्॥
वेक्षते पश्यतः कार्य्यं दोषभूतहतस्मृतेः॥ २४॥

---

प्राधान्यात् प्रत्यासत्त्या च घृतपरिमाणात् कोलादिरसैः प्रत्येकमर्द्धप्रस्थैरित्यर्थः; अन्ये तु—पलार्द्धिकैरित्यत्र तन्त्रेण पादावशिष्टकषायः परामृश्यते, तेन लवणस्य यमान्यादीनां दशानामिव पलार्द्धिकत्वेन प्रत्येकं ग्रहणमित्याहुः॥ २१॥

आगन्तून्मादचिकित्सामाह, सर्पिरित्यादि।—सर्पिरिह भूतघ्नं चैतसादि। पूजेत्यादौ।—बलिः पूजोपकरणम्, उपहारं उपढौकनम्, किंवा पूजाबल्युपहारः उपढौकनमेव। मन्त्रादिभिरिति।—आदिशब्दात् स्वस्त्ययनादिकं बोध्यम्, यदुक्तं—"भूतानामधिपं देवमीश्वरं जगतः प्रभुम्। पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम्॥" इति॥ २२॥

कृष्णेत्यादौ।—गोपित्तं गोरोचना॥ २३॥

दार्वीत्यादि स्पष्टम्। मरिचमित्यादि।—मरिचं गोरोचनया आतपे मासैकं भावितमञ्जनं कर्त्तव्यम्। दोषभूतहतस्मृतेरिति।—दोषेण भूतेन वा हता स्मृति-र्यस्येत्यर्थः॥ २४॥

निम्बपत्रवचाहिङ्गु सर्पनिर्मोकसर्षपैः ।
डाकिन्यादिहरो धूपो भूतोन्मादविनाशनः ॥ २५ ॥
कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतकै-
स्त्वग्मांसीवृषदंशविट्तुषवचाकेशाहिनिर्मोककैः ।
गोशृङ्गद्विपदन्तहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः स्मृतः ॥ २६ ॥
ब्रह्मराक्षसजित्रस्यं पक्केन्द्रीफलमूलजम् ।
साज्यं भूतहरं नस्यं श्वेताज्येष्ठाम्बुनिर्मितम् ॥ २७ ॥
देवर्षिपितृगन्धर्वैरुन्मत्तस्य च बुद्धिमान् ।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च ॥ २८ ॥
प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ २९ ॥
इत्युन्माद-चिकित्सा ।

---

निम्बेत्यादि ।—स्पष्टम् ॥ २५ ॥

कार्पासेत्यादि ।—कार्पासास्थि कार्पासबीजम् ; निर्माल्यं शिवनिर्माल्यम्, पिण्डीतक मदनफलम्, त्वग्मांसीति ।—त्वगुशीर, मांसी जटामांसी ; अन्ये तु—त्वग्मांसी—कपस्य त्वगित्याहुः । वृषदंशो बिडालः, तस्य विट् पुरीषम्, केशो भूतकेशी, बाल इत्यपरे ॥ २६ ॥

ब्रह्मेत्यादि ।—पक्केन्द्रीफल परिणतक्षीरधवकर्कटीफल गोमूत्रेण सह पीत्वा नस्यं विधेयम् । साज्यमित्यादी ।—श्वेता श्वेतापराजिता, ज्येष्ठाम्बु तण्डुलाम्बु ॥ २७ ॥

देवेत्यादी ।—क्रूरमिति—ताडनबन्धनादिकम् । एतच परिवर्जनं दैवातुरोपघातपरिहारार्थम् ; उक्तञ्च—"दैवातुरो विनिघ्नन्ति एवं क्रुद्धा महौजसः." इति ॥२८॥२९॥

इत्युन्माद चिकित्सा विवृतिः ।

# अथापस्मार-चिकित्सा।

वातिकं बस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत्॥ १॥
सर्वतः सुविशुद्धस्य सम्यगाश्वसितस्य च।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु॥ २॥
मनोह्वा तार्क्ष्यजञ्चैव शकृत् पारावतस्य च।
अञ्जनं हन्त्यपस्मारमुन्मादञ्च विशेषतः॥ ३॥
यष्टिहिङ्गुवचावक्र-शिरीषलशुनामयैः।
साजामूत्रैरपस्मारे सोन्मादे नावनाञ्जने॥ ४॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम्।
तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम्॥ ५॥
नकुलोलूकमार्जार-गृध्रकीटाहिकाकजैः।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक्॥ ६॥
कायस्थान् शारदान् मुद्गान् मुस्तोशीरयवांस्तथा।
सव्योषान् बस्तमूत्रेण पिष्ट्वा वर्त्तीः प्रकल्पयेत्॥
अपस्मारे तथोन्मादे सर्पदष्टे गरार्दिते।
विषपीते जलमृते चैताः स्युरमृतोपमाः॥ ७॥

---

तुल्यचिकित्सितत्वादुन्मादानन्तरमपस्मारचिकित्सितमुच्यते, वातिकमित्यादि।—वमनप्रायैरिति।—वमनप्रधानैः॥ १॥

सर्वत इत्यूर्ध्वमधश्च शुद्धस्य। आश्वसितस्येति।—संशोधनानन्तरं संसर्जनक्रमेण समाश्वासितस्य॥ २॥

मनोह्वा—मनःशिला; तार्क्ष्यजं—रसाञ्जनम्॥ ३॥

यष्ट्यादौ।—वक्रं तगरम्; शिरीषं—शिरीषस्य फलम्; आमयं—कुष्ठम्॥ ४॥

पुष्येत्यादि।—पुष्यनक्षत्रे यदुद्धृतं श्वकुक्कुरस्य पित्तं पात्रमित्याहुः; उलूकः पेचकः; कीटः पश्चिमदेशजो वृश्चिकः। एषां तुण्डादिकं यथासम्भवं ग्राह्यम्॥ ५। ६॥

अपेतराक्षसीकुष्ठ-पूतनाकेशिचोरकैः ॥
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥ ८ ॥
जतुकाशकृता तद्वद्दग्धैर्वा वस्तरोमभिः ।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः ॥ ९ ॥
यः खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः ।
अपस्मारं महाघोरं सुचिरोत्थं जयेद् ध्रुवम् ॥ १० ॥
उद्बन्धितनरग्रीवा-पाशं दग्ध्वा हृता मसी ।
शीताम्बुना समं पीता हन्त्यपस्मारमुद्धतम् ॥ ११ ॥
प्रयोज्यं तैल-लशुनं पयसा वा शतावरी ।
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम् ॥ १२ ॥
निर्दह्य निर्द्रवां कृत्वा च्छागिकामरनालिकाम् ।
तामम्लसाधितां खादन्नपस्मारमुदस्यति ॥ १३ ॥

---

कायस्थानित्यादि ।—कायस्थो गिर्गुडी । आरद्वानिति—शुक्लनिर्यासं अंट-माक्षीकवस्तुक्लनिराशार्थम् । वर्त्तीरिव्यञ्जनवर्त्तीः । विपरीत इति ।—पीतविषे, गव सद्योगविषम् । जलवत इति ।—जलपानेन सतप्रायि, सर्वथा वर्मे हि भेदज विफल-मिति । जलवतलक्षणं यथा—"निष्टब्धपक्षुमूर्द्धा वमाभातीहरमेहनम् । विद्याज्जल-वत जन्तुं शीतपादकराननम् ॥" इति ॥ ७ ॥

अपेतराक्षसीत्यादि ।—अपेतराक्षसी श्वेततुलसी, तस्या. स्वरस इत्यर्थः । पूतना हरीतकी ; केशी भूतकेशी ; चोरश्चोरपुष्पी । चरकोक्तपूर्वयोगे वस्तमूत्रमस्यसंज्ञा-स्त्वापि वस्तमूत्रमेवेत्याहुः । किंवा प्रधानकल्पतयाऽत्र गोमूत्रमेव मूत्रशब्दवाच्यम् ॥ ८ ॥

जतुकाशकृतेति ।—जतुका चर्मचटका, तस्याः पुरीषेण तद्वदित्युत्सादनम् । दग्धै-रिति ।—वस्तरोमभिरित्यनेन योज्यम् । अपस्मारेत्यादौ ।—मूत्रं गोमूत्रम् ॥ ९ ॥

यः खादेदित्यादौ ।—माक्षिकेण मधुना ॥ १० ॥

उद्बन्धित उद्बन्धनमृतो नरः, तस्य ग्रीवापाशं ग्रीवाबन्धनरज्जुम् ॥ ११ ॥

प्रयोज्यमित्यादि ।—यौगवयं स्पष्टम् ॥ १२ ॥

हृल्लास्योऽचिरुजा यस्य खेदो हस्तादिशीतता ।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत् ॥ १४ ॥

स्वल्पपञ्चगव्यं घृतम्—

गोशकृद्रसदध्यम्ल-क्षीरमूत्रैः समैर्घृतम् ।
सिद्धं चातुर्थकोन्माद-ग्रहापस्मारनाशनम् ॥ १५ ॥

बृहत्पञ्चगव्यं घृतम्—

द्वे पञ्चमूले त्रिफलां रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥
शम्याकं फल्गुमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च ।
श्रेयसीमाढकीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥
द्वे शारिवे रौहिषञ्च भूतिकं मदयन्तिकाम् ।
क्षिपेत् पिष्ट्वाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥
गोशकृद्रसदध्यम्ल-क्षीरमूत्रैश्च तत्समैः ।

---

सिद्धमित्यादौ ।—अमरवल्लिका [illegible] । काञ्जिकसाधितामिति ।—काञ्जिकसाधिताम् ॥ १३ ॥

हृल्लास इत्यादि ;—स्पष्टम् ॥ १४ ॥

गोशकृदित्यादौ ।—दध्यम्लं परिणतदधि । चातुर्थकोऽत्र इत्यादिभिः सम्बध्यते ॥ १५ ॥

द्वे पञ्चमूले इत्यादि ।—द्वे पञ्चमूले बिल्वशालपर्ण्यादिके । रजन्याविति ।—हरिद्राद्वयम् ; कुटजेऽपि—"त्रिपञ्चमूलीत्रिफला-त्रिविष्टाकुटजत्वचः" इत्युक्तम् । सप्तपर्णं सप्तपर्णस्य त्वक् ; अपामार्गम् अपामार्गस्य मूलं ; नीलिनीं स्वनामख्याता , शम्याकम् आरग्वधः ; फल्गु काकोडुम्बरिकाफलं, डुमुर इति लोके ; पौष्करं मूलमिन्दन्वयः । भार्गीं भार्गीमूलं ; त्रिवृता त्रिवृतामूलं ; निचुलानि इज्जलफलानि ; श्रेयसी हस्तिपिप्पलीम् ; आढकी तुवरी, तस्या बीजं ; रौहिषं गन्धतृणभेदः , भूतिकं यमानी , मदयन्तिका वनमल्लिकाम् । अत्र पादावशिष्टक्वाथचतुर्गुणं । गोशकृदिति ।—गोशकृद्रसादय घृतसमाः, मिलित्वा चतुर्गुणाः इति ॥ १६ ॥

पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम् ॥
अपस्मारे ज्वरे कासे श्वयथावुदरेषु च।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके।
अलक्ष्मीग्रहरक्षोघ्नं चतुर्थकविनाशनम् ॥ १६ ॥

महाचैतसं घृतम्—

शणस्त्रिवृत् तथैरण्डो दशमूली शतावरी।
रास्ना मागधिका शिग्रुः क्वाथ्यं द्विपलिकं भवेत् ॥
विदारी मधुकं मेदे द्वे काकोल्यौ सिता तथा।
एभिः खर्जूरमृद्वीका-भीरुयुञ्जातगोक्षुरैः।
चैतसस्य घृतस्याङ्गैः पक्वव्यं घृतमुत्तमम्।
महाचैतससंज्ञन्तु सर्वापस्मारनाशनम् ॥
गरोन्मादप्रतिश्याय-तृतीयकचतुर्थकान्।
पापालक्ष्मीं जयेदेतत् सर्वग्रहविनाशनम् ॥
श्वासकासहरञ्चैव शुक्रार्त्तवविशोधनम्।
घृतमानं क्वाथविधिरिह चैतसवन्मतः ॥
कल्कश्चैतसकल्कोक्त-द्रव्यैः सार्द्धश्च पादिकः।
नित्यं युञ्जातकाभावे तालमस्तकमिष्यते ॥ १७ ॥

---

महाचैतसे शणस्य मूलं बीजं वा, व्यवहारस्तु बीजेनेति। मागधिका पिप्पली। क्वाथ्यं द्विपलिकं भवेदित्यनेन—क्वाथ.; क्वाथोऽपि पूर्ववत् चैतसक्वाथवत् द्रोणाम्भसा कार्य्यः। विदारीप्रभृति कल्कः। मेदे—मेदे द्वे; खर्जूरं खर्जूरस्य फलम्, भीरुः शतावरी; युञ्जातम् चोरपर्य्यायिक. कन्द., तदभावे तालमस्तकम्। चैतसस्य घृतस्याङ्गैरिति।—पूर्वोक्तचैतसघृतकल्कैर्विशालात्रिफलादिभिः। चैतसस्येत्यादि पानीयकल्याणकस्याङ्गैरिति पाठोऽन्येऽतिदिशातिदेशकरणम्। चतोक्तकल्कद्रव्येण सह पादिकार्थम्, अन्यथा पानीयकल्याणके तथाकममन्वितेरित्युक्तत्वात्तदापि अचमान प्रस- ज्येत, अतो विशालात्रिफलेत्यादिना कल्केन सह विदारीमधुकादि. कल्कस्य

कूष्माण्डकघृतम्—

कूष्माण्डकरसे सर्पिरष्टादशगुणे पचेत्।
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनम् ॥ १८ ॥

ब्राह्मीघृतम्—ब्राह्मीरसे वचाकुष्ठ-शङ्खपुष्पीभिरेव च।
पुराणं मेध्यमुन्माद-ग्रहापस्मारनुद् घृतम् ॥ १९ ॥

पलङ्कषाद्यं तैलम्—

पलङ्कषावचापथ्या-वृश्चिकाल्यर्कसर्षपैः।
जटिलापूतनाकेशी-नाकुलीहिङ्गुचोरकैः ॥
लशुनातिरसाचित्रा-कुष्ठैर्विड्भिश्च पक्षिणाम्।
मांसाशिनां यथालाभं बस्तमूत्रे चतुर्गुणे ॥
सिद्धमभ्यञ्जने तैलमपस्मारविनाशनम् ॥ २० ॥
अभ्यङ्गः सार्षपं तैलं बस्तमूत्रे चतुर्गुणे।
सिद्धं स्याद्गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥ २१ ॥

इत्यपस्मार-चिकित्सा।

---

मिलिता घृतात् पादिकत्वं ज्ञेयम्। अत एव वक्ष्यति—"कल्कश्चेत्सकलस्नेहद्रव्यैः सार्द्धेच पादिकः" इति ॥ १७ ॥

कूष्माण्डकघृते—स्पष्टम् ॥ १८ ॥

ब्राह्मीघृते—चतुर्गुणे ब्राह्मीरसे घृतपाकः ॥ १९ ॥

पलङ्कषेत्यादि।—पलङ्कषा गुग्गुलुः; जटिला मांसी। पूतनाकेशी भूतकेशी इति केचित्; अन्ये तु—पूतना हरीतकीभेदः, केशी भूतकेश्येत्याहुः; तदुक्तं गोलोमी पठ्यते, न तु पूतना। नाकुली महापेशाचिका ख्याता। अतिरसा कलयष्टिमधु, अन्ये तु—ज्योतिष्मतीत्याहुः, तदुक्तं मधुकमिति। चित्रा दन्ती। मांसाशिनां पक्षिणामिति।—गृध्रादीनाम् ॥ २० ॥

अभ्यङ्ग इत्यादि।—अभ्यञ्जनमिदं तैलम्। गोशकृता उत्सादनमुद्वर्त्तनं, गोमूत्रेण स्नानमिति यथायोग्यतया योज्यम् ॥ २१ ॥

इत्यपस्मार-चिकित्सा-विवृतिः।

# अथ वातव्याधि-चिकित्सा ।

स्वादम्ललवणैः स्निग्धैराहारैर्वातरोगिणः ।
अभ्यङ्गस्नेहवस्त्याद्यैः सर्वानेवोपपादयेत् ॥ १ ॥
विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ॥ २ ॥
आमाशयस्थे शुद्धस्य यथादोषहरी क्रिया ॥ ३ ॥
आमाशयगते वाते छर्दिताय यथाक्रमम् ।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥
चित्रकेन्द्रयवाः पाठा कटुकातिविषाभयाः ।
महाव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥
पलद्वयमांशो धरणं योगोऽयं सौश्रुतस्ततस्तस्य ।
मापेन पञ्चगुञ्जकमानेन प्रत्यहं देयः ॥ ४ ॥

---

वातविशेषत्वाच्चैषकादेरपकारवशेषकर्तृत्वात् तथा प्रायस्तुल्यचिकित्सितत्वाच्च अपस्मारानन्तरं वातव्याधिरुच्यते ।—यद्यपि वातव्याधिरित्युक्तेरविशेषे यः कश्चित् प्रसङ्गः, तथापि व्याधिपदसामानाधिकरण्याद्विकृतो दुःखकारी वातो वातव्याधिरित्यर्थो ज्ञेयः । ननु वातव्याधिवत् पित्तकफविकारा अपि शोषशीतज्वरादयः, किमिति पृथक्त्वेन नोच्यन्ते ? नैवम्, वायोरतिबलत्वेन गरीयस्त्वात्, सविकाराणामेव तु दुःसाध्यत्वात् आशुकारित्वात् विशिष्टचिकित्सितत्वाच्च, पृथक्त्वेनाभिधानं युक्तम् । कफपित्तविकाराणान्तु यथाविधित्वात् विरेचनवमनादिकफपित्तसामान्य-चिकित्सोक्त्या चिकित्सोक्तेति ज्ञेया । साधारणचिकित्सामाह, स्वादम्लेत्यादि ॥ १ ॥

विशेषत इत्यादौ ।—क्षारं यवक्षारं, किंवा वक्ष्यमाणमायुर्निर्दिष्टं शौचलक्षारम् । आमाशयस्थ इत्यादि ।—शुद्धस्य वमनविरेचनादिना शुद्धस्य ॥ २ । ३ ॥

आमाशयगत इत्यादि ।—सुश्रुतस्य ।—छर्दिताय यथाक्रममिति ।—स्नेहस्वेदपेयादि-क्रमानतिक्रमेण, वातस्यापि कफस्थानगतत्वेन । यदुक्तं—"स्थानात् स्थानगतं दोषं स्थानवत् समुपाचरेत्" इति ॥ षड्धरणयोगो महाव्याधिप्रशमन इति नैद-ज्ञात्वाधिः महाव्याधिः । षड्धरण इति ।—एषां चित्रकादीनां प्रत्येकं धरणं पलद्वयमानधर मान यस्य स तथा; एतदेवाह पलद्वयमांशो धरणमिति ।—तेषु पञ्च-

स्नेहोपनाहाग्निकर्म-बन्धनोन्मर्दनानि च।
स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्याद्वाते विचक्षणः ॥ ९ ॥
स्वेदाभ्यङ्गावगाहांश्च हृद्यञ्चान्नं त्वगाश्रिते ॥ १० ॥
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ ११ ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च ॥ १२ ॥
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥ १३ ॥
हर्षोऽन्नपाने शुक्रस्थे बलशुक्रकरं हितम्।
विबद्धमार्गं शुक्रन्तु दृष्ट्वा दद्याद्विरेचनम् ॥ १४ ॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥ १५ ॥
शिरोगतेऽनिले वात-शिरोरोगहरी क्रिया ॥ १६ ॥
व्यादितास्ये हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च।
प्रदेशिनीभ्याञ्चोन्नम्य चिबुकोन्नामनं हितम् ॥ १७ ॥

---

स्नेहोपनाहेत्यादिना—स्नायु-सन्ध्यस्थिगतवातचिकित्सामाह ॥ ९ ॥

स्वेदाभ्यङ्गेत्यादिना—रसगतानिलचिकित्सामाह। हृद्यमित्यत्र स्पष्टमिति जेज्जड पठति, किन्त्वत्र त्वक्शब्देन त्वक्स्थत्वाद्रस उच्यते, समानाश्रितत्वात् रसस्य त्वग्गतत्वाद्भवति। अत एव धातुगतकुष्ठाभिधाने त्वग्गतत्वेनैव रसगतत्वमुक्तमिति कृत्वा रसगतकुष्ठलक्षणं सुश्रुतेनोक्तम्। अतो रसस्य विशेषेण हृदयाश्रितत्वात् हृद्य-मेव पाठो युक्त इत्याह। शीता प्रदेहा इति।—शीतप्रदेहादिरक्तचिकित्साकथनार्थ-मिह लिखित, तेन त्वङ्मांसासृगित्यादिसुश्रुतवचनेन पूर्वोक्तेनास्य पौनरुक्त्य-माशङ्कनीयम् ॥ १० ॥ ११ ॥

मेदःस्थानिलचिकित्सामाह, विरेक इत्यादि। मज्जगतानिलचिकित्सामाह, बाह्येत्यादि ॥ १२ ॥ १३ ॥

शुक्रस्थानिलचिकित्सामाह, हर्ष इत्यादि।—हर्षं इति मनसः ॥ १४ ॥

गर्भ इत्यादौ।—मधुक-काश्मर्य्यफलाभ्यां दुग्धं साध्यं, सिता तु प्रक्षेपणीया; केचित्तु सितादिभिर्दुग्धं साध्यमित्याहुः। उत्थापने—पुष्टिजनने ॥ १५ ॥ १६ ॥

व्यादितास्य इत्यादि।—व्यादितास्ये विवृतास्ये, प्रदेशिनी अङ्गुष्ठानन्तराङ्गुली।

अर्दिते नवनीतेन खादेन्माषेण्डरीं नरः ।
क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ॥
स्नेहाभ्यङ्गशिरोवस्ति-पाननस्यपरायणः ।
अर्दितं स जयेत् सर्पिः पिबेदौत्तरभक्तिकम् ॥ १८ ॥
पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा ।
रूक्षः स्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते ॥ १९ ॥
वाताद्वाग्धमनीदुष्टौ स्नेहगण्डूषधारणम् ॥ २० ॥

कल्याणकलेहः—

सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजम् ।
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम् ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ।
तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः ॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः ।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः ॥
जडगद्गदमूकत्वं लेहः कल्याणको जयेत् ॥ २१ ॥
वक्षस्त्रिक-स्कन्धगतं वायुं मन्यागतं तथा ।
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितः ॥ २२ ॥

---

भुक्त्वैव च पिबेदिति शेषः। माषेण्डरीं माषपिष्टकविकृतिः। माषेण्डरीभक्षणानन्तरं क्षीरमांसरसैश्च भुक्त्वा ततो दशमूलीरसं पिबेदित्यर्थः। औत्तरभक्तिकमिति—भोजनानन्तरकालीयम् ॥ १७ ॥ १८ ॥

पञ्चमूलीत्यादि स्पष्टम्। वातादित्यादौ।—वाग्धमनी—वाग्वाहिनी धमनी ॥१९॥२०॥

सहरिद्रेत्यादौ।—अजाजी कृष्णजीरकम्; अजमोदा यमानी; यष्टीमधुकशब्देन मधुयष्टी। श्रीकण्ठदत्तो व्याचष्टे, तत्तु न व्यवहारसिद्धं, नापि टीकान्तरे दृष्टमिति ॥ २१ ॥

वक्ष इत्यादि।—सुश्रुतस्य।—त्रिकमिति पृष्ठवंशाधरसन्धिः, स हि त्रिसन्धान, तत्र [illegible] वामि वमनं नस्यञ्च योगिकम्; नस्यमिह शिरोविरेचनमिति। कुशलेन प्रयोजितमिति विपर्ययात्—इतिमत्वं विना चतुर्विधमप्यत्र नस्यमित्यर्थः ॥ २२ ॥

हरीतकी वचा रास्ना सैन्धवञ्चाम्लवेतसम्।
घृतमात्रासमायुक्तमपतानकनाशनम्॥ २८॥

स्वल्परसोनपिण्डः—

पलमर्द्धपलं वा हि रसोनस्य सुकुट्टितम्।
हिङ्गुजीरकसिन्धूत्थैः सौवर्चलकटुत्रयैः॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलोड़ितम्।
यथाग्नि भक्षितं प्रातः रुबूकाथानुपानतः॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम्।
वातरोगं निहन्त्याशु अर्दितं सापतन्त्रकम्॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे।
ऊरुस्तम्भे च गृध्रस्यां क्रिमिकोष्ठे विशेषतः।
कटीपृष्ठामयं हन्यादुदरञ्च विशेषतः॥ ३०॥
हन्ति प्राग्भोजनात् पीतं दध्यम्लं सवचोषणम्।
अपतानकमन्योऽपि वातव्याधिक्रमो हितः॥ ३१॥
वातघ्नैर्दशमूल्या च नवं कुर्ज्जमुपाचरेत्।

---

बाहुशोष इत्यादौ।—महत् कल्याणकम् उन्मादाधिकारोक्तम्। हरीतक्यादौ।—वचामतो ब्राह्मपर्णी, तत्र सिद्धं घृतः इत्यर्थः॥ २७॥ २८॥

हरीतक्यादि।—क्वाथेन चूर्णेन चाज्यं योगः। क्वाथपक्षे—सैन्धवचूर्णे प्रक्षिपेत्, चूर्णपक्षे—घृतकर्षद्वयेन चूर्णस्याष्टौ माषकाः पेया इत्यर्थः॥ २८॥

पलमर्द्धपलमित्यादि।—पलमर्द्धपलं वेति मात्राद्वयम्, एवं वाशब्दो पूर्वांशापेक्षया, इत्यर्थे वाशब्दो वा। ।—पलमर्द्धपलार्द्धमेवेत्यपि पाठः। त्वगादिरहितपिष्टरसोनस्य त्रिभिरामाषकैः गुरुस्य मार्द्धपलमीशं; माषकाष्टकं माषकद्वयं वा प्रतिदिनं सेवनीयम्। यत्रैव मात्रया आमशीतं सेवनीयत्वं न स्यात्,—यतः पुनरपि रसोनदिवसः करणीयः। न च मात्रं यावता मात्रया मात्रोपयोगो भवति, तावदेव मात्रा किमिति। दशिनेति, यस्तस्य मति योग्यतामिः स्यादित्याहुः॥ ३०॥

हन्तीत्यादौ।—सवचोषणं ति।—वचानिचयसंहितमित्यर्थः॥ ३१॥

स्वेदैर्मांसरसैर्वापि प्रहृष्टं तं विवर्जयेत् ॥ ३२ ॥
पिप्पल्यादिरजस्तूर्णी-प्रतितूर्णोः सुखाम्बुना ।
पिबेद्वा स्नेहलवणं सघृतं चारहिङ्गु वा ॥ ३३ ॥
आध्माने लङ्घनं पाणितापश्च फलवर्त्तयः ।
दीपनं पाचनञ्चैव वस्तिश्चाप्यत्र शोधनः ॥ ३४ ॥
प्रत्याध्माने तु वमनं लङ्घनं दीपनं तथा ॥ ३५ ॥
प्रत्यष्ठीलाष्ठीलिकयोरन्तर्विद्रधिगुल्मवत् ॥ ३६ ॥
दशमूलीबलारास्ना-गुडूचीविश्वभेषजम् ।
पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु ॥ ३७ ॥
शेफालिकादलैः क्वाथो मृद्वग्निपरिसाधितः ।
दुर्वारं गृध्रसीरोगं पीतमात्रं समुद्धरेत् ॥ ३८ ॥
पञ्चमूलीकषायस्तु रुवुतैलं त्रिवृद्घृतम् ।
त्रिवृत्तैर्वाथवा युक्तं गृध्रसीगुल्मशूलनुत् ॥ ३९ ॥
तैलं घृतं चार्द्रकमातुलुङ्गयो रसं सचुक्रं सगुडं पिबेद्वा ।

---

वातघ्नैरिति ।—भद्रदार्वादिगणैः, दशमूली च विश्यातैव यथत्वात्, एते. क्वाथ-स्नेहोपनाहादिकं कुर्यात् । नवत्वन्तु कुक्षस्य यावत न रुजाऽऽश्वियिरिति ॥ ३२ ॥

पिप्पल्यादिश्च सौश्रुतः । रजश्चूर्णम् । स्नेहलवणम् सुहील्ववणाद्य-स्नेहानित्यादिना पूर्वमुक्तम्, इदमपि सुखाम्बुनैव पिबेदिति । सघृत चारहिङ्गु इति ।—घृतेनैव यवक्षारहिङ्गुनोश्च पानम् । घृतस्य कर्षकं, यवक्षारस्य चतुर्माषकं, हिङ्गु, षड्रक्तिकमिति । दीपन पाचनञ्चेति ।—लङ्घनानन्तरं दोषशेषपचनार्थं दीपनं पाचनञ्च भेषजं देयम् ॥ ३३ ॥ ३४ ॥

प्रत्याध्माने तु वमनमिति ।—प्रत्याध्मानस्यामाशयसमुत्थत्वात् ॥ ३५ ॥ ३६ ॥

दशमूलीत्यादि ।—दशमूलादीनां क्वाथे एरण्डतैलं प्रक्षेप्यम् ॥ ३७ ॥

शेफालिकेत्यादि ।—वचन स्पष्टम् ॥ ३८ ॥

पञ्चमूलीत्यादि ।—पञ्चमूली महती ॥ ३९ ॥

तैलं घृत इत्यादी ।—चार्द्रकरस-मातुलुङ्गफलरस-चुक्र गुडादीनां तुल्यो भाग;

कट्यूरुपृष्ठत्रिकगुल्मशूल-गृध्रस्युदावर्त्तहरः प्रदिष्टः ॥ ४० ॥

तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः ।
मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः ॥ ४१ ॥
गोमूत्रैरण्डतैलाभ्यां कृष्णा पीता सुचूर्णिता ।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥ ४२ ॥
अश्नाति यो नरः सिद्धामेरण्डतैलसाधिताम् ।
वार्त्ताकुं गृध्रसीचीणः पूर्णामाप्नोत्यसौ गतिम् ॥ ४३ ॥
पिष्ट्वैरण्डफलं क्षीरे सविश्वं वा फलं त्रयोः ।
पायसो भक्षितः सिद्धो गृध्रसीकटिशूलनुत् ॥ ४४ ॥
रास्नायास्तु पलञ्चैकं कर्षान् पञ्च च गुग्गुलोः ।
सर्पिषा गुड़िकां कृत्वा खादेद्वा गृध्रसीहराम् ॥ ४५ ॥
गृध्रस्यार्त्तं नरं सम्यक् पाचनाद्यैर्विशोधितम् ।

---

तैलं घृतं वा दत्त्वा पिबेदिति । पिबेदिति ।—वाशब्दः पूर्वयोगापेक्षया; किंवा तैलमेव मधुकगुड़मिश्रितमेको योगः, तथा घृतमपि मधुकगुड़मिति द्वितीयः, तथा मिलितार्द्रकरसः मातुलुङ्गरसोऽपि मधुकगुड़ इति तृतीयो योगः । मातुलुङ्गी मधुकर्कटी ॥ ४० ॥

तैलमेरण्डजमित्यादि ।—योगोऽयं विरेचकत्वेनाल्पमात्रया प्रत्यहं मासं यावदुपयोज्यः । भूरिमात्रोपयोगे तु बलहानिः स्यात्, तेन गोमूत्रस्य पलं किञ्चिन्न्यूनं वा, तथा एरण्डतैलमपि माषकाष्टकं किञ्चिन्न्यूनं वा कोष्ठापेक्षया प्रत्यहं मासं यावदुपयोज्यम् ॥ ४१ ॥

गोमूत्रैरण्डतैलाभ्यामित्यादि ।—गोमूत्रैरण्डतैलयोर्मिलित्वा कर्षद्वयं, पिप्पलीचूर्णस्य माषकचतुष्टयमिति व्यवहरन्ति वृद्धाः ॥ ४२ ॥

अश्नातीत्यादौ ।—एरण्डतैलसाधितां सम्भ्रृतामित्यर्थः ॥ ४३ ॥

पिष्ट्वेत्यादि ।—त्वग्रहितमेरण्डबीजं कर्षं किञ्चिन्न्यूनं वा दत्त्वा क्षीरेण विरेचनार्थं पायसः साध्यः । सविश्वं वेति ।—पूर्वयोगापेक्षया वाशब्दः, अत्रापि किञ्चित् तण्डुलादीन् दत्त्वा शुण्ठ्येरण्डफलाभ्यां पिष्टाभ्यां कर्षार्द्धे वा कषायप्रक्षेपादित्यादिपरिभाषया पायसः साध्यः ॥ ४४ ॥

ज्ञात्वा नरं प्रदीप्ताग्निं वस्तिभिः समुपाचरेत् ॥ ४६ ॥
नादौ वस्तिविधिं कुर्य्याद् यावदूर्द्ध्वं न शुध्यति ।
स्नेहो निरर्थकस्तस्य भस्मन्येवाहुतिर्यथा ॥ ४७ ॥
गृध्रस्यार्त्तस्य जङ्घायाः स्नेहस्वेदे कृते भृशम् ।
पश्चां निर्मर्दितायाश्च सूक्ष्ममार्गेण गृध्रसीम् ॥
अवताय्याङ्गुली सम्यक् कनिष्ठायां शनैःशनैः ।
ज्ञात्वा समुन्नतं ग्रन्थिं कण्डरायां व्यवस्थितम् ॥
तं शस्त्रेण विदार्य्याशु प्रवालाङ्कुरसन्निभम् ।
समुद्धृत्याग्निना दग्ध्वा लिम्पेद् यष्ट्याह्वचन्दनैः ॥
विध्येत् शिरामिन्द्रवस्तेरधस्ताच्चतुरङ्गुले ।
यदि नोपशमं गच्छेद्दहेत् पादकनिष्ठिकाम् ॥ ४८ ॥
तगरस्य शिफां सार्द्रां पिष्ट्वा तक्रेण यः पिबेत् ।
वङ्क्षणानिलरोगार्त्तः स क्षणादेव मुच्यते ॥ ४९ ॥
दशमूलीकषायेण पिबेद् वा नागराम्भसा ।
कटीमूलेषु सर्व्वेषु तैलमेरण्डसम्भवम् ॥ ५० ॥
विश्वाच्यां खञ्जपङ्गोश्च दाहे हर्षे च पादयोः ।
क्रोष्टुशीर्षविकारे च विकारे वातकण्टके ।

---

ज्ञात्वा इत्यादि ।—ज्ञात्वेत्यनु मापकाद्यैः, समधातुमनुपानम् ॥ ४५ । ४६ ॥

नादौ वस्तिविधिं कुर्य्यादित्यादौ ।—यावदूर्द्धं न शुध्यतीति ।—ऊर्द्धमित्यत्र पश्चादिति शेषः, तेन यावद्विरेचनमन्तरेण आमाशयो न शुध्यतीत्यर्थः ॥ ४७ ॥

गृध्रसीत्यादि ।—जङ्घायाः सकाशात् अवसौ कनिष्ठायामङ्गुलौ अवताय्येति योजना । कण्डरा कनिष्ठाङ्गुलिबद्धा स्थूलशिरा । इन्द्रवस्तिरिह गुल्फजङ्घो-सन्धिदेशः ॥ ४८ ॥

तगरस्येत्यादि ।—तगरः पिण्डतगरः ॥ ४९ ॥

दशमूलीत्यादि ।—दशमूलीक्वाथ नागरक्वाथो एरण्डतैलं प्रक्षिप्य पिबेत् । नागराम्भ इति ।—शुण्ठ्यम्भसामतायां बोध्यम् ॥ ५० ॥

शिरां यथोक्तां निर्विध्य चिकित्सा वातरोगनुत् ॥ ५१ ॥
शिराव्यधः पाददाहे वातकण्टकवत् क्रिया ॥ ५२ ॥
शतधौतघृतोन्मिश्रैर्नागकेशरकण्टकैः ।
पिष्टैः प्रलेपः सेकश्च दशमूलाम्बुनेष्यते ॥ ५३ ॥
आलिप्य नवनीतेन स्वेदो हस्तादिदाहहा ।
अग्नितप्तेष्टकाखण्डं काञ्जिकैः परिषिच्य तु ।
तद्वाष्पस्वेदनं कार्यं पादहर्षविनाशनम् ॥ ५४ ॥
दशमूलस्य निर्यूहो हिङ्गुपुष्करसंयुतः ।
शमयेत् परिपीतस्तु वातं त्रिकसमाश्रितम् ॥ ५५ ॥
गुग्गुलुं क्रोष्टुशीर्षे च गुडूचीत्रिफलाम्भसा ।
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारकम् ॥ ५६ ॥
रक्तावसेचनं कुर्यादभीक्ष्णं वातकण्टके ।
पिबेदेरण्डतैलं वा दहेत् सूचीभिरेव वा ॥ ५७ ॥
शुण्ठीसैन्धवयोः कल्कशुक्ततैलसमन्वितः ।
सुखोष्णो मर्दने योज्यः खल्लीशूलनिवारणः ॥
खल्लयां स्निग्धाम्ललवणैः स्वेदमर्दोपनाहनम् ॥ ५८ ॥

आदित्यपाकगुग्गुलुवटकः—

पृथक् पलांशा त्रिफला पिप्पली चेति चूर्णितम् ।

---

शिरां यथोक्तामिति ।—शिराव्यधविध्यनतिक्रमेण वातकोपभयादश्मनश्च रक्तं स्राव्यम् । खञ्जपङ्ग्वादौ देशी गोक्षुरकेण खञ्जादिष्वपि रक्ताहतवातवेदनाया जङ्घादिसन्धिगतैव शिरा व्याध्या भवतीति भानुमती ॥ ५१—५२ ॥

गुग्गुलुमित्यादि ।—एरण्डक्वाथेन त्रिफलाक्वाथेन वा शोधयित्वा गुग्गुलुर्योज्यः । अत्र एरण्डतैलेन पिष्टा गुग्गुलुः प्रलेप्यः । क्षीरेणेत्यादि ।—चतुर्गुणेन दुग्धेन एरण्डतैलं पेयम्,—"बहुदोषे विरेकार्थं जीर्णे क्षीरान्नभोजनम्" इत्यादि वाग्भटदर्शनात् । पिबेद्वा वृद्धदारकमिति ।—अत्रापि क्षीरेणेति योज्यम् ॥ ५६ । ५७ ॥

खल्लयामित्यादौ—अम्लमिति—काञ्जिकम् ॥ ५८ ॥

दशमूलाम्बुना भाव्यं त्वगेलार्द्धपलान्वितम् ॥
दत्त्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृतः ।
एष मांसरसाभ्यासाद्वातरोगान् विशेषतः ।
हन्ति सन्ध्यस्थिमज्जस्थान् सर्वानिन्द्राशनिर्यथा ॥
भाव्यद्रव्यसमं क्वाथ्यं क्वाथोऽष्टांशस्तु तेन च ।
चार्द्रं यावद्दिनं भाव्यं सप्ताहं भावनाविधिः ॥ ५८ ॥

त्रयोदशाङ्गगुग्गुलुः—

आभाश्वगन्धा हपुषा गुडूची
शतावरी गोक्षुरवृद्धदारम् ।
रास्ना शताह्वा सशटी यमानी
सनागरा चेति समैश्च चूर्णम् ॥
तुल्यं भवेत् कौशिकमत्र मध्ये
देयं तथा सर्पिरतोऽर्द्धभागम् ।
कर्षोन्मानमतस्य तत्प्रयोगात्
कृत्वानुपानं सुरयाऽथ यूषैः ॥
मद्येन वा कोष्णजलेन वाऽथ
क्षीरेण वा मांसरसेन वाऽपि ॥

---

दत्त्वेत्यादौ ।—त्वगेलयोर्मिलित्वाऽर्द्धपलं बोध्यम् ; अत्र त्रिफलादि गुग्गुल्वर्न्त सर्वमेकीकृत्य बोध्यम् । भाव्यमिति ।—क्वाथविशेषः । तेनेति ।—षडंशावशेषक्वाथेनार्द्रं कृत्वा दिनैकं यावद्भाव्यं, भावनाविधिश्चाभिरेव सप्ताहादिति । इयञ्च परिभाषा वाग्भटमतानुसारिणी, तेनास्या अमूलकत्वं नाशङ्कनीयम् । तन्त्रान्तरे—"लेहवद्दृढ़गुटि-नाश्मवलोच घातये स्थितः । दशमूलाम्बुना शोध्यः सप्तवारञ्च गुग्गुलु ॥" इत्युक्तत्वात्, तत् पुनरमार्षमिति नियमः ॥ ५८ ॥

त्रयोदशाङ्गगुग्गुलौ—आभमिति ।—बब्बुलस्यात्रं अभिगृह्यम् । हपुषा खनाम-ख्याता । समैरिति ।—समैरंशैरेकत्वमन्वितम् । तुल्यं भवेत् कौशिकमिति ।—समुदित-सर्वचूर्णसमो गुग्गुलुरित्यर्थः । अतोऽर्द्धभागमिति—कौशिकार्द्धभागम् । भिषजस्तु

कटीग्रहे गृध्रसि-बाहुपृष्ठे
हनुग्रहे जानुनि पादयुग्मे ।
सन्धिस्थिते चास्थिगते च वाते
मज्जाश्रिते स्नायुगते च कोष्ठे ॥
रोगान् जयेद्वातकफानुविद्धान्
वातेरितान् हृद्ग्रहयोनिदोषान् ।
भग्नास्थिविद्धेषु च खञ्जवाते
त्रयोदशाङ्गं प्रवदन्ति तज्ज्ञाः ॥ ६० ॥

जिह्वावरकमग्रे तु वाते वातहरं हितम् ॥ ६१ ॥
श्लेष्माहते तदुल्लेखो दीपनं पाचनं लघु ॥ ६२ ॥
सुप्तिवाते त्वसृङ्मोक्षं कारयेद्बहुशो बुधः ।
दिह्याच्च लवणागार-धूमैस्तैलविमर्दितैः ॥ ६३ ॥
सर्पिस्तैलवसामज्ज-पानाभ्यञ्जनबस्तयः ।
स्वेदाः स्निग्धा निवातञ्च स्थानं प्रावरणानि च ॥
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
बृंहणं यत्तु तत् सर्वं कर्त्तव्यं वातरोगिणाम् ॥ ६४ ॥
पटोल-फलकैर्यूषो हृद्यो वातहरो लघुः ।
वाट्यालककृतो यूषः परं वातविनाशनः ॥ ६५ ॥
बलायाः पञ्चमूलस्य दशमूलस्य वा रसे ।

---

यावता हतेन गुग्गुलोः पेषणं भवति, तावदेव घृतं ग्राह्यम्। गुणाद्युपानभेदो दोषभेदापेक्षया ॥ ६० ॥

आवरणादावृतवातचिकित्सामाह, जिह्वेति।—आवरकमिति।—वायोरावरको यो दोषस्तम्। तदुल्लेख इति।—पथस्य वमनम् ॥ ६१—६२ ॥

सर्पिरित्यादि।—क्रियासूत्रं चरकस्य ॥ ६४ ॥

पटोलफलकैरित्यादौ, तथा वाट्यालककृतो यूष इत्यादौ।—यूषयोनित्वान्मुद्गादयोऽपि बोध्याः। अन्ये तु—केवलयोरेव पटोलफलवाट्यालकयोर्यूषमित्याहुः ॥ ६५ ॥

अजाशीर्षाम्बुजानूप-क्रव्याद-पिशितैः पृथक् ॥
साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतान् ।
भोजयेद्वातरोगार्त्तं तैर्व्यक्तलवणैर्नरम् ॥ ६६ ॥
पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम् ॥ ६७ ॥
वाजिगन्धा बलास्तिस्रो दशमूली महौषधम् ।
द्वे गृध्रनख्यौ रास्ना च गणो मारुतनाशनः ॥ ६८ ॥
कौलं कुलत्थं सुरदारु रास्ना माषातसी तैलफलानि कुष्ठम् ।
वचाशताह्वे यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः ॥ ६९ ॥
आनूपवेशवारोष्ण-प्रदेहो वातनाशनः ॥
निरस्थि पिशितं पिष्टं स्विन्नं गुड़घृतान्वितम् ।
कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः ॥ ७० ॥

---

अजाद्या इत्यादि।—अजादिभिस्त्रिभिः साधनद्रव्यैरजाशीर्षादयश्चत्वारः पृथक् साध्याः, तेन द्वादश रसा भवन्ति। अजादिभिरेकमेव कृत्वा, तेन मांसरसं कारयेदित्याहुः। अन्ये तु—माषिकैरपि कर्त्तव्यमेव बलामूलमनुक्रमशीर्षं-मांसञ्च प्रक्षिप्य पाचनीयम्; परिशिष्टे चतुर्थांशे सति वस्त्रेण छानयित्वा परिभर्जनीयं, तदनु हिङ्ग्वादिविविधद्रव्याणि दत्त्वा संस्कार्यम्। एवं दशमूलेन च साधनम्। अजाशीर्षम् कूर्मकर्कटाद्यम्बुजानां मांसेन, तथा महिष वराहादीनामानूपानां मांसेन, तथा क्रव्यादानां मांसेन रससाधनं कुर्य्यादिति ॥ ६६ ॥

पञ्चमूलीत्यादि।—स्वल्पा पञ्चमूली ॥ ६७ ॥

वाजिगन्धेत्यादि।—बलास्तिस्र इति।—बला, अतिबला, नागबला चेति ख्याताः। अत्र बला पीतपुष्पा, अतिबला श्वेतपुष्पा, नागबला लोहितपुष्पा। गृध्रनख्योर्द्वयं श्वेतरक्तपुष्पभेदात्। गणत्वादनेन सर्वाः क्वाथादिकल्पनाः कार्य्याः ॥ ६८ ॥

कौलमित्यादि।—कौलं बदरफलम्; अतसी तिसीति भाषा; तैलफलं तैलविशिष्टफलम्। एतानि समभागचूर्णानि काञ्जिकेन पिष्ट्वा सुखोष्णः लेपो देयः ॥ ६९ ॥

आनूपवेशवार इति।—वराहादिमांसकृतः। तस्य पारिभाषिकीं संज्ञामाह,—निरस्थीत्यादि ॥ ७० ॥

समस्तं वर्गमर्द्धं वा यथालाभमथापि वा।
प्रयुञ्जीतेति वचनं सर्व्वत्र गणकर्म्मणि ॥ ३१ ॥

अश्वगन्धाद्यं घृतम्—

अश्वगन्धाकषाये च कल्के क्षीरचतुर्गुणम्।
घृतं पक्वन्तु वातघ्नं वृष्यं मांसविवर्द्धनम् ॥ ३२ ॥

दशमूलाद्यं घृतम्—

दशमूलस्य निर्य्यूहे जीवनीयैः पलोन्मितैः ॥
क्षीरेण च घृतं पक्वं तर्पणं पवनार्त्तिजित् ॥
क्वाथोऽत्र त्रिगुणः सर्पिःप्रस्थः स्यात् पयःसमः ॥ ३३ ॥

छागलाद्यं घृतम्—

छागं चर्म्मविनिर्मुक्तं त्यक्तशृङ्गखुरादिकम्।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत् ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरीम् ॥

---

व्यक्तिः स्यादिति। काञ्जिकादिशब्दात् सुरा-सौवीर-तुषोदक-धान्याम्ल-दधिमस्तु-शुक्ता-कोलादीनां ग्रहणम् ॥ ३१ ॥

अश्वगन्धाघृते।—चतुर्गुणक्षीरसाहचर्यादश्वगन्धाक्वाथोऽपि चतुर्गुणः। कल्कोऽपि अश्वगन्धाया एव ॥ ३२ ॥

दशमूलघृते।—दशमूलक्वाथोऽपि त्रिगुणः, क्षीरन्तु स्नेहसममिति चक्रः। जेज्जटमते तु—"स्नेहाच्चतुर्गुणः क्वाथः क्षीरं स्नेहसमम्" इति। अत्रिमते परिभाषा।—"एकद्वित्रिद्रवद्रव्यैः कुर्यात् स्नेहचतुर्गुणम्। क्षीरं स्नेहसमं दद्याच्चतुर्भिश्च चतुर्गुणम्।" इति। अस्यार्थः,—यत्रैको द्रवः, तत्र तेनैव चातुर्गुण्यम्; यत्र तु द्वौ, तत्र ताभ्याम्। यत्र त्रयः, तत्र त्रिभिरिति चातुर्गुण्यं मिलित्वा; क्षीरन्तु स्नेहसमं, चतुर्भिरपि मिलित्वैव चातुर्गुण्यम्; एवं सर्वत्र व्याख्येयम्। जीवनीयैरित्यत्र जीवनीयगणः; अनुक्तसंख्यत्वात् एवं सर्वत्र अनेनैव कल्कः ॥ ३३ ॥

छागं चर्म्मविनिर्मुक्तमित्यादि।—चर्म्मादिहीनं तदेकच्छागाङ्गकम् एवं मयूराद्यघृते मयूराङ्गकमपि गृहीत्वा दशमूलस्य द्वात्रिंशत्पलमात्रं जलद्रोणे पक्तव्यमित्येके। चर्म्मादिहीनं तदेकच्छागमांसं द्वात्रिंशत्पलमात्रं गृहीत्वा, दशमूलस्य द्वात्रिंशत्पलमात्रं जलद्रोणे पक्तव्यमित्याह

पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥
तथागुरु सर्जरसं सरलं देवदारु च।
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम् ॥
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम्।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥
तत् साधुसिद्धं सौवर्णे राजते मृन्मयेऽपि वा।
प्रक्षिप्य कलसे सम्यक् सुनिगुप्तं निधापयेत् ॥
बलातैलमिदं नाम्ना सर्ववातविकारनुत्।
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान्।
क्षीणवाते मर्महतेऽभिहते मथितेऽपि वा ॥
भग्ने श्रमाभिपन्ने च सर्वथैवोपयोजयेत्।
सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति ॥
हिक्कां कासमधीमन्थं गुल्मं श्वासं सुदारुणम्।
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति।
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥
राजभिस्तद्धि कर्तव्यं राजमात्राश्च ये नराः।
सुखिनः सुकुमाराश्च बलिनश्चैव ये नराः ॥ ७७ ॥

---

क्षीरद्रव्याणाञ्च मिलित्वा चतुष्कादय; एवं बलाक्वाथेन सह त्रयः क्वाथास्तथा पयश्चेति द्रवचतुष्टयम्। एषां चतुर्णां द्रवाणां प्रत्येकं तैलप्रस्थापेक्षयाऽष्टगुणो भागश्च मिलित्वा तेषाम् द्वात्रिंशद्गुणो द्रवो भवति। तैलञ्च मानविशेषानिर्देशात् प्रस्थपरिमितमेव ग्राह्यम्। एकश इति।—एकैकश्च। पाचयेदमधुरं गणमिति।—काकोल्यादिगणं कल्कीकृत्य। सैन्धवसंयुतमिति।—सैन्धवमगुर्वादि च कल्कीकृत्य पक्तव्यम्। कालानुसारिवा तगरपादिका, तदभावे शितशोलोपहः। तगर पिण्डीतगरमूलं, शारिवा श्यामालता, पुनर्नवामूलः कल्कः। सुनिगुप्तमिति।—बालाद्यपहरिहारेण गुप्तं रक्षितम्। तेनेदं सुश्रुते मूढगर्भे पठितं, तेन "सूतिकायै प्रदापयेत्" इति विशेषोक्तम्। वलाहतिमपोहतीति।—वयसा जन्मना चोपगतवलिं व्यपोहतीति, प्रत्यग्रधातुः पुनर्योवनत्वात्। राजमात्रा इति।—राज्ञ इव मात्रा यदि स्त्री दीयते तदा ॥ ७७ ॥

एषां दश पलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ।
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥
चन्दनं तगरं कुष्ठमेला पर्णीचतुष्टयम् ।
रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् ।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ।
पाने बस्तौ तथाऽभ्यङ्गे भोज्ये चैव प्रशस्यते ॥
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ।
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ॥
अधोभागे च ये वाताः शिरोमध्यगताश्च ये ।
दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्रहे ॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ।
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥
बधिरा लल्लजिह्वाश्च मन्दमेधस एव च ।
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥
वातार्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा ।
एतत् तैलवरं तेषां नाम्ना नारायणं स्मृतम् ॥
तगरं नतमत्र स्यादभावे शितली जटा ॥ ७८ ॥

---

इति पलानि ; अतिबला क्षीरविदारी ; तगरं तगरपादिका, तदभावे शितली- कोषकः, पिण्डतगरमूलमित्यन्ये । आजं वा यदि वा गव्यमिति ।—यद्यपि गव्याज- पयसोः प्राप्तौ गुणसाम्ये, तथापि अजाक्षीरेण पक्वं तैलमिदमवश्यमपि विशेषगुणप्रदं भवतीति प्रतिपत्तव्यम् ; अन्त्रे वायुः,—क्षीरार्णवमिति विशेषव्याख्यानमिति । नारायणसंज्ञा चास्य विष्णुनिर्मितत्वात्, शतावरीरसप्राधान्याद्वा । नारायणीति शतावरी- पर्यायः ॥ ७८ ॥

अश्वगन्धातैलम्—

शतं पक्त्वाऽश्वगन्धाया जलद्रोणेऽङ्घ्रिशेषितम् ।
विस्राव्य विपचेत् तैलं क्षीरं दत्त्वा चतुर्गुणम् ।
कल्कैर्मृणालशालूक-बिसकिञ्जल्कमालती-
पुष्पैर्ह्रीवेरमधुका-शारिवापद्मकेशरैः ॥
मेदापुनर्नवाद्राक्षा-मञ्जिष्ठाबृहतीद्वयैः ।
एलैलवालुत्रिफला-मुस्तचन्दनपद्मकैः ॥
पक्वं रक्तान्वयं वातं रक्तपित्तमसृग्दरम् ।
हन्यात् पुष्टिबलं कुर्य्यात् क्षमाणां मांसवर्द्धनम् ।
रेतोयोनिविकारघ्नं सर्वदोषापकर्षणम् ।
षण्ढानपि वृषान् कुर्य्यात् पानाभ्यङ्गानुवासनैः ॥ ८१ ॥

मूलकाद्यं तैलम्—

मूलकस्वरसं तैलं क्षीरदध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः ॥
पिप्पल्यतिविषारास्ना-चविकागुरुचित्रकैः ।
भल्लातकवचाकुष्ठ-श्वदंष्ट्राविश्वभेषजैः ॥
पुष्कराह्वशटीबिल्व-शताह्वानतदारुभिः ।
तत् सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥ ८२ ॥

---

अश्वगन्धातैले।—अश्वगन्धेत्यादि।—पादशेषितम्। मृणालं पद्मनालं, बिसम् पद्ममूलम्, बिसकन्देन मृणालमिलितः समासः; किञ्जल्कः पद्मकेसरः, पद्मकेशरम् इत्यन्ये; अन्ये तु—उत्पलकिञ्जल्कमित्याहुः। मेदाद्याभावे मदेति पाठे—मेदा महामेदा, मांसपर्णीत्यर्थः ॥ ८१ ॥

मूलकेत्यादि।—चरकात्। मूलकस्वरसादीनि चत्वारि द्रव्याणि तैलसमानि। बलादिचित्रकसैन्धवैरित्यत्र बलादिभुजङ्गैरित्येव पठन्त्येके इत्यन्ये, अन्ये तु— तदयुक्तं चित्रकद्वयस्य पाठात् चित्रकपदेनैरण्डमूलं व्याख्येयं, तत्तु टीकाकारैर्व्याख्यातमिति ॥ ८२ ॥

काथोऽत्र माषनिष्पावाः सैन्धवं कल्कमेव च ॥ ८६ ॥

(१) माषतैलम्—

माषात्मगुप्तातिरसोरुबूक-रास्नाशताह्वालवणैः प्रपिष्टैः।
चतुर्गुणे माषबलाकषाये तैलं कृतं हन्ति च पक्षवातम् ॥ ८७ ॥

(२) माषतैलम्—माषप्रस्थं समावाप्य पचेत् सम्यग्जलाढके।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम्।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम्।
रास्नात्मगुप्तामधुकं बलाव्योषं त्रिकण्टकम् ॥
पक्षाघातेऽर्दिते वाते कर्णशूले सुदारुणे।
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ॥
हस्तकम्पे शिरःकम्पे विश्वाच्यामववाहुके।
शस्तं कलायखञ्जे च पानाभ्यञ्जनवस्तिभिः ॥
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥ ८८ ॥

(३) माषतैलम्—माषातसीयवकुरण्टककण्टकारी-
गोधापटुण्टुकजटाकपिकच्छुतोयैः।
कार्पासकास्थिशणबीजकुलत्थकोल-
क्वाथेन वस्तपिशितस्य रसेन चापि ॥

---

पक्षः। अत्र तु—[illegible] कल्कः, [illegible] चतुर्गुणमित्यर्थः ॥ ८६ ॥

माषात्मगुप्तेत्यादौ।—अतिरसा मूर्वेति [illegible], [illegible] माषबलयोः मिलिता चतुर्गुणः क्वाथः ॥ ८७ ॥

माषप्रस्थमित्यादौ।—जीवनीयानि यान्यष्टाविति अष्टवर्गः ॥ ८८ ॥

माषातसीत्यादौ।—अतसी [illegible], कण्टकारीति [illegible]; [illegible] गोधापदी; टुण्टुकजटा श्योनाकमूलं; कपिकच्छु [illegible]

काथोऽत्र माषनिष्पावः सैन्धवं कल्कमेव च ॥ ८६ ॥

( १ ) माषतैलम्—

माषात्मगुप्तातिरसोरुबूक-रास्नाशताह्वालवणैः प्रपिष्टैः।
चतुर्गुणे माषबलाकषाये तैलं शृतं हन्ति च पक्षवातम् ॥ ८७ ॥

(२) माषतैलम्—माषप्रस्थं समावाप्य पचेत् सम्यग्जलाढके।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम्।
जीवनीयानि यान्यष्टौ शतपुष्पांससैन्धवाम्।
रास्नात्मगुप्तामधुकं बलाव्योषं त्रिकण्टकम् ॥
पक्षाघातेऽर्दिते वाते कर्णशूले सुदारुणे।
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ॥
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके।
शस्तं कलायखञ्जे च पानाभ्यञ्जनवस्तिभिः ॥
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥ ८८ ॥

(३) माषतैलम्—माषातसीयवकुरण्टककण्टकारी-
गोकण्टटुण्टुकजटाकपिकच्छुतोयैः।
कार्पासकास्थिशणबीजकुलत्थकोल-
क्वाथेन वस्तपिशितस्य रसेन चापि ॥

---

चक्रः। अत्र तु—केवलसैन्धवस्य कुत्रापि कल्कत्वादर्शनान्माषसैन्धवयोः
द्रवत्वान्मतं चतुर्गुणमित्याहुः ॥ ८६ ॥

माषात्मगुप्तेत्यादौ।—अतिरसा मूर्वेति नियतः, पक्षिमध्ये
मिलित्वा चतुर्गुणः क्वाथः ॥ ८७ ॥

माषप्रस्थमित्यादौ।—जीवनीयानि यान्यष्टाविति अष्टवर्गः ॥ ८८ ॥

माषातसीत्यादौ।—अतसी उमा, कुरण्टकासायः, कण्टकारी
निदिग्धिका; गोकण्टको गोक्षुरः; टुण्टुकश्श्योनाकमूलं;

क्वाथोऽत्र माषनिष्पाद्यः सैन्धवं कल्कमेव च ॥ ८६ ॥

(१) माषतैलम्—

माषात्मगुप्तातिरसोरुबूक-रास्नाशताह्वालवणैः प्रदिष्टैः।
चतुर्गुणे माषबलाकषाये तैलं कृतं हन्ति च पक्षवातम् ॥ ८७ ॥

(२) माषतैलम्—माषप्रस्थं समावाप्य पचेत् सम्यग्जलाढके।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम्।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम्।
रास्नात्मगुप्तामधुकं बलाश्योषं त्रिकण्टकम् ॥
पक्षाघातेऽर्दिते वाते कर्णशूले सुदारुणे।
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ॥
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके।
शस्तं कलायखञ्जे च पानाभ्यञ्जनबस्तिभिः ॥
माषतैलमिदं श्रेष्ठमूर्द्धजत्रुगदापहम् ॥ ८८ ॥

(३) माषतैलम्—माषातसीयवकुरण्टककण्टकारी-
गोकण्टटुण्टुकजटाकपिकच्छुतोयैः।
कार्पासकास्थिशणबीजकुलत्थकोल-
क्वाथेन वस्तपिशितस्य रसेन चापि ॥

---

माष.। क्वथे तु—केवलसैन्धवस्य कुत्रापि कल्कत्वादर्शनान्माषसैन्धवयोः कल्कः, चतुर्गुणद्रवत्वात्तत्र चतुर्गुणमित्याहुः ॥ ८६ ॥

माषात्मगुप्तेत्यादौ।—अतिरसा मूर्वेति निश्चलः; शतावरीत्यन्ये। माषबलयोश्च मिलित्वा चतुर्गुणः क्वाथः ॥ ८७ ॥

माषप्रस्थमित्यादौ।—जीवनीयानि यान्यष्टाविति अष्टवर्गः ॥ ८८ ॥

माषातसीत्यादौ।—अतसी वर्तुलकलायः, कश्चिदतसीत्याह; कुरण्टको झिण्टी; गोकण्टको गोक्षुरः; टुण्टुकजटा श्योनाकमूलं; कपिकच्छु क-

शुण्ठ्या समागधिकया शतपुष्पया च
सैरण्डमूलसपुनर्नवया सरण्या।
रास्नाबलाऽमृतलताकटुकैर्विपक्वम्
माषाख्यमेतदयबाहुहरञ्च तैलम्॥
पक्षाङ्गशोषमपतानकमाढ्यवात-
साक्षेपकं सभुजकम्पशिरःप्रकम्पम्।
नस्येन बस्तिविधिना परिषेचनेन
हन्यात् कटीजघनजानुरुजश्च सर्वाः॥ ८८॥

(१) महामाषतैलम्—

माषस्याढकं दत्त्वा तुलार्द्धं दशमूलतः।
पलानि छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत्॥
पूते शीते कषाये च चतुर्थांशावतारिते।
प्रस्थञ्च तिलतैलस्य पयो दत्त्वा चतुर्गुणम्॥
आत्मगुप्तोरुबूकाभ्यां शताह्वा लवणत्रयम्।
जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम्॥
सव्योषपिप्पलीमूलं रास्ना मधुकसैन्धवम्।
देवदार्वमृता कुष्ठं वाजिगन्धा वचा शटी॥
एतैरक्षसमैः कल्कैः साधयेन्मृदुनाग्निना।
पक्षाघातेऽर्दिते वाते बाधिर्य्ये हनुसंग्रहे॥

---

शिग्रौ। माषादिना कथितद्रव्येणैव: क्वाथ:; काथौषाश्लिष्टपतिना कोशार्द्धभागत: क्वाथ:, कोलञ्च मुष्टकदरम्। तथा वस्त्रनिर्मितस्य छागमांसस्य रस: क्वाथतृतीय:। एवं त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम्,—"एकाक्षविद्रवद्रव्यैः कुर्यात् स्नेहान् चतुर्गुणम्" इति वचनात्। सरणी प्रसारणी, अमृतलता गुडूची, कटुकं मरिचं, न तु लता-कस्तूरी॥ ८८॥

माषस्याढकमित्यादि।—अर्द्धाढकं द्वात्रिंशत् पलानि। अत्रापि पूर्ववत् यष्टि-मधुकस्य भागद्वयम्। लवणत्रयमिति।—वरकोलवणमिदं यवक्षारयात् सौवर्चलं सैन्धवं

कर्णनादे शिरःशूले तिमिरे च त्रिदोषजे।
पाणिपादशिरोग्रीवा-भ्रमणे मन्दचंक्रमे॥
कलायखञ्जे पाङ्गुल्ये गृध्रस्यामववाहुके।
पाने वस्तौ तथाभ्यङ्गे नस्यकर्णाक्षिपूरणे।
तैलमेतत् प्रशंसन्ति सर्ववातरुजापहम्॥ ८०॥

(२) महामाषतैलम्—

द्विपञ्चमूलीं निःक्वाथ्य तैलात् षोड़शभिर्गुणैः।
माषाढ़कं साधयित्वा तं निर्यूहं चतुर्गुणम्॥
वाहयित्वा तु विपचेत् तैलप्रस्थं पयःसमम्।
कल्कांश्च समावाप्य भिषग्द्रव्याणि बुद्धिमान्॥
अश्वगन्धां शटीं दारु बलां रास्नां प्रसारणीम्।
कुष्ठं परूषकं भार्गीं द्वे विदार्यौ पुनर्नवाम्॥
मातुलुङ्गफलाजाज्यौ रामठं शतपुष्पिकाम्।
शतावरीं गोक्षुरकं पिप्पलीमूलचित्रकौ॥

---

विडञ्च। पुनः सैन्धवमिति वचनात् सैन्धवस्यापि मानद्वयम्। जीवनीयानि इति।—जीवनीय दशकम्। पाणिपादशिरोग्रीवाभ्रमण इति।—पाणिपादादिकम्प इत्यर्थः॥८०॥

द्विपञ्चमूलीमित्यादि।—अत्र माषस्य क्वाथ्यस्याढकमानत्वमुक्तं, तत्साहचर्य्याद्दशमूलस्यापि क्वाथ्यमाढकं ज्ञेयम्। तैलात् षोडशभिर्गुणैरिति।—तैलप्रस्थापेक्षया षोडशगुणजलेनेत्यर्थः; प्रस्थश्च षोडशगुणः सन् द्रोणो भवति, तेन जलद्रोणेनेत्यर्थः। माषाढकञ्च तैलात् षोडशगुणेनांभसा साधयित्वेति योज्यम्। तं दशमूलक्वाथं तथा माषक्वाथञ्च तैलाच्चतुर्गुणं यथा स्यात् तथा वाहयित्वा तैलप्रस्थं विपचेदिति योज्यम्। पयःसममिति।—दुग्धं तुल्यं तेन नवगुणः पाक इति चक्रः। अत एव पठन्ति—दशमूलाढकं द्रोणे इत्यादि। अन्ये तु—द्विपञ्चमूलीं माषाढकञ्चैकीकृत्य जलद्रोणमानेन साधयेदित्याहुः। तन्मते—पञ्चगुणः पाकः। अपरे तु—दशमूलकषायेण तैलात् षोडशगुणेन माषाढकं साधयित्वा तेन पादावशेषेण तैलप्रस्थपाक इत्याहुः। अत्र पक्षे निश्चितदशमूलं पल २५६, जलशराव २५६, शेषशराव ६४; किन्तु अयं पक्षो शठैमादिमते, कुत्रापि एवंविधकल्पनाया अदृष्टत्वात्। इति। द्वे विदार्यौ।—विदारी

जीवनीयगणं सर्वं संहृत्यैव ससैन्धवम् ।
तत् साधु सिद्धं विज्ञाय माषतैलमिदं महत् ।
वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ॥
पक्षाघाते हनुस्तम्भे ह्यर्दिते सापतन्त्रके ।
अवबाहुकविश्वाच्योः खञ्जपङ्गुल्ययोरपि ।
हनुमन्याग्रहे चैव अधिमन्थे च वातिके ॥
शुक्रक्षये कर्णनादे कर्णशूले च दारुणे ।
कलायखञ्जशमनं भैषज्यमिदमादिशेत् ॥
दशमूलाढकं द्रोणे निःक्वाथ्य पादिको भवेत् ।
क्वाथश्चतुर्गुणस्तैलान्माषक्वाथेऽप्ययं विधिः ॥ ८१ ॥

बृहन्माषतैलम्—

माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे ।
यवकोलकुलत्थानां छागमांसरसे पृथक् ॥
प्रस्थे च तिलतैलस्य क्षीरं दत्त्वा चतुर्गुणम् ।
रास्नात्मगुप्तासिन्धूत्थ-शताह्वैरण्डमुस्तकैः ॥
जीवनीयबलाव्योषैः पचेदक्षसमैर्भिषक् ।
हस्तकम्पे शिरःकम्पे बाहुशोषेऽवबाहुके ॥
बाधिर्ये कर्णशूले च कर्णनादे च दारुणे ।
विश्वाच्यामर्दिते कुब्जे गृध्रस्यामपतानके ॥
वस्त्यभ्यञ्जनपानेषु नावनेषु च दापयेत् ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥
क्वाथप्रस्थाः षडेवात्र विभक्तयन्तेन भाषिताः ॥ ८२ ॥

---

८८. क्षीरविदारी च, मातुलुङ्गकं मातुलुङ्गस्य फलम्। जीवनीयगणमिति— जीवनीयदशकम् ॥ ८१ ॥

सप्तप्रस्थमाषतैले क्वाथस्य प्रत्येकप्रस्थत्वात् माषादीनां प्रत्येकं प्रस्थो ग्राह्यः। निःक्वाथ्य दशमूलप्रस्थः; तथा यवकोलकुलत्थानां मिलितैव प्रस्थः। छागेन चतु

मज्जस्नेहः—

ग्राम्यानूपौदकानान्तु भित्त्वास्थीनि पचेज्जले ।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥
जीवकर्षभकास्फोता-विदारीकपिकच्छुभिः ।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥
तत् सिद्धं नावनाभ्यङ्गात् तथा-पानानुवासनात् ।
सिरापर्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये ।
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम् ॥ ८३ ॥

वसास्नेहः—

प्रस्थः स्यात् त्रिफलायास्तु कुलत्थकुडवद्वयम् ।
कृष्णगन्धात्वगाढक्योः पृथक् पञ्चपलं भवेत् ॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम् ।
जलद्रोणे पचेत् पादशेषं प्रस्थोन्मितं पृथक् ॥
सुराऽऽरनालदध्यम्ल-सौवीरकतुषोदकम् ।

---

तुल्यं जलं देयं, चतुर्भागोऽवशेषः । अत एवाह—"कायप्रस्थाः पचेदाम" इत्यादि । जीवनीयैरिति—जीवनीयदशकैः ॥ ८१ ॥

ग्राम्यानूपौदकानामित्यादौ ।—त्रिगुणक्षीरसाधनार्थमूलमूलकाथयोरपि त्रिगुण एव क्वाथः; अन्ये तु—चतुर्गुणं इत्याहुः । वातघ्नैरिति ।—भद्रदार्वादिगणैः । मधुर लवणकाम्लकटुकैर्वातहरद्रव्यैः । जीवनीयगण—अविशेषे जीवकर्षभकयोः पुनः पञ्चो भागत्रयमध्यार्थम् । आस्फोता—आपरमाथीति ख्याता ॥ ८२ ॥

प्रस्थः स्यादित्यादि ।—अत्र त्रिफलाया मिलित्वा प्रस्थः, कृष्णगन्धा शोभाञ्जनम्, अस्यास्त्वक् मूलत्वक् । अन्ये तु—कृष्णगन्धा शमीत्याहुः; तन्न, अनुक्रमे—"त्रिफलाप्रस्थः कुलत्थाढं शिग्रुत्वगाढकौ" इत्यादि पाठात् । दशमूलं पलोन्मितमिति ।—प्रत्येकम् । प्रस्थोन्मितं पृथगिति ।—सुरादीनां षण्णां प्रत्येकं प्रस्थ

कोलदाड़िमवृक्षाम्ल-रसं तैलं घृतं वसाम्॥
मज्जानञ्च पयश्चैव जीवनीय-पलानि षट्।
कल्कं दत्त्वा महास्नेहं सम्यगेनं विपाचयेत्॥
शिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु।
वेपनाक्षेपशूलेषु तदभ्यङ्गं प्रदापयेत्॥ ८४॥

कुब्जप्रसारणीतैलम्—

प्रसारणीशतं क्षुण्णं पचेत् तोयार्मणे शुभे।
पादशेषे समं तैलं दधि दद्यात् सकाञ्जिकम्॥
द्विगुणञ्च पयो दत्त्वा कल्कान् द्विपलिकांस्तथा।
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचाम्॥
शतपुष्पां देवदारु रास्नां वारणपिप्पलीम्।
प्रसारण्याश्च मूलानि मांसीं भल्लातकानि च।
पचेन्मृद्वग्निना तैलं वातश्लेष्मामयान् जयेत्॥
अशीतिं नरनारीस्थान् वातरोगान् व्यपोहति।
कुब्जं स्तिमितपङ्गुत्वं गृध्रसीं खुड़कार्दितम्।
हनुपृष्ठशिरोग्रीवा-स्तम्भं चापि नियच्छति॥ ८५॥

(१) त्रिशतीप्रसारणीतैलम्—

समूलपत्रशाखाञ्च जातसारां प्रसारणीम्।
कुट्टयित्वा पलशतं दशमूलशतं तथा॥

---

इत्यर्थः। दध्यम्लम् अम्लदधि, सुवीरकं काञ्जिकं, कोल बदर, दाडिम अम्लदाडिम, वृक्षाम्लं महार्द्रकं, "महादा" इति ख्याता। जीवनीयपलानि षडिति।—मिलित्वा। महास्नेहमिति।—चतुःस्नेहस्य संज्ञा॥ ८४॥

कुब्जप्रसारणीतैले।—समामिति।—पादावशिष्टक्वाथसमम्, आढकमित्यर्थः। दधि दद्यात् सकाञ्जिकमिति।—दधिकाञ्जिके तैलसमे। तेन तैलदधिकाञ्जिकानां प्रत्येकमाढकम्, द्विगुणञ्च पय इति।—आढकद्वयमित्यर्थः। अन्ये तु—सकाञ्जिकमिति पृथग्विशेषणं कृत्वा काञ्जिकस्यापि द्वैगुण्यमिच्छन्ति, व्यवहारस्तु पूर्वेणैव। खुडको [illegible]; अन्ये तु—वातकण्टक इत्याहुः॥ ८५॥

अश्वगन्धापलशतं कटाहे समधिधिपेत् ।
वारिद्रोणे पृथक् पक्का पादशेषावतारितम् ।
कषायसममावन्तु तैलमत्र प्रदापयेत् ॥
दध्नस्तथाढकं दत्त्वा द्विगुणञ्चापि काञ्जिकम् ।
चतुर्द्रोणेन पयसा जीवनीयैः पलोन्मितैः ॥
शृङ्गवेरपलात् पञ्च त्रिंशद्भल्लातकानि च ॥
द्वे पले पिप्पलीमूलाच्चित्रकाच्च पलद्वयम् ॥
यवक्षारपले द्वे च सैन्धवस्य पलद्वयम् ।
सौवर्चलपले द्वे च मञ्जिष्ठायाः पलद्वयम् ।
प्रसारणीपले द्वे च मधुकस्य पलद्वयम् ॥
सर्वाण्येतानि संहृत्य शनैर्मृद्वग्निना पचेत् ॥
एतदभ्यञ्जने श्रेष्ठं वस्तिकर्मनिरूहणे ।
पाने नस्ये च दातव्यं न क्वचित् प्रतिहन्यते ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ।
विंशतिं श्लैष्मिकांश्चैव सर्वानेतान् व्यपोहति ॥
गृध्रसीमस्थिभङ्गञ्च मन्दाग्निमरोचकम् ।
अपस्मारमथोन्मादं विभ्रमं मन्दगामिताम् ॥
त्वग्गताश्चैव ये वाताः शिरःसन्धिगताश्च ये ।
जानुसन्धिगताश्चैव पादपृष्ठगतास्तथा ॥
भग्नो वा वातसम्भग्नो गजो वा यदि वा नरः ।
प्रसारयति यस्माद्धि तस्मादेषा प्रसारणी ॥
इन्द्रियाणां प्रजननी वृद्धानाञ्च रसायनी ।
एतेनाभ्यक्तगात्राणां शतं पुंसवनं महत् ॥
प्रसारणीतैलमिदं बलवर्णाग्निवर्द्धनम् ॥
अपनयति वलीपलितमुत्पाटयति पक्षाघातम् ।

वातरक्तं सर्वाङ्गगतं वातगुल्मञ्च नाशयति ।
एतदुपसेव्यमानः प्रसन्नवर्णेन्द्रियो भवति ॥ ८६ ॥

(२) त्रिशतीप्रसारणीतैलम्—

प्रसारण्यास्तुलामश्व-गन्धाया दशमूलतः ।
तुलां तुलां पृथग्वारि-द्रोणे पादावशेषिते ॥
तैलाढकं चतुःक्षीरं दधि शुक्तं द्विकाञ्जिकम् ।
द्विपलैर्ग्रन्थिकक्षार प्रसारण्यघसैन्धवैः ।
समञ्जिष्ठाग्नियष्ट्याह्वैः पलिकैर्जीवनीयकैः ।
शुण्ठ्याः पञ्चपलं दत्त्वा त्रिंशद्भल्लातकानि च ।
पचेदस्यादिना वातं हन्ति सन्धिशिराश्रितम् ॥
पुंस्त्वोत्साहस्मृतिप्रज्ञा-बलवर्णाग्निवृद्धये ।
प्रसारणीयं त्रिशती ख्याता सौवर्चलान्विता ॥ ८७ ॥

सप्तशतिकं प्रसारणीतैलम्—

समूलपत्रामुत्पाट्य शरत्काले प्रसारणीम् ।
शतं ग्राह्यं सहचरात् शतावर्य्याः शतं तथा ॥
बलात्मगुप्ताश्वगन्धा-केतकीनां शतं शतम् ।
पचेच्चतुर्गुणे तोये द्रवैस्तैलाढकं भिषक् ॥
मस्तु मांसरसं चुक्रं पयश्चाढकमाढकम् ।

---

प्रसारण्यास्तुलामित्यादौ ।—दशमूलस्य मिलित्वा तुला । पृथग् वारिद्रोण इति ।—तिसृषु तुलासु प्रत्येकं जलद्रोणदानमित्यर्थः । ग्रन्थिकक्षारेत्यादयं सौवर्चलं गृह्णन्ति वृद्धाः । मञ्जिष्ठादीनां यष्ट्याह्वान्तानां प्रत्येकं द्विपलं, जीवनीयदशकस्य प्रत्येकं पलिकम् । त्रिशद् भल्लातकानीत्याकृतिमानात् ॥ ८७ ॥

समूलपत्रामित्यादौ ।—शतं ग्राह्यमिति ।—प्रसारण्या इत्यर्थः । तथा शब्दात् सहचराच्च शतमित्यन्वयः । केतकी केया इति ख्याता । पचेच्चतुर्गुणे तोय इत्यत्र पञ्चोत्तरशतमानत्वाच्चतुर्गुणतोयस्य न वैगुण्यम् । अन्ये तु—सम्यग्वीर्य्याधानार्थं वैगुण्यात् चतुर्गुणमष्टगुणं गृह्णन्ति, तदन्तु न व्यवहारसिद्धं, न वा शास्त्रसिद्धमिति । द्रवैरिति ।—प्रसारण्यादीनां केतक्यन्तानां पादावशिष्टकाथैः । चुक्रं चक्रधिकारोक्तविधिना कार्य्य-

दद्यादढकसमायुक्तं पाचयेन्मृदुनाग्निना ॥
द्रव्याणान्तु प्रदातव्या मात्रा चार्द्धपलांशिका ।
तगरं मदनं कुष्ठं केशरं मुस्तकं त्वचम् ॥
रास्ना सैन्धवपिप्पल्यौ मांसी मञ्जिष्ठयष्टिका ।
तथा मेदा महामेदा जीवकर्षभकौ तथा ।
शतपुष्पा व्याघ्रनखं शृङ्गी देवाह्वमेव च ।
काकोली क्षीरकाकोली वचा भल्लातकं तथा ॥
पेषयित्वा समानेतान् साधनीया प्रसारणी ।
नातिपक्वं न हीनञ्च सिद्धं पूतं निधापयेत् ॥
यत्र यत्र प्रदातव्या तन्मे निगदतः शृणु ।
कुब्जानामथ पङ्गूनां वामनानां तथैव च ॥
यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः ।
वातशोणितदुष्टानां वातोपहतचेतसाम् ॥
स्त्रीमद्यक्षीणशुक्राणां वाजीकरणमुत्तमम् ।
बस्तौ पाने तथाभ्यङ्गे नस्ये चैव प्रदापयेत् ।
प्रयुक्तं शमयत्याशु वातजान् विविधान् गदान् ॥ ८८ ॥

एकादशशतिकं प्रसारणीतैलम् —

शाखामूलदलैः प्रसारणितुलास्तिस्रः कुरण्टात् तुले
छिन्नायाश्च तुले तुले दशयुतो रास्नाशिरीषात् तुलाम् ।

---

निबन्धे ; अन्ये तु—महाराजप्रसारण्या यथामात्रेण विधिरित्याहुः । द्रव्याणामिति ।—कल्कद्रव्याणाम् । चार्द्धपलांशिका इति ।—चार्द्धपलमाना । तगरं पूर्वदेशख्यातम् , केशरं नागकेशरम् ; मञ्जिष्ठयष्टिका इति ।—मञ्जिष्ठाशब्दान्तसत्वाद् ह्रस्व., यष्टिका यष्टिमधु । व्याघ्रनखं नखी ; देवाह्वं देवदारु । भल्लातकासहत्वे रक्तचन्दनं देयम् ॥ ८८ ॥
शाखामूलदलैरित्यादि ।—अत्र तृतीया सहार्थे विशेषणे वा । कुरण्टः नील-झिण्टी । रास्नाशिरीषयोर्मिलित्वा एका तुला । देवदारुकेतकयोरपि मिलित्वैव

द्रोणाद्वाथ सवेतकाद् घटशते निःक्वाथ्य कुम्भांशिके
तोये तैलघटं सुधाम्बुकलसौ दत्त्वाढकं मस्तुनः ॥
शुक्ताच्छागरसाद्यथेक्षुरसतः क्षीरात्र दत्त्वाढकम्
शृङ्गाटककर्कटजीवकाद्यविकसा काकोलिकाकच्छुरा—
सूक्ष्मैलाघनसारकुन्दुसरलाकाश्मीरमांसीनखैः
कालीयोत्पलपद्मकाह्वयनिशाकक्कोलकग्रन्थिकैः ॥
चाम्पेयाभयचोचपूगकटुकाजातीफलाऽभीरुभिः
श्रीवासाऽमरदारुचन्दनवचाशैलेयसिन्धूद्भवैः।
तैलाम्भोदकटम्भराह्विमलिकाहृस्वीरकश्वीरकैः
कस्तूरीदशमूलकेतकनतव्यामाम्बगन्धाम्बुभिः ॥
कौन्तीतार्क्ष्यजमञ्जकीफललघुश्यामाघ्रताङ्गामयैः

सुधा। घटशत इति—द्रोणशतैः कुम्भांशिक इति—द्रोणद्वयमिव, यदुक्तम्—"द्रोणद्वयम् शूर्पः स्यात् स एव कुम्भः स एव च।" अन्ये तु—कुम्भो द्रोणमित्याहुः; "कलशस्त्वर्मण्यां-मानघटकुम्भकलसाः पर्य्यायाः" इति वाग्भटवचनात् कुम्भशब्दोऽत्र द्रोण-पर्य्यायः, तेन कुम्भांशिके द्रव्यस्य द्रोणमेव दत्त्वा, किन्तु व्यवहारः पूर्व्ववत्। अत्र दृश्यगतयोः वहुलत्वादेकस्मिन् पात्रे क्वाथो दुष्कर, तेन द्रव्यं विभज्य जलं तदनु-सारेण दत्त्वा क्वथनीयम्। तैलघटं तैलद्रोणम्। सुधाम्बुकलसाविति।—काञ्जिकस्य द्रोणद्वयम्। शुक्तादीनाञ्च क्षीरान्तानां प्रत्येकमाढकम्। जीवकाद्य जीवनीयदशक-मश्वगन्धा वा, काकोल्या आवश्यं जीवनीयगणेऽप्यस्याः पठितत्वात्। विकसा मञ्जिष्ठा, कच्छुरा शूकशिम्बी, दुरालभेत्यन्ये; घनसार कर्पूरम्; कुन्दुः कुन्दुरुसञ्ज्ञ सुगन्धिगन्धद्रव्यम्; कुन्दुरुखोटिरिति ख्याता। सरला सरलकाष्ठं, न तु त्रिवृता, सुगन्धिद्रव्यान्तःपठितत्वात्; एवं ग्रन्थिकमपि ग्रन्थिपर्णी, न तु पिप्पलीमूलम्, उत्पलमम्बुजपुष्प, न तु कुष्ठम्, तस्य वक्ष्यमाणत्वात्। चाम्पेयं चम्पक-कलिका, नागकेशरो वा; अभयमुशीरम्; चोचं गुडत्वक्; पूग पूगफलं, पूर्ग क्रमुकमित्यन्ये; कटुका मलाकमूरो; अभीरु शतमूली, श्रीवासो नवनीतखोटिः; चन्दनं श्वेतचन्दनम्; शैलेयं शिलाजः; कटम्भरा प्रसारणी हस्तिकर्णी वा, तस्या ह्रिमूलम्; ह्रस्वीरः श्वेतपुनर्नवा; कश्वीरको गन्धमाठी, व्यामं वर्धतृणम्, कौन्ती रेणुका; तार्क्ष्यज रसाञ्जनम्, फल कट्फलं मदनफलं वा, लघु कुष्ठ,

भल्लातत्रिफलाब्जकेशरमहाश्यामालवङ्गान्वितैः ।
सव्योषैस्त्रिपलैर्मह्हीयसि पचेन्मन्देन पात्रेऽग्निना
पानाभ्यञ्जनवस्तिनस्यविधिना तन्मारुतं नाशयेत् ॥
सर्वार्द्धाङ्गगतं तथाऽवयवगं सन्ध्यस्थिमज्जाश्रितम्
श्लेष्मोत्थानथ पैत्तिकांश्च शमयेन्नानाविधानामयान् ।
धातून् बृंहयति स्थिरंश्च कुरुते पुंसां नवं यौवनम्
वृद्धस्यापि बलं करोति सुमहद्वन्ध्यासु गर्भप्रदम् ॥
पीत्वा तैलमिदं जरत्यपि सुतं सूतेऽमुना भूरुहाः
सिक्ताः शोषमुपागताश्च फलिनः स्निग्धा भवन्ति स्थिराः
भग्नाङ्गाः सुदृढीभवन्ति मनुजा गावो हयाः कुञ्जराः ॥८८॥

अष्टादशशतिकं प्रसारणीतैलम्—

समूलदलशाखायाः प्रसारण्याः शतत्रयम् ।
शतमेकं शतावर्य्या अश्वगन्धाशतं तथा ॥
केतकीनां शतञ्चैकं दलमूलाच्छतं शतम् ।
शतं वाट्यालकस्यापि शतं सहचरस्य च ।
जलद्रोणशतं दत्त्वा शतभागावशेषितम् ॥
ततस्तेन कषायेण कषायद्विगुणेन च ।
सुव्यक्तेनारनालेन दधिमण्डाढकेन च ॥

---

श्यामा प्रियङ्गुः ; महाश्यामा श्यामलता ; एषां प्रत्येकं त्रिपलम् ; व्योषञ्च मिलित्वा त्रिपलं ग्राह्यम् । अत्र कल्कमूर्च्छनादौ लवङ्गादि सुगन्धिद्रव्यैः प्रथमः पाकः, मध्यमैस्तु द्वितीयः, उत्तमैस्तु तृतीय इति । अत्र गन्धहरार्थं कर्पूर-कस्तूरीभ्यां प्रक्षेपः कार्यः । पत्रकल्कत्वचपाके वाच्यम् । पत्रकल्कस्य तु मानमत्र तैलानुरूपतः, सुगन्धितैलान्तरोक्तमानानुसाराद्वा ज्ञेयम् ॥ ८८ ॥

समूलदलशाखाया इत्यादि ।—दलमूलाच्छतं शतमिति ।—बिल्वादीनां दशानां प्रत्येकं शतमित्यर्थः । वृद्धा अत्र क्वाथमध्ये रास्नादेवदार्वोरपि प्रत्येकं पञ्चाशत्पलानि प्रक्षिपन्ति, अत एव चक्रोऽपि "क्वाथे तुलार्द्धम्" इत्यादि पठति । तदस्तु यथोक्तमेव देयं, नत्वधिकम् ।

अभ्यङ्गात् त्वग्गतं हन्ति पानात् कोष्ठगतं तथा ॥
भोजनात् सूक्ष्मनाडीस्थान् नस्यादूर्द्ध्वगतं तथा ।
पक्वाशयगते वस्तिर्निरूहः सार्वकायिके ॥
एतद्धि वड़वाश्वानां किशोराणां यथाऽमृतम् ।
एतदेव मनुष्याणां कुञ्जराणां गवामपि ॥
अनेनैव च तैलेन शुष्यमाणा महाद्रुमाः ।
सिक्ताः पुनः प्ररोहन्ति भवन्ति फलशालिनः ॥
वृद्धोऽप्यनेन तैलेन पुनश्च तरुणायते ॥
न प्रसूते च या नारी साऽपि पीत्वा प्रसूयते ।
अप्रजाः पुरुषो यस्तु सोऽपि पीत्वा सुतं लभेत् ॥
अशीतिं वातजान् रोगान् श्लैष्मिकान् पित्तजानपि ।
सन्निपातसमुत्थांश्च नाशयेत् क्षिप्रमेव तु ॥
एतेनान्धककृष्णीनां कृतं पुंसवनं महत् ।
कृत्वा विष्णोर्बलिञ्चापि तैलमेतत् प्रयोजयेत् ॥
क्वाथे तुलार्द्धं रास्नायाः किलिमस्य च दीयते ।
भल्लातकासहत्वे तु तत्स्थाने रक्तचन्दनम् ॥
त्वक्पत्रपत्रमधुरी-कुष्ठचम्पकचोरिकाः ।
ग्रन्थिकौपी मरुवकमधिकत्वेन दीयते ॥
कर्पूरमदद्दानश्च शुक्लगन्धोदकक्रिया ।
द्रव्यशुद्धिः पाकविधिर्भाविप्रसारणीसमः ॥ १०० ॥

---

स्पर्शितद्रावुल्यं स्यादिति । अत्रापि कल्कभूयस्त्वात् पूर्ववत् प्रथमैः सुगन्धिद्रव्यैः प्रथमः पाकः, मध्यमैस्तु द्वितीयः, अधमैस्तु तृतीय इति । अत्रापि तृतीयः पाको गन्धोदकेन ; केचित्तु द्वितीयं पाकमपि गन्धोदकेनेच्छन्ति । अत्रोपदेशादनुक्तमप्यधिकं त्वक्पत्रादिकं गन्धद्रव्यं देयमित्याह, त्वक्पत्रेत्यादि ।—त्वक्पत्रं तेजपत्रम् ; पत्रम् बैक-

आद्य एभिर्द्रवैः पाकः कल्को भल्लातकं कणा ॥
नागरं मरिचश्चैव प्रत्येकं पट्पलोन्मितम् ।
भल्लातकासहत्वे तु रक्तचन्दनमिष्यते ॥
पथ्याक्षधात्रयः सरलं शताह्वा कर्कटो वचा ।
चोरपुष्पी शटी मुस्त-द्वयं पद्मञ्च सोत्पलम् ॥
पिप्पलीमूलमञ्जिष्ठा सारिवा गन्धा पुनर्नवा ।
दशमूलं समुदितं चक्रमर्दो रसाञ्जनम् ॥
गन्धतृणं हरिद्रा च जीवनीयगणस्तथा ।
एषां त्रिपलिकैर्भागैराद्यः पाको विधीयते ॥
देवपुष्पीशैलपत्रं गजक्षीरसशैलजे ।
प्रियङ्गुक्षीरमधुरी-मांसीदारुवल्लाचला ॥
श्रीवासो नलिका खोटिः सूक्ष्मैला कुन्दुरुर्मुरा ।
नखोत्पलश्च त्वक्पत्रो पमरा पूतिचम्पकम् ॥
मदनं रेणुका पृक्का मरुवश्च पलत्रयम् ।

---

नित. । एभिर्द्रवैरिति ।—क्वाथकाञ्जिकादिभिः सर्वैः । नागरं शुण्ठी । अत्र भल्ला-तकासहत्वे तु रक्तचन्दनं देयम् । अत एवाह—भल्लातकेत्यादि । पद्मं शिरी-षकम् । पद्मं पद्मपुष्पम् ; उत्पलं नीलोत्पलम् । दशमूलं समुदितमिति ।—तेन दश-मूलस्य मिलित्वा पलत्रयमित्यर्थः । चक्रमर्दं एडगजबीजम् । जीवनीयो गण इति ।—जीवनीयदशकम् । पथ्याक्षधात्र्य इति ।—अत्र त्रिफलायाः प्रत्येकमेव पलत्रयं ग्राह्यम् ; इह समुदितनिर्देशाभावात् । द्वितीयपाकमाह, देवपुष्पीत्यादि ।—देवपुष्पादीनां कल्कः । देवपुष्पी देवदाली ; शैलो शैलरसः । गजक्षीरसः गजक्षा रसः ; अन्ये तु—गजक्षीरसशब्देन कुन्दुरुमाहुः, यदुक्तं शब्दार्णवे—"कुन्दुरुस्तोयगन्धः स्यात् भीषणः गजक्षीरम्," इति ; तन्मते आमलकं कुन्दुरौ । वल्ला वालकम् ; चला शिलाः ; खोटिः काकखोटिः । नखोत्पलमिति ।—यद्यपि पत्र नख्यो भवन्ति, तदुक्तं—"नखी पत्रशिखी ह्रीक्रा समानार्था समर्थतः । क्वाथिवदरपत्राभा नखोत्पलदर्शापमा॥

प्रत्येकं गन्धतोयेन द्वितीयः पाक इष्यते ॥
गन्धोदकन्तु त्वक्पत्रौ पत्रकोशीरमुस्तकम् ।
प्रत्येकं सवलामूलं पलानि पञ्चविंशतिः ॥
कुडवार्द्धभागोऽथ जल-प्रस्थास्तु पञ्चविंशतिः ।
पर्दावशिष्टाः कर्त्तव्याः पाके गन्धाम्बुकर्मणि ॥
गन्धाम्बु-चन्दनाम्बुभ्यां तृतीयः पाक इष्यते ।
कल्कोऽत्र केशरं कुष्ठं त्वक् कालीयककुङ्कमम् ॥
भद्रश्रियं ग्रन्थिपर्णं लताकस्तूरिका तथा ।
लवङ्गागुरुकक्कोल-जातीकोषफलानि च ॥
एला लवङ्गकञ्चौ च प्रत्येकं त्रिपलोन्मितम् ।
कस्तूरी षट्पला चन्द्रात् पलं सार्द्धञ्च गृह्यते ॥
विधायैवं पुनश्चन्द्रमदौ देयौ तथोन्मितौ ।
महाप्रसारणी सेयं राजभोग्या प्रकीर्त्तिता ॥

---

काचिदश्वखुराकारा मज्जावर्णसमाऽपरा । वराहकर्णसदृशा पञ्चमी परिकीर्त्तिता ॥” इति । तथाप्यत्रास्तु यतद्दु मध्ये मल्लोवयं यातं, वराहकर्णिकायाः निषिद्धत्वात् । यथा—“करिकर्णं तुरगखुरं नख प्रगृह्णीत अश्वरोवेष । धूपेषु बदरीष्वपतं न वराहकर्णकुभयमपि ॥”. त्वक्पत्रौ तेजपत्रम्, पूतिः खट्टासी, चम्पक चम्पककलिका, प्रदिष्टं मध्यपत्रमित्यर्थः । गन्धोदके त्वक्पत्रौ तेजपत्रम्, पत्रन्तु सुगन्धिपत्रार्द्धं तेजपत्रसदृश कारियापत्रमिति ख्यातम् । बलामूलं वाट्यालकस्य ( वालकस्य वा ) मूलम् । कुडवार्द्धभाग इति ।—कुडवस्य सार्द्धद्वादशपलमित्यर्थः । गन्धाम्बु चन्दनाम्बुभ्यामिति ।—गन्धाम्बु गन्धोदकं, तदुक्तमेव, चन्दनाम्बु चन्दनमात्रेणार्द्धपतम् । चन्दं तु—सुपिष्टशोधितचन्दनानिर्भं वारिमात्रं वदन्ति ॥ जातीकोषफलानीति ।—जातीकोषो रस-. वास., तथा जातीफलञ्चेत्यर्थः । भद्रश्रियं श्वेतचन्दनम् । लवङ्गकञ्चौ लवङ्गवल्कलम् । चन्द्रः कर्पूरं, वैशार्द्धं पलकल्कार्थम् । अस्य तैलस्य पत्रिका लिख्यते,—हाथ-द्रितेल मः ९५ कार्थार्थं—अश्वगन्धाशलिशा पल २००, दौर्लभस्वौमूल पल २००, अश्वगन्धा पल १००, एरण्डमूल पल १००, वाट्यालमूल पल १००, शतमूल्याः

सिञ्चेदेवं पुनः पुष्पैर्विविधैरधिवासयेत् ॥ १०७ ॥

खट्टाशीशुद्धिः—

यथालाभमपामार्ग-सुह्यादिक्षारलेपितम् ।
वाष्पस्वेदेन संस्विद्य पूतिं निर्लोमतां नयेत् ॥
दोलापाके पचेत् पश्चात् पञ्चपल्लववारिणि ।
खलः साधुमिवोत्पीड्य ततो निःस्नेहतां नयेत् ॥
भाजशोभाञ्जनजलैर्भावयेच्च पुनः पुनः ।
शिग्रुमूले च केतक्याः पुष्पपत्रपुटे च तम् ।
पचेदेवं विशुद्धः सन् मृगनाभिसमो भवेत् ॥ १०८ ॥
तुरुष्कं मधुना भाव्यं काश्मीरञ्चापि सर्पिषा ।
रुधिरेणायसं मात्स्यैर्मूत्रैर्ग्रन्थिपर्णकम् ॥
मधूदकेन मधुरीं पत्रकं तण्डुलाम्बुना ॥ १०९ ॥
ईषत्क्षारानुगन्धा तु दग्धा याति न भस्मताम् ।
पीता केतकगन्धाढ्या लघुस्निग्धा मृगोत्तमा ॥ ११० ॥
पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम् ।
तत्रापि स्याद्यदच्छुद्रं स्फटिकाभं तदुत्तमम् ।
पत्राढ्यं सदलं स्निग्धं हरितद्युति चोत्तमम् ॥ १११ ॥

---

शैलजशुद्धिमाह, काञ्जिक इत्यादि।—शैलमिति।—शैलजं काञ्जिके विपाच्य पञ्चपल्लवतोयेन क्षालनमित्युपदेशः ॥ १०७ ॥

खट्टाशीशुद्धिमाह, यथालाभमित्यादि।—दोलापाकमिति।—खट्टाशीपुटकं स्वेदेन पूतिर्मीं यदा पञ्चपल्लवक्काथमध्ये दोलावलम्बमानं पचेत्, ततः आकृष्य निष्पीड्य निःस्नेहतां स्नेहहीनतां नयेत्, तदनु शोभाञ्जनादिक्वाथे बहुधा भावयेत्; तदनु पिष्टशोभाञ्जनमूलतले पिण्डं सन्निधाय तदनु केतकीपुष्पपत्रैर्वेष्टयित्वा कुशेन बद्धा पचेत्पाकं लिप्य पुटपाकेन पचेत्, तदनु जात्यादिकुसुमैरधिवासयेदित्युपदेशः ॥ १०८ ॥

सिह्लकादिशुद्धिमाह, तुरुष्कमित्यादि।—तुरुष्कं सिह्लकम्। रुधिरेणेति।—कृष्णेन, आयसमित्यगुरु, भाव्यमिति सर्वत्र योज्यम्। इदानीं अत्रद्रव्याणां प्रशस्तानां लक्षणमाह,

भङ्गे मनागपि न चेन्निपतन्ति ततः कणाः ।
मृगशृङ्गोपमं कुष्ठं चन्दनं रक्तपीतकम् ॥ ११२ ॥ ११३ ॥
काकतुण्डाकृतिः स्निग्धो गुरुश्चैवोत्तमोऽगुरु ॥ ११४ ॥
स्निग्धाल्पकेशरन्त्वस्तं शालिजो वृत्तमांसलः ॥ ११५ ॥
मुरा पीता वरा प्रोक्ता मांसी पिङ्गजटाकृतिः ॥ ११६ ॥
रेणुका मुद्गसंस्थाना शस्तमानूपजं घनम् ॥ ११७ ॥
जातीफलं सगन्धञ्च स्निग्धं गुरु च शस्यते ॥ ११८ ॥
एला सूक्ष्मफला श्रेष्ठा प्रियङ्गुः श्यामपाण्डुरा ॥ ११९ ॥
नखमश्वखुरं हस्तिकर्णञ्चैव प्रशस्यते ॥ १२० ॥
एतेषामपरेषाञ्च नवता प्रवरो गुणः ॥ १२१ ॥

महासुगन्धि-लाक्षादितैलम्—

जिङ्गीचोरकदेवदारुसरलव्याघ्रीवचाचेलक-
त्वक्पत्रैः सहगन्धपत्रकशटीपथ्याघधात्रीघनैः ।
एतैः शोधितसंस्कृतैः पलयुगैत्याख्यातया संख्यया
तैलप्रस्थमवस्थितैः स्थिरमतिः कल्कैः पचेन्नाग्निकैः ॥
मांसीमुरामदनचम्पकसुन्दरीत्वग्-
ग्रन्थ्यम्बुदाम्बुवर्कैर्हिपलैः सपृक्कैः ।
श्रीवासकुन्दुरुनखीनलिकामिषीणाम्
प्रत्येकतः पलमुपार्ज्य पुनः पचेत्तु ॥

---

ईषदित्यादि ।—ईषत्चारगन्धिमानुद्धतगन्धा ; मगोपमा मृगमदः । रक्तपीतकमिति ।—किञ्चिद्रक्तपीतसारम् । घसमिति ।—कुङ्कुमम् । शालिजः सहाग्रो ॥ १०८—१११ ॥

जिङ्गीत्यादि ।—जिङ्गी मञ्जिष्ठा ; व्याघ्री—विहनीति ख्यातं सुगन्धि द्रव्यं, नखी इत्यन्ये । चेलकत्वक् गुवाकहचस्य त्वक् ; पत्र तेजपत्रम् ; गन्धपत्रं पाटियापत्रम् । पलयुगल् प्रत्येकम् ; नाग्निकैरिति ।—नवाग्निभिरित्यर्थः । एतैः कल्कैः प्रथम, पाकः । द्वितीयपाकार्थं कल्कमाह, मांसीत्यादि ।—सुन्दरी प्रियङ्गुः ; त्वक् गुडत्वक् ; ग्रन्थि-पर्णम् ; अम्बु बालकम् ; वक् कुष्ठम् ; नलिका भानुका ; मिषिः मधुरी,

एलालवङ्गनलचन्दनजातिपूति-
कक्कोलकागुरुलताघुसृणैः पलार्द्धैः।
कस्तूरिकाचसहितामलदीप्तियुक्तैः
पक्वा तु मन्दशिखिनैव महासुगन्धम्॥
पञ्चद्विकेन चार्द्धेन मदात् कर्पूरमिष्यते।
कर्पूरमदयोरर्द्धं पत्रकल्कादिहेष्यते॥
पक्वपूतेऽप्यरथा एव सम्यक् पेषणवर्जितम्।
दीयते गन्धवृद्ध्यर्थं पत्रकल्कं तदुच्यते॥
प्रागुक्तौ शुद्धिसंस्कारौ गन्धानामिह तैः पुनः।
द्विगुणैर्लक्षोविलासः स्यादयं तैलसत्तमः॥
पञ्चपत्राम्बुना चाद्यो द्वितीयो गन्धवारिणा।
तृतीयोऽपि च तेनैव पाको वा धूपिताम्बुना॥
तैलयुग्ममिदं तूर्णं विकारान् वातसम्भवान्।
क्षपयेज्जनयेत् पुष्टिं कान्तिं मेधां धृतिं धियम्॥ १२२॥
इति वातव्याधि-चिकित्सा॥

---

गुयमीहरी (मौरी) इति लोके। एतैः कल्कैः द्वितीयः पाकः। तृतीयपाकार्थं कल्कमाह, एलेत्यादि।—नल सिह्लकः, चन्दनं श्वेतचन्दनम्, जाति जातिफलम्, पूति खट्टाशी, लता लताकस्तूरी, घुसृणं कुङ्कुमम्, चकारेहिता कर्पूरविमिश्रं, अमलदीप्तं चन्द्रः, तत्प्रमितात् कर्पूरमित्यर्थः। एभिस्तृतीयः पाकः। कर्पूरं कियत्प्रमाणं ग्राह्यमित्यत आह -पञ्चेत्यादि।—मदात् निर्दिष्टकस्तूरिकाकर्षात्, पञ्चधाविभक्तात् तत्रैको भागो रक्तिकाद्वयाधिकमाषकरो भवति, तत्र मानेन कर्पूरस्य द्वौ भागौ ग्राह्यावित्यर्थः। अतः कर्पूरस्य रक्तिकाचतुष्टयाधिकमाषद्वयकमिति पिण्डार्थः। पत्रान्तरमाह, चार्द्धेन चेति।—कस्तूरीकर्षापेक्षया चार्द्धेन, तेन कर्पूरस्याष्टौ माषकाः इत्यर्थः। ननु पत्रकल्कं कियत्प्रमाणं कर्पूरमदौ देयावित्यत आह कर्पूरमदयोरित्यादि।—इह तैलकल्के पत्रकल्कात् पत्रकल्कमानमपेक्षर कर्पूरमदयोरर्द्धमिह तैले कल्केन इष्यते, तेन तैलकल्कत्वयतया यावत्प्रमदे

## अथ वातरक्त-चिकित्सा ।

बाह्यं लेपाभ्यङ्गसेकोपनाहैर्वातशोणितम् ।
विरेकास्थापनस्नेह-पानैर्गम्भीरमाचरेत् ॥
द्वयोर्मुञ्चेदसृक् शृङ्ग-सूच्यलाबु जलौकसा ।
देशाद्देशं व्रजेत् स्राव्यं शिराभिः प्रच्छनेन वा ।
अङ्गग्लानौ च न स्राव्यं रुक्षे वातोत्तरे च यत् ॥ १ ॥
अमृतानागरधन्याक-कर्षत्रयेण पाचनं सिद्धम् ।
जयति सरक्तं वातं सामं कुष्ठान्यशेषाणि ॥ २ ॥

---

कर्पूरमदाढ्यौ पञ्चकल्के तु तदपेक्षया त्रिगुणौ कर्पूरमदौ देयाविति पञ्चकल्कमानमपि भङ्ग्या कथितं भवति, तेन पञ्चकल्के कस्तूर्याः कर्षद्वयं, कर्पूरस्य तु अष्टरक्तिकाधिका द्वादश माषकाः त्रिंशा कर्ष इति। पञ्चकल्कशब्दस्यार्थमाह, फलपूर इत्यादि।—पूर्वोक्तौ गन्धाम्बु शुचिसंस्कारावपि कार्यौ, तथा तैः पूर्वोक्तगन्धाम्बुगन्धितैलसाधनद्रव्यैः शिलादिभिर्यदि गुणैर्यदि तैलमिदम् साध्यते, तदा तदनेन तैलं लक्ष्मीविलाससंज्ञकञ्च भवतीत्याह—प्रागुक्तमित्यादि। पाकार्थमुभयोरपि तैलयोः क्रमात् द्रवद्रव्यमाह, पञ्चपल्लवमित्यादि।—आम्रपत्र, जम्बूपत्रं, कपित्थपत्रं, बिल्वपत्रं, बीजपूरकपत्रम्, एतत्सर्वमष्टगुणजले पक्त्वा चार्द्धावशेषं कुर्यात्। गन्धवारिणा—गन्धोदकेन, तच्चोक्तमेव। धूपितान्मुनेति।—अगुर्वादिधूपितमल्लैनेत्यर्थः ॥ १२२ ॥

इति वातव्याधि-चिकित्सा-विवृतिः।

---

वातव्याधि विशेषत्वाद्वातरक्त-चिकित्सामाह,—बाह्यमित्यादि। बाह्यमिति।—उत्तानं, त्वङ्मांसाश्रयमित्यर्थः। गम्भीरन्तु मेदःप्रभृतिधात्वाश्रयम्, यथा चोक्तं,—"त्वङ्मांसाश्रय-मुत्तानं गम्भीरन्त्वन्तराश्रयम्" इति। द्वयोरिति।—उत्तानगम्भीरयोः। देशाद्देशं व्रजेदिति।—स्थानान्तरप्रसरणशीलम्। अङ्गग्लानाविति—कार्श्ये ॥ १ ॥

अमृतेत्यादि।—प्रत्येकमेकं कर्षं गृहीत्वा कर्षत्रयमित्यर्थः ॥ २ ॥

वत्सादन्युद्भवः क्वाथः पीतो गुग्गुलुसंयुतः ।
समीरणसमायुक्तं शोणितं सम्प्रसाधयेत् ॥ ३ ॥

वासागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिबेत् कषायम् ।
क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम् ॥४॥

लीढ्वा मुण्डितिकाचूर्णं मधुसर्पिःसमायुतम् ।
छिन्नाक्वाथं पिबन् हन्ति वातरक्तं सुदुस्तरम् ॥ ५ ॥

तिस्रोऽथवा पञ्च गुडेन पथ्या
जग्ध्वा पिबेच्छिन्नरुहाकषायम् ।
तद्वातरक्तं शमयत्युदीर्ण-
माजानुसंभिन्नमपि द्रवस्रम् ॥ ६ ॥

घृतेन वातं सगुडा विबन्धम्
पित्तं सिताढ्या मधुना कफञ्च ।
वातासृगुग्रं रुबुतैलमिश्रा
शुण्ठ्यामवातं शमयेद् गुडूची ॥ ७ ॥

गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव वा ।
प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥ ८ ॥

---

वत्सादनीत्यादी।—पीतो गुग्गुलुसंयुत इति।—शोधनार्थं प्रायेण गुग्गुलोः कर्षं, कर्षार्द्धं वा; संशमनार्थन्तु माषकचतुष्टयमिति, एवं सर्वत्र ॥ ३ ॥

वासेत्यादी।—चतुरङ्गुलोऽत्र शोणालुकम्। अत्र तन्त्रान्तरसंवादादेकैकाध्यापेयथा त्रिगुणमेरण्डतैलं प्रक्षेप्यमित्याहुः ॥ ४ ॥

लीढ्वेत्यादी।—मुण्डितिका मुण्डिरीति ख्याता ॥ ५ ॥

तिस्रोऽथवेति।—पुरुषमपेक्ष्य चाग्निबलमानात् तिस्रः पञ्च वा पथ्याः पिष्टा समगुडेन खादेत्; तदनु गुडूच्याः कषायमनुपेयम् ॥ ६ ॥

घृतेनेत्यादि।—षड् योगाः ॥ ७ ॥

गुडूच्याः स्वरसेन क्वाथेन चूर्णेन वा ॥ ८ ॥

दशमूलीशृतं क्षीरं सद्यःशूलनिवारणम् ।
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥ ९ ॥
पटोलकटुकाभीरु-त्रिफलाऽमृतसाधितम् ।
क्वाथं पीत्वा जयेज्जन्तुः सदाहं वातशोणितम् ॥ १० ॥
गोधूमचूर्णाजपयो-घृतञ्च सच्छागदुग्धो रुबुबीजकल्कः ।
लेपे विधेयं शतधौतसर्पिः सेके पयश्चाविकमेव शस्तम् ॥ ११ ॥
लेपः पिष्टास्तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥ १२ ॥
कटुकामृतयष्ट्याह्व-शुण्ठीकल्कं समाक्षिकम् ।
गोमूत्रपीतं जयति सकफं वातशोणितम् ॥ १३ ॥
धात्रीहरिद्रामुस्तानां कषायं वा कफाधिके ॥ १४ ॥
कोकिलाक्षामृताक्वाथे पिबेत् कृष्णां कफाधिके ।
पथ्यभोजी त्रिसप्ताहान्मुच्यते वातशोणितात् ॥

---

दशमूलीत्यादौ।—दशमूलीशृतं क्षीरं परिषेक इति योज्यं, न तु पेयम्। शूल—वातरक्तप्रदेशे व्यथा। तद्वदिति—परिषेकः ॥ ९ ॥

पटोलेत्यादौ।—कटुका कटुरोहिणी; अभीरुः शतावरी; अमृता गुडूची। छान्दसत्वात् ह्रस्वः; अयं योगः पित्तोत्तरे ॥ १० ॥

गोधूमेत्यादौ।—गोधूमचूर्णं छागदुग्धघृताभ्यां सम्भाव्य कोष्णं कृत्वा वातोत्तरे लेपः, शीतं रक्तोत्तरे। वृन्दे तु—अस्मिन् योगे घृतं न पठ्यते, तेन घृतं विनाप्ययं योगः। सघृतः पुनरयं चरके पठ्यते, यथा—"वाते सरक्ते सघृतः प्रदेहो गोधूमचूर्णं छगलीपयश्च" इति। उभयमपि प्रमाणं मुनिदेशवत् ॥ ११ ॥

लेप इत्यादौ।—तिलान् दुग्धेन पिष्ट्वा ततो भृष्ट्वा पुनर्दुग्धे निर्वापयेदित्यर्थं, वृद्धवाग्भटसंवादात्; किन्तु खोलकमृष्टतिलान् दुग्धे निर्वापितान् तेनैव दुग्धेन पिष्ट्वा लेप इति व्यवहरन्ति वृद्धाः। तद्वदिति।—अनेन पूर्वोक्तयोगफलमतिदिश्यते ॥ १२ ॥

कटुकेत्यादौ।—कटुका कटुरोहिणी। एषां चतुर्णां प्रत्येकं द्विमाषकं कल्कीकृत्य चतुर्माषकेण मधुना गोमूत्रपलार्द्धेन च पेयम् ॥ १३ ॥ १४ ॥

कफरक्तप्रशमनं कच्छूवीसर्पनाशनम्।
वातरक्तप्रशमनं हृद्यं गुड़घृतं स्मृतम्॥ १५॥
संसर्गेषु यथोद्रेकं मिश्रं वा प्रतिकारयेत्॥ १६॥
सर्वेषु सगुड़ां पथ्यां गुडूचीक्वाथमेव वा।
पिप्पलीवर्द्धमानं वा शीलयेत् सुसमाहितः॥ १७॥

गुडूचीतैलम्—

गुडूचीक्वाथकल्काभ्यां पचेत् तैलं तिलस्य च।
पयसा च समं पक्का भिषङ्मन्देन वह्निना॥
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम्।
त्वग्दोषं व्रणवीसर्पं कण्डूदद्रुविनाशनम्॥ १८॥

नवकार्षिकः—

त्रिफलानिम्बमञ्जिष्ठा वचा कटुकरोहिणी।
वत्सादनी दारुनिशा कषायो नवकार्षिकः॥
वातरक्तं तथा कुष्ठं पामानं रक्तमण्डलम्।
कुष्ठं कापालिकाकुष्ठं पामादेवापकर्षति॥
पञ्चरक्तिकमाषेण कार्य्योऽयं नवकार्षिकः।
किन्त्वेवं साधिते क्वाथे योग्या मात्राऽत्र दीयते॥ १९॥

---

कोकिलाक्षेत्यादौ।—कोकिलाक्षमूलं ग्राह्यम्। हृद्यं गुड़घृतमिति।—घातार्थं विहाय गुड़घृतेनैव समभागेन कौकिल्यं चूर्णं भक्षयेदित्याहुः। केचित्तु हृद्फलमेतत्॥ १५॥

संसर्गेष्विति।—संसर्गजेषु द्वन्द्वजेषु यथोद्रेकमिति।—एकदोषोल्बणे। मिश्रमिति।—समकुपिते॥ १६—१८॥

नवकार्षिके।—दारुनिशा दारुहरिद्रा। पञ्चरक्तिकमाषेण मानेन त्रिफलादीनां नव कर्षान् गृहीत्वा चतुर्गुणजलेन क्वाथः, किंवा व्यवहारविधिनैव नवकर्षैः क्वाथः कार्य्यः, परन्तु अत्र योग्यमात्रापेक्षया अधिकं पड़ति तत् त्याज्यम्। एतदेवाह,—

गुडूचीघृतम्—

गुडूचीक्वाथकल्काभ्यां सपयस्कं शृतं घृतम् ।
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ॥ २० ॥

शतावरीघृतम्—

शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे ।
क्षीरतुल्यं घृतं पक्वं वातशोणितनाशनम् ॥ २१ ॥

अमृताद्यं घृतम्—

अमृता मधुकं द्राक्षा त्रिफला नागरं बला ।
वासाऽऽरग्वधवृश्चीर-देवदारुत्रिकण्टकम् ॥
कटुका सवरी कृष्णा काश्मर्यस्य फलानि च ।
रास्नाक्षुरकगन्धर्व-वृद्धदारघनोत्पलैः ॥
कल्कैरेभिः समैः कृत्वा सर्पिःप्रस्थं विपाचयेत् ।
धात्रीरसं समं दत्त्वा वारित्रिगुणसंयुतम् ॥
सम्यक्सिद्धन्तु विज्ञाय भोज्ये पाने च शस्यते ।
बहुदोषान्वितं वातं रक्तेन सह मूर्च्छितम् ॥
उत्तानञ्चापि गम्भीरं त्रिकजङ्घोरुजानुजम् ।
क्रोष्टुशीर्षे महाशूले चामवाते सुदारुणे ॥
वातरोगोपसृष्टस्य वेदनाश्चातिदुस्तराम् ।
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमज्वरम् ॥
एतान् सर्वान् निहन्त्याशु वातपित्तकफोद्भवान् ॥
सर्वकालोपयोगेन वर्णायुर्बलवर्द्धनम् ।

---

पञ्चतिक्तमाक्षिकेत्यादि ।—भक्ष्यभोजनदानार्थं, इन्देन कर्षादौ तु फलं यावदित्यादि-परिभाषा निश्चितैव ॥ १९ ॥

गुडूचीघृते ।—क्वाथश्चतुर्गुणः, क्षीरन्तु घृतसममिति व्यवहरन्ति ॥ २० ॥

एव शतावरीघृतम् ॥ २१ ॥

अश्विभ्यां निर्म्मितं ह्येतं घृतमेतदनुत्तमम् ॥ २२ ॥

दशपाकबलातैलम्—

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम् ।
दशपाकं भवेदेतद्वातासृग्वातपित्तजित् ॥
धन्यं पुंसवनञ्चैव नराणां शुक्रवर्द्धनम् ।
रेतोयोनिविकारघ्नमेतद्वातविकारनुत् ॥ २३ ॥

गुडूच्यादितैलम्—

गुडूचीक्वाथदुग्धाभ्यां तैलं द्राक्षारसेन वा ।
सिद्धं मधुककाश्मर्य्य-रसैर्वा वातरक्तनुत् ॥ २४ ॥

---

अश्विभ्यामिति।—वरी शतावरी, तथा च वर्त्तमानेति शवरी। सम्भवः शतधा, तत्रत्य नौकोत्पन्नम् ॥ २२ ॥

दशपाकबलातैलमिति।—बलाकाथः चतुर्गुणः, चतुर्गुणक्षीरकाढयर्थात्। तैलमिदं यथोक्तमानेन द्रवेण कल्केन च दश वारान् पक्वं वीर्य्योत्कर्षार्थम्। अनेन पाकेन बहुधाऽप्यत्र नास्ति, ... तत्र बहुपाकोऽपि हि प्रकृतिसमसमवेतव्याध्यभिप्रायेण ज्ञेयः, तेनात्रापि प्रकृतिसमसमवेते व्याधौ तैलादिगुणकोऽपि बहुधापाको वीर्य्योत्कर्षार्थं युज्यत एव। विकृतिविषमसमवेते तु यथोद्दिष्टमेव कार्य्यं, तद्योगस्याऽचिन्त्यत्वात्। तथाहि विकृतिविषमसमवेते व्याधिमहित्वा व्याधिहरमेव भेषजं दीयत इति कृत्वा यथोद्दिष्टमेव कार्य्यम्, प्रकृतिसमसमवेते तु दोषघातादेव व्याधिघात इति दोषहरमेव भेषजं दीयते इति दोषप्रत्यनीकतया बहुत्वमपि क्रियत एव। न च दोषहरमेव व्याधिहरमिति वाच्यम्, आमवातादिष्वपि खदिरेण वातिककुष्ठानुपशमप्रसङ्गात्, खदिरं हि वातजनकमपि प्रभावात् ... कुष्ठमुपशमयति, न तु वातम्। किञ्च, यदि दोषहरमेव व्याधिहरमिति स्वीक्रियते, तदा प्रतिव्याधौ बहुप्रयोगकथनमपि मुनीनां व्यर्थं स्यात्। तस्माद्दोषप्रत्यनीकभेषजग्रहणेनैवान्यथासिद्धेः। तस्माद्व्याधिहरे संयोगप्रधानत्वात् यथोक्तविध्यनुसरणमेव शरणम्। दोषहरे तु वीर्य्योत्कर्षार्थमुक्तोऽनुक्तो वा बहुधा पाकोऽपि दोषप्रत्यनीकतया युक्त एवेत्याहुः। किञ्च, बहुविधव्याध्यसाध्यत्वात् वैद्यैर्धायमनुगम्यते पन्था। इति ॥ २३ ॥

गुडूच्यादौ।—तैलसमकल्कम् ॥ २४ ॥

खुड्डाकपद्मकतैलम्—

पद्मकोशीरयष्ट्याह्व-रजनीक्वाथसाधितम्।
स्यात् पिष्टैः सर्जमञ्जिष्ठा-वीराकाकोलिचन्दनैः।
खुड्डाकपद्मकमिदं तैलं वातास्रदोषनुत् ॥ २५ ॥

नागबलातैलम्—

शुद्धां पचेन्नागबलातुलान्तु विस्राव्य तैलाढकमत्र दद्यात्।
अजापयस्तुल्यविमिश्रितन्तु नतस्य यष्टीमधुकस्य कल्कम् ॥
पृथक् पचेत् पञ्चपलं विपक्वं तदातरक्तं प्रसमत्यदीर्णम्।
वस्तिप्रदानादिह सप्तरात्रात् पीतं दशाहात् प्रकरोत्यरोगम् ॥
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता ॥ २६ ॥

पिण्डतैलम्—

समधूच्छिष्टमञ्जिष्ठं ससर्जरससारिवम्।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ २७ ॥

महापिण्डतैलम्—

सारिवासर्जमञ्जिष्ठा-यष्टिसिक्थैः पयोऽन्वितैः।

---

खुड्डाकपद्मकतैले।—वीरा—क्षीरकाकोली। खुड्डाकपद्मकं—वैद्यपद्म ॥ २५ ॥

नागबलातैले।—नागबला गोरक्षतण्डुलेति ख्याता। अजापयस्तैलतुल्यम्। नतं—तगरपादिका ॥ २६ ॥

समधूच्छिष्टेत्यादौ।—मधूच्छिष्टं मधुसिक्थकम्; सर्जरसो धूनकः; सारिवा अनन्तमूलम्। अम्भश्चात्र चतुर्गुणम्। पिण्डतैलमाख्यया चात्र वस्त्रादिपूतमेवैतत् तैलं प्रसंचक्षिताह्वः। वैद्यास्तु पूर्वोक्तं व्यवहरन्ति; किन्तु चरके समधूच्छिष्टेत्यादेः पूर्वम्,—"आरनालाढके तैलं पादसर्जरसं शृतम्। प्रभूते खजितं तोये ज्वरदाहार्त्तिनुत् परम् ॥" इत्युक्तम्, तेन आरनालाढके साध्यं तैलमेव सर्जरसस्थाने मधूच्छिष्टादीनां प्रक्षेपादपि पिण्डतैलमुच्यते इति चक्रः। जतूकर्णेऽप्युक्तं—"कार्षिकसर्जरसघृतं प्रजित सहना अजैन दाहहिनम्। सिक्थानन्ताभिक्थकसर्जरसैर्युक्तं मथितं वा ॥" इति ॥ २७ ॥

तैलं पक्वं विमञ्जिष्ठे कषायो वा वातरक्तनुत् ॥ २८ ॥

कैशोरको गुग्गुलुः—

वरमहिषलोचनोदर-सन्निभवर्णस्य गुग्गुलोः प्रस्थम्।
प्रक्षिप्य तोयराशौ त्रिफलाञ्च यथोक्तपरिमाणाम् ॥
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन।
विपचेत् तदप्रमत्तो दर्व्या सङ्घट्टयन् मुहुर्यावत् ॥
अर्द्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात्।
अवतार्य्य वस्त्रपूतं पुनरपि सम्पाचयेत् पात्रे ॥
सान्द्रीभूते तस्मिन्नवतार्य्य हिमोपलप्रख्ये।

---

अथ पिण्डतैलद्वयमाह, शारिवेत्यादि।—यष्टिर्यष्टिमधुकम्, पयस्तुल्यम्, इह द्रवान्तराभावात्। विमञ्जिष्ठेत्यादि तु द्वितीयं पिण्डतैलम्। विमञ्जिष्ठे,—मञ्जिष्ठारहिते, शारिवादिभिः कल्के कषायेऽस्य तैलं चतुर्गुणेन पयसा सह पक्वं सत् अपरं पिण्डतैलं भवतीत्यर्थः। विमञ्जिष्ठमिति पाठे—क्रियाविशेषणम् ॥ २८ ॥

कैशोरगुग्गुलौ।—वरमहिषलोचनोदरसन्निभवर्णस्येति।—लोहितवर्णस्येत्यर्थः, न तु कृष्णस्य, यतो महिषलोचनोदरवर्णो हि लोहित एव भवतीति। त्रिफलाञ्च यथोक्तपरिमाणामिति।—प्रत्येकं प्रस्थमानाम्। छिन्नरुहा गुडूची, तस्याः द्वात्रिंशत् पलानि। एवं मिलित्वा अष्टशतिपलानि क्वाथ्यानि। अत्र हि द्रवद्वैगुण्यात् षट्सप्ततिशतं जलं दीयमानं षट्शतिशरावपरिमितं भवति। षट्शतिशरावैश्च महाढका भवन्ति। एतत् सर्वमभिप्राय वदन्ति—"प्रत्येकं त्रिफलाप्रस्थ" इत्यादि। अन्ये त्वाहुः,—त्रिफलाञ्च यथोक्तपरिमाणामिति,—मिलित्वा प्रस्थमानां, समुदायप्रधानत्वान्निर्देशस्य। तेन गुग्गुलुप्रभृतीनि द्रव्याणि मिलित्वा चतुःषष्टिपलानि भवन्ति; तत्र चोक्तवत् चतुर्गुणे अष्टपञ्चाशदधिकशतद्वय-पलं, चतुःषष्टिशरावैश्च द्रोणो भवति, तेन तोयराशिशब्देनात्र द्रोण एव बोध्य इति। अत्र गुग्गुलु पुटके बद्ध्वा अपरैः क्वाथ्यैः सह तोयराशौ क्वथनीयः। पश्चात् गुग्गुलु विहाय क्वाथ्यं त्यक्त्वा सिद्धे तत्क्वाथे पुनस्तं गुग्गुलुं क्षिप्त्वा पचनीयं यावत् घनीभवति, दर्व्यालेपेऽवतार्य्य त्रिफलादिचूर्णं प्रक्षिपेदिति, यत्तु गुग्गुलुं विहाय क्वाथं कृत्वा पश्चात् सिद्धे तत्क्वाथे गुग्गुलुं गोलयन्ति, तन्न युक्तं, गुग्गुलोः क्वाथ्यत्वेनोक्तत्वात्। एवं अमृताद्यमृताख्यगुग्गुलावपि द्रष्टव्यम्। हिमोपलप्रख्ये इति।—हिमशिलावत् शीते। अत्र चैत्रमित्रसतात्तुल्यः वचनात्तुल्यौ। अन्यत्र तु कोष्णे एव चूर्णानां दान इष्यते।

त्रिफलाचूर्णार्द्धपलं त्रिकटोश्चूर्णं षड़क्षपरिमाणम्॥
क्रिमिरिपुचूर्णार्द्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः।
पलमेकञ्च गुडूच्या दत्त्वा संमूर्च्छ्य यत्नेन॥
उपयुज्य चानुपानं यूषं तोयं सुगन्धि सलिलेन।
इच्छाहारविहारी भेषजमुपयुज्य सर्वकालमिदम्॥
तनुरोधि वातशोणितमेकजमथ द्वन्द्वजं चिरोत्थञ्च।
जयति स्रुतं परिशुष्कं स्फुटितञ्चाजानुजञ्चापि॥
व्रणकासकुष्ठगुल्मं श्वयथूदरपाण्डुमेहांश्च।
मन्दाग्निञ्च विबन्धं प्रमेहपीड़काश्च नाशयत्याशु॥
सततं निषेव्यमाणः कालवशाद्धन्ति सर्वगदान्।
अभिभूय जरादोषं याति हि कैशोरकं रूपम्॥
प्रत्येकं त्रिफलाप्रस्थो जलं तत्र षड़ाढ़कम्।
गुड़वद्गुग्गुलोः पाकः सबन्धस्तु विशेषतः॥ २८॥

अमृतागुग्गुलुः—

प्रस्थमेकं गुड़ूच्यास्तु अर्द्धप्रस्थञ्च गुग्गुलोः।
प्रत्येकं त्रिफलायाश्च तत्प्रमाणं विनिर्दिशेत्॥
सर्वमेकत्र संक्षुद्य क्वाथयेत् त्वर्म्मणेऽम्भसि।
पादशेषं परिस्राव्य पुनरग्नावधिश्रयेत्॥
तावत् पचेत् कषायं तं यावत् सान्द्रत्वमागतम्।

---

अत्र त्रिफलाचूर्णार्द्धपलं मिलित्वैव दृश्यते, मानप्रधानत्वात् निर्देशस्य; प्रत्येकन्तु व्यवहरन्ति। त्रिकटोश्चूर्णं षड़क्षपरिमाणमिति।—मिलित्वा। क्रिमिरिपुर्विड़ङ्गः। यूषं तोयमित्यादौ।—यूषवद्धो बोध्यः। कैशोरकं रूपमिति।—किशोरो यौवनोन्मुखोऽल्पवयस्कः॥ २८॥

अमृताख्यगुग्गुलौ।—तत्प्रमाणमिति।—प्रस्थार्द्धम्। द्रोणसार्द्धपलमिति।—प्रत्येकम्;

दन्तीव्योषविड़ङ्गानि गुड़ूचीत्रिफलात्वचः ॥
ततश्चार्द्धपलं पूतं गृह्णीयाच्च प्रति प्रति।
कर्षन्तु त्रिवृतायास्तु सर्वमेकत्र कारयेत् ॥
तस्मिन् सुसिद्धे विज्ञाय कवोष्णे प्रक्षिपेद् बुधः।
ततश्चाग्निबलं ज्ञात्वा तस्य मात्रां प्रदापयेत् ॥
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम्।
दुष्टव्रणप्रमेहांश्च आमवातं भगन्दरम्।
नाड्याढ्यवातश्वयथून् सर्वानेतान् व्यपोहति ॥
अश्विभ्यां निर्म्मितः पूर्वममृताद्यो हि गुग्गुलुः।
अर्द्धप्रस्थं त्रिफलायाः प्रत्येकमिह गृह्यते ॥ ३० ॥

पुनर्नवागुग्गुलुः—

अमृतायाश्च द्विप्रस्थं प्रस्थमेकञ्च गुग्गुलोः।
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥
सर्वमेतच्च संक्षुद्य क्वाथयेन्नल्वणेऽम्भसि।
पुनः पचेत् पादशेषं यावत् सान्द्रत्वमागतम् ॥
दन्तीचित्रकमूलानां कणाविश्वफलत्रिकम्।
गुड़ूचीत्वग्विड़ङ्गानां प्रत्येकार्द्धपलोन्मितम् ॥
त्रिवृताकर्षमेकन्तु सर्वमेकत्र चूर्णयेत्।
सिद्धे चोष्णे क्षिपेत् तत्र अमृतागुग्गुलोः परम् ॥
यथाग्निबलं खादेदम्लपित्ती विशेषतः।
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥

---

त्रिफलात्वच इति।—निस्त्रित्रिफलायाः प्रत्येकमर्द्धपलम्। तत्प्रमाणमिति पदव्याख्यामाह—“अर्द्धप्रस्थे त्रिफलायाः” इत्यादि ॥ ३० ॥

पुनर्नवागुग्गुलौ।—त्वक् गुडत्वक्। अमृतागुग्गुलोः परमिति।—अनन्तरं, भाव्यमिति शेषः, तेन परमित्यनन्तरममृतागुग्गुलोर्मात्रा यथाग्निबलं खादेदित्यर्थः।

दुष्टव्रणप्रमेहांश्च सामवातं भगन्दरम्।
नाड्याढ्यवातं श्वयथून् हन्यात् सर्वामयानयम्॥
अश्विभ्यां निर्मितो ह्येषोऽमृताख्यो गुग्गुलुः पुरा॥ २१॥

योगसारामृतः—

शतावरी नागबला वृद्धदारकमुच्चटा।
पुनर्नवामृता कृष्णा वाजिगन्धा त्रिकण्टकम्॥
पृथग्दशपलान्येषां श्लक्ष्णचूर्णानि कारयेत्।
तदर्द्धशर्करायुक्तं चूर्णं संमर्द्दयेद् बुधः॥
स्थापयेत् सुदृढे भाण्डे मध्वर्द्धाढकसंयुतम्।
घृतप्रस्थे समालोड्य त्रिसुगन्धिपलेन तु॥
तं खादेदिष्टचेष्टात्मा यथाग्निबलं नरः।
वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसम्भवम्॥
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान्।
कृत्वा करोति पुरुषं वलीपलितवर्जितम्॥
योगसारामृतो नाम लक्ष्मीकान्तिविवर्द्धनः॥ ३२॥
दिवास्वप्नाग्निसन्तापं व्यायामं मैथुनं तथा।
कटूष्णगुर्वभिष्यन्दि-लवणाम्लानि वर्जयेत्॥ ३३॥

बृहद्गुडूचीतैलम्—

तुलां पचेज्जलद्रोणे गुडूच्याः पादशेषितम्।
क्षीरद्रोणञ्च ताभ्यान्तु पचेत् तैलाढकं शनैः॥
कल्कैर्मधुकमञ्जिष्ठा जीवनीयगणस्तथा।
कुष्ठैलागुरुमृद्वीका मांसी व्याघ्रीनखं नखी॥
हरेणु स्नाविणी व्योषं शताह्वा भृङ्गशारिवे।

---

अमृताख्यो गुग्गुलुः पुरेति।—अमृतानिर्मितत्वादमृताख्य.। यद्यप्ययममृतायोगादमृताख्यगुग्गुलुस्तथापि पुनर्नवायोगात् पुनर्नवागुग्गुलुरिति नामान्तरं, पूर्वोक्तामृताख्यगुग्गुलोर्भेदार्थं वा॥ २१॥

स्वक्पचे यवविक्रान्ता स्थिरा चामलकी तथा ॥
नतं केशरह्रीबेर-पद्मकोत्पलचन्दनैः ।
सिद्धं कर्षसमैर्भागं पानाभ्यङ्गानुवासने ॥
परं वातास्रजान् हन्ति सर्वजानन्तरस्थितान् ।
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत् ॥
स्वेदकण्डूरुजायामा-शिरःकम्पादिंतामयान् ।
हन्यादूर्ध्वगतान् दोषान् गुडूचीतैलमुत्तमम् ॥ ३४ ॥

इति वातरक्त-चिकित्सा ॥

## अथोरुस्तम्भ-चिकित्सा ।

श्लेष्मणः क्षपणं यत् स्यात् न च मारुतकोपनम् ।
तत् सर्वं सर्वदा कार्य्यमूरुस्तम्भस्य भेषजम् ॥ १ ॥
न तस्य स्नेहनं कार्य्यं न वस्तिर्न विरेचनम् ।
सर्वो रूक्षः क्रमः कार्य्यस्तत्रादौ कफनाशनः ॥
पश्चाद्वातविनाशाय कृत्स्नः कार्य्यः क्रियाक्रमः ॥ २ ॥
शिलाजतु गुग्गुलुं वा पिप्पलीमथ नागरम् ।
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा ॥ ३ ॥

---

योगसारान्तरे ।—नतद्वंशर्कराद्युक्तमिति ।—समुदितचूर्णाद्विमान् भवेत । [illegible]निर्मितेति ।—प्रत्येकम् ॥ २९—३४ ॥

इति वातरक्त-चिकित्सा-विवृतिः ।

---

[illegible] भेषजमरिष्टादि ॥ १ ॥

ऊरुस्तम्भे स्नेहनादिनिषेधमाह, न तस्येत्यादि ।—स्नेहनमिति ।—पानाभ्यङ्गादिना, किंवा स्नेहनमिति वस्तिकर्मविशेषणं, तैलानुवासनमित्यर्थः । [illegible] वमनमपि बोध्यम्, ऊरुस्तम्भे वमनस्यापि निषिद्धत्वात् ॥ २ ॥

शिलाजतु इत्यादि ।—शिलाजतु शोधितमेवोपयोज्यम् । [illegible] गोमूत्रेण, दशमूलीक्वाथेन वा पानम् ॥ ३ ॥

भल्लातकामृताशुण्ठी-दारुपथ्यापुनर्नवाः ।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणाः ॥
पिप्पलीपिप्पलीमूल-भल्लातक्काथ एव वा ।
कल्को वा समधुर्देय ऊरुस्तम्भनिवर्हणः ॥ ४ ॥
त्रिफलाचव्यकटुकं ग्रन्थिकं मधुना लिहेत् ।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥ ५ ॥
लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ।
सुखाम्बुना पिबेद्वापि चूर्णं षड्धरणं नरः ॥ ६ ॥
पिप्पलीवर्द्धमानं वा माक्षिकेण गुडेन वा ।
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव वा ॥ ७ ॥
चव्याभयाग्निदारूणां समधुः स्यादूरुग्रहे ।

---

भल्लातकेत्यादि ।—भल्लातकादिभिर्दशमूलान्तैर्मिलित्वा क्काथ इत्याहुः । पिप्पलीत्यादि ।—पिप्पल्यादीनां त्रयाणां क्काथो वा देयः; पिप्पल्यादीनां कल्क इति ।—चूर्णं मधुसहितं वा अवलेहरूपतया देयं, किंवा पिप्पल्यादीनां चूर्णं पानयोग्यं मधु दत्त्वा पेयम् ॥ ४ ॥

त्रिफलेत्यादि ।—कटुकं त्रिकटुकम् । पुरं मूत्रेण वा पिबेदिति ।—यद्यप्ययं योगः "शिलाजतु गुग्गुलुं वा" इत्यादिना पूर्वमेवोक्तस्तथापि सम्पूर्णयोगानुरोधात् पुनरप्यत्र लिखितः । कटुकायुतमिति ।—त्रिकटुयुतं कटुरोहिणीयुतं वा । षड्धरणं—शाणव्याधानुगतम् । यद्यपि षड्धरणं पिबेदित्येतावतैव सुखाम्बुना इति लभ्यते, तथोः एकैनैव षड्धरणपानस्य पूर्वमुक्तत्वात्, तथाप्यनन्तरोक्तयोगेन पानाय तदनिरासार्थमेतदुक्तं भवति ॥ ५ । ६ ॥

पिप्पलीवर्द्धमानं वेति ।—पिप्पलीवर्द्धमाननियमक्रमेण पिप्पलीं गृहीत्वा चूर्णयित्वा मधुना गुडेन वा सहोपयुञ्जीत । गण्डीरारिष्टमेव वेति ।—गण्डीरः समठः, स तु स्वजगो ग्राह्यः, तीक्ष्णत्वात्; तस्यारिष्टं सन्धानम्; तत्र गण्डीरपलशतं जलद्रोणेन पक्त्वा पादावशेषे तस्मिन् गुडतुलामावाप्य धातकी-लोध्रलिप्ते कुम्भे सन्धानीयम्, ईषदम्लं यदा भवति तदोपयोज्यम् । किंवा अरिष्टो निम्बः । समठः निम्बयोगं समनन्तरोक्तेन मधुना गुडेन वा सहोपयोज्यम् ॥ ७ ॥

कल्को दिहेव मूत्राद्यैः करञ्जफलसर्षपैः ॥ ८ ॥
क्षौद्रसर्षपवल्मीक-मृत्तिकासंयुतं भिषक्।
गाढमुत्सादनं कुर्यादूरुस्तम्भे प्रलेपनम् ॥ ९ ॥
कफक्षयार्थं व्यायामेष्वेनं शक्येषु योजयेत्।
स्थानान्याक्रामयेत् कल्यं प्रतिस्रोतो नदीं तरेत् ॥ १० ॥

अष्टकट्वरं तैलम्—

पलाभ्यां पिप्पलीमूल-नागरादष्टकट्वरम्।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः।
अष्टकट्वरतैलेऽस्मिंस्तैलं सार्षपमिष्यते ॥ ११ ॥

कुष्ठाद्यं तैलम्—

कुष्ठश्रीवेष्टकोदीच्य सरलं दारु केशरम्।
अजगन्धाऽश्वगन्धा च तैलं तैः सार्षपं पचेत्।
सक्षौद्रं मात्रया तस्मादूरुस्तम्भार्दितः पिबेत् ॥ १२ ॥

---

कल्केत्यादि।—समस्तः कल्कः "पेष" इति योज्यम्। दिहेदित्यादि—सर्षपैरित्यन्त एको योगः ॥ ८ ॥

गाढमुत्सादनम् [illegible]। स्थानानीति।—[illegible], स्थलानीति पाठे—स एवार्थः। कल्यमिति,—प्रातः, [illegible] ॥ ९ ॥ १० ॥

अष्टकट्वरतैले।—[illegible] पिप्पलीमूलनागरादिति।—पिप्पलीमूलनागराभ्यां मिलित्वा पलद्वयं, [illegible] निर्दिष्टम्। [illegible] '[illegible]' [illegible]। [illegible] पिप्पलीमूलनागराभ्यां [illegible], [illegible] प्रत्येकं [illegible], [illegible] '[illegible]' [illegible]। अष्टकट्वरमिति।—अष्टगुणं कट्वरं [illegible] ॥ ११ ॥

कुष्ठेत्यादौ।—श्रीवेष्टकः सरलनिर्यासः, [illegible], [illegible]। [illegible] पाकः। सक्षौद्रमिति—प्रक्षेपविधया; [illegible]। उक्तं हि चरके—"[illegible] वातकोपोऽभिघातादिपूर्वकः। [illegible]

सैन्धवाद्यं हितं तैलं वर्षाभ्वमृतगुग्गुलुः ॥ १३ ॥

इत्यूरुस्तम्भ-चिकित्सा ।

---

## अथामवात-चिकित्सा ।

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च ।
विरेचनं स्नेहपानं वस्तयश्चाममारुते ॥
सैन्धवाद्येनानुवास्य क्षारवस्तिः प्रशस्यते ॥ १ ॥
आमवाते पञ्चकोल-सिद्धं पानान्नमिष्यते ।
रूक्षः स्वेदः प्रकर्त्तव्यो वालुकापुटकैस्तथा ॥ २ ॥
शटी शुण्ठ्यभया चोग्रा देवाह्वाऽतिविषामृता ।
कषायमामवातस्य पाचनं रूक्षभोजनम् ॥ ३ ॥
शटीविश्वौषधीकल्कं वर्षाभूक्काथसंयुतम् ।

---

कार्य्यो वातामयापहः ॥" इति । सैन्धवाद्यमित्यादी ।—सैन्धवाद्यं तैलं वातव्याधि-उक्तं, पुनर्नवागुग्गुलुरमृतागुग्गुलुश्च वातरक्ते बोध्यः ॥ १२ । १३ ॥

इत्यूरुस्तम्भचिकित्सा-विवृतिः ।

---

आमवातस्याप्यस्य सामान्यादूरुस्तम्भानन्तरमामवातचिकित्सामाह, लङ्घनमित्यादि ।—विरेचनन्तु महेश्वरपत्रिकायां विशेषेणोक्तम्; उक्तं हि—"त्रिवृत्सैन्धवशुण्ठीनां कारनालेन चूर्णितम् । पीत्वा विरेचयेज्जन्तुमामवातहरं परम् ॥ एरण्डस्य चित्र-चूर्णं त्रिवृत्क्वाथेन भावितम् । काञ्जिकेन तु तत् पीतं रेचनमामवातिनाम् ॥" इति । तत् सर्वमत्र बोध्यम् । स्नेहपानमिति ।—लङ्घनादिभिरामक्षये जाते तदनन्तरं केवल-वायोः प्रशमनार्थं स्नेहपानं, किंवा स्नेहसंस्नेहनात् विरेचकतया एरण्डतैलं बोध्यम् । वस्तय इति ।—शोधनवस्तयः । रूक्षः स्वेद इति ।—रूक्षस्वेदः तन्त्रान्तरोक्तः, यथा—"कार्पासास्थिकुलत्थतिलयवैरेरण्डमूलातसी-वर्षाभूशणबीजकाञ्जिकयुतैरेकीकृतैर्वा पृथक् । स्वेदः स्यादथ कूर्परोदरशिरःस्फिक्पाणिपादाङ्गुलि-श्रोणीपृष्ठकटीहनौ विनयते सामाः समस्ता रुजः ॥" इति ॥ १—२ ॥

शट्यादौ ।—उग्रा वचा ॥ ३ ॥

सप्तरात्रं पिबेज्जन्तुरामवातविनाशनम् ॥ ४ ॥

रास्नादशमूलकम्—

दशमूलामृतैरण्ड-रास्नानागरदारुभिः।
क्वाथो रुबूकतैलेन सामं हन्त्यनिलं गुरुम् ॥ ५ ॥
दशमूलीकषायेण पिबेद्वा नागराम्भसा।
कुक्षिवस्तिकटीशूले तैलमेरण्डसम्भवम् ॥ ६ ॥

रास्नापञ्चकम्—

रास्नां गुडूचीमेरण्डं देवदारु महौषधम्।
पिबेत् सार्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे ॥ ७ ॥

रास्नासप्तकम्—

रास्नामृतारग्वधदेवदारु-त्रिकण्टकैरण्डपुनर्नवानाम्।
क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥ ८ ॥
शुण्ठीगोक्षुरकक्वाथः प्रातःप्रातर्निषेवितः।
सामवाते कटीशूले पाचनो रुक्प्रणाशनः ॥ ९ ॥
आमवाते कणायुक्तं दशमूलीजलं पिबेत्।
खादेद्वाऽप्यभयाविश्वं गुडूचीं नागरेण वा ॥ १० ॥

---

दशमूलीत्यादौ—रुबूकतैलेनेति।—सेवनार्थम् एरण्डतैलस्य कर्षः, तदर्धिको वा। अमनाथ' पुनः षड़ङ्गी मात्रका इति ॥ ४—६ ॥

रास्नापञ्चके—पिबेदिति।—क्वाथरूपतया। अत्र केचित्, यदा सर्वाङ्गवात-रास्नापञ्चकेऽपि यदि विरेचनविशेषितो भवति, तदा एरण्डतैलं प्रक्षेप्यमिति वदन्ति। रास्नासप्तके—रास्नेत्यादि।—स्पष्टम् ७॥८॥

शुण्ठीगोक्षुरकक्वाथ इत्यादि।—अत्र शुण्ठ्या आमनाशं, गोक्षुरस्य आमदोषं हरन्ति, कोष्ठभेदे कर्त्तव्ये यवक्षारमप्यत्र प्रक्षिपन्ति ॥ ९ ॥

अभयाविश्वमिति।—हरीतकीचूर्णं मा २, शुण्ठीचूर्णं मा २, पिष्ट्वा खादेत्, तदनन्तरमनुपेयम्। गुडूचीं नागरेण वा इति।—क्वाथेन व्यवहारः। केचित्—पिष्ट्वा क्वाथोदकेन भक्षयन्ति ॥ १० ॥

एरण्डतैलयुक्तां हरीतकीं भक्षयेन्नरो विधिवत्।
आमानिलार्त्तियुक्तो गृध्रसि-वृद्ध्यर्दितो नित्यम् ॥ ११ ॥
कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत् सदा।
आमवातप्रशमनं कफवातहरं परम् ॥ १२ ॥
पञ्चकोलकचूर्णं वा पिबेदुष्णेन वारिणा।
मन्दाग्निशूलगुल्माम-कफारोचकनाशनम् ॥ १३ ॥
अनन्तानागरगोक्षुरमुण्डितिकावरुणकैः कृतं चूर्णम्।
मस्त्वारनालपीतं ह्यामानिलनाशनं ख्यातम् ॥ १४ ॥

वैश्वानरं चूर्णम्—

माणिमन्थस्य द्वौ भागौ यमान्यास्तद्वदेव तु।
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम् ॥
दश द्वौ च हरीतक्याः श्लक्ष्णचूर्णीकृताः शुभाः।
मस्त्वारनालतक्रेण सर्पिषोष्णोदकेन वा ॥
पीतं जयत्यामवातं गुल्मं हृद्वस्तिजान् गदान्।
प्लीहानं ग्रन्थिशूलादीनानाहार्शांसि पीनसम् ॥
विबन्धं जाठरान् रोगांस्तथा वै हस्तपादजान्।
वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम् ॥ १५ ॥

---

एरण्डेत्यादि।—हरीतकीचूर्णमेरण्डतैलेनाप्लुतम् ॥ ११ ॥

कर्षं नागरचूर्णस्येत्यादि।—शुण्ठीचूर्णकर्षयुक्तस्य काञ्जिकस्य पानेन [illegible] प्रचरति ॥ १२ ॥

पञ्चकोलकेत्यादि।—समभागपञ्चकोलकचूर्णं [illegible]मुष्णजलेन पेयम् ॥ १३ ॥

अनन्तेत्यादौ।—वरुणं वरुणमूलम् ॥ १४ ॥

वैश्वानरचूर्णमाह, माणिमन्थस्येत्यादि।—माणिमन्थं सैन्धवम्। यमान्यास्तद्वदिति।—भागद्वयम्। भागास्त्रयोऽजमोदाया इति।—अजमोदा यमानी, तेन पञ्चभागो यमान्या एव, [illegible] यमानीस्थाने यवक्षारं पठन्ति; केचिदजमोदां [illegible] यमान्या भागद्वयं

(१) अलम्बुषाद्यं चूर्णम्—

अलम्बुषां गोक्षुरकं गुडूचीं वृद्धदारकम् ।
पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्नवम् ॥
त्रिफलां नागरञ्चैव श्लक्ष्णचूर्णानि कारयेत् ।
मस्त्वारनालतक्रेण पयोमांसरसेन वा ॥
आमवातं निहन्त्याशु श्वयथुं सन्धिसंस्थितम् ॥ १६ ॥

(२) अलम्बुषाद्यं चूर्णम्—

अलम्बुषागोक्षुरक-त्रिफलानागरामृताः ।
यथोत्तरं भागवृद्धा श्यामाचूर्णञ्च तत्समम् ॥
पिबेदम्लसुरातक्र-काञ्जिकोष्णोदकेन वा ।
पीतं जयत्यामवातं सशोथं वातशोणितम् ॥
त्रिकजानूरुसन्धिस्थं ज्वरारोचकनाशनम् ।
पथ्याक्षधात्र्यस्त्रिफला भागवृद्ध्याथवा क्रमः ॥ १७ ॥
पथ्याविश्वयमानीभिस्तुल्याभिश्चूर्णितं पिबेत् ।
तक्रेणोष्णोदकेनापि अथवा काञ्जिकेन च ।
आमवातं निहन्त्याशु शोथं मन्दाग्नितामपि ॥ १८ ॥

शतपुष्पाद्यं चूर्णम्—

शतपुष्पा विडङ्गञ्च सैन्धवं मरिचं समम् ।

---

प्रयच्छन्ति । अन्ये स्वल्पमोदाद्यौ वनयमानीं पठन्ति ; किन्त्वन्नःपरिमाणेन यमान्येव युक्ता । दश वा चेति ।—दशानां भागा इत्यर्थः ॥ १५ ॥

अलम्बुषामित्यादि ।—अलम्बुषा मुण्डितिका ; वृद्धदारकं वृद्धदारकमूलम् ; वरुण वरुणमूलम् ॥ १६ ॥

अलम्बुषाद्यचूर्णे ।—यथोत्तरं भागवृद्धेति ।—यद् यत् परं तत्तदेकभागवृद्धमित्यर्थं । श्यामा वृद्धदारकः, तत्समभिति ।—मिलितचूर्णसमम् । त्रिफलाया येन क्रमेण भागवृद्धिं कुर्यात् तं क्रममाह,—पथ्याक्षधात्र्य इत्यादि । अयमेव क्रमो वृन्दैरप्यव्यवहारसिद्धो वृन्देनापि लिखितः ॥ १७ ॥

पथ्येत्यादौ ।—चूर्णितमिति ।—भावे क्तः, तेन पथ्यादिभिः कृतं चूर्णं पिबेदित्यर्थः ॥ १८ ॥

चूर्णमुष्णाम्बुना पीतमग्निसन्दीपनं परम् ॥ १९ ॥

हिङ्ग्वाद्यं चूर्णम्—

हिङ्गु चव्यं विडं शुण्ठी कृष्णाजाजी सपौष्करम् ।
भागोत्तरमिदं चूर्णं पीतं वातामजिद्भवेत् ॥ २० ॥

योगराजगुग्गुलुः—

चित्रकं पिप्पलीमूलं यमानी कारवी तथा ।
विडङ्गान्यजमोदा च जीरकं सुरदारु च ॥
चव्यैला सैन्धवं कुष्ठं रास्नागोक्षुरधान्यकम् ।
त्रिफलां मुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥
तालीशपत्रं पत्रञ्च सूक्ष्मचूर्णानि कारयेत् ।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुम् ॥
सम्मर्द्य सर्पिषा गाढं स्निग्धे भाण्डे निधापयेत् ।
ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि ॥
योगराज इति ख्यातो योगोऽयममृतोपमः ।
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि ।
प्लीहगुल्मोदराध्मान-दुर्नामानि विनाशयेत् ॥
अग्निञ्च कुरुते दीप्तं तेजोवृद्धिं बलं तथा ।
वातरोगान् जयत्येष सन्धिमज्जगतानपि ॥ २१ ॥

---

मधुपेत्यादि।—स्पष्टम्। हिङ्गु चव्यमित्यादौ।—कृष्णा पिप्पली। अजाजी सित-जीरकमिति नियमः, कृष्णाजाजी कृष्णजीरकमिति वृन्दटिप्पणी। भागोत्तरमिति।—यथोत्तरम् एकभाग-परिवृद्धम्। पीतमिति।—उष्णाम्बुना ॥ १९ ॥ २० ॥

योगराजगुग्गुलौ।—कारवी कृष्णजीरकम्; अजमोदा यमानी, अन्यः परिभाषण-त्वात्, एवमन्यत्रापि। सम्मर्द्य सर्पिषा गाढमिति।—प्रथमं तावत् घृतं दत्त्वा केवलो गुग्गुलुः पेषणीयः। पश्चादन्यमखिलं चूर्णं दत्त्वा पेषणीयः। सम्यक् चूर्णमिलने तु

सिंहनादगुग्गुलुः—

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम् ।
सौगन्धिकपलञ्चैकं कौशिकस्य पलं तथा ॥
कुडवं चित्रतैलस्य सर्वमादाय यत्नतः ।
पाचयेत् पाकविद्वैद्यः पात्रे लौहमये दृढे ॥
हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम् ।
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥
कुष्ठानि वातरक्तानि गुल्मशूलोदराणि च ।
आमवातं जयेदेतदपि वैद्यविवर्जितम् ॥
एतदभ्यासयोगेन जरापलितनाशनम् ।
सर्पिस्तैलरसोपेतमश्नीयाच्छालिषष्टिकम् ॥
सिंहनाद इति ख्यातो रोगवारणदर्पहा ।
वह्निवृद्धिकरः पुंसां भाषितो दण्डपाणिना ॥ २२ ॥

बृहत्सिंहनादगुग्गुलुः—

पिष्ट्वा गुग्गुलुमार्द्धां कटुतैलपलाष्टके ।

---

त्वभाण्डे निक्षिपः । मर्दनार्थं घृतमानयाय यावता चूर्णं स्निग्धं भवति ; अन्ये तु—गुग्गुलोरर्द्धमानमित्याहुः । मतो मात्रां प्रयुञ्जीत इति ।—बदमाषकरूपाम् । वाप्यकाञ्जिकाद्यनुपेयमित्याहुः ॥ २१ ॥

पलत्रयमित्यादि ।—त्रिफलायाः काथस्य पलत्रयं प्रत्येकम् । सुचूर्णितमिति ।—सौगन्धिकपलमित्यनेन गन्धकम्। सौगन्धिकमिति ।—गन्धकं, तच्च शोधितं ग्राह्यम् । कौशिकस्येति ।—गुग्गुलो । चित्रतैलमिति ।—एरण्डतैलम् । कुडवमिति ।—अष्टौ पलानि । अन्ये तु—तैलस्य बहुत्वेन पाको दुष्करः स्यात् इति कृत्वा चतुस्तैलमुक्तमिच्छन्ति । त्रिफला प्रत्येकं पल १, जल ४, काथार्थं जल अवशेष ३, पल ४ ; शेष ३ १, पल, १ , शोधितगन्धकचूर्णं पल १, गुग्गुलु पल १, एरण्डतैल पल ८ । एरण्डतैलं दत्वा गन्धकचूर्णेन सह गुग्गुलुं पेषयीथ । तदनु त्रिफलाक्वाथसंमालोड्य लौहपात्रे यत्नं, मनाक् तैलनिःसरणे सति सम्यक् पाको ज्ञेयः । प्रथमतो माषकम्, अष्टौ माषकान् यावत् योज्यम् ॥ २२ ॥

कटुतैलेन गुग्गुलुं पिष्ट्वा काथ-त्रयेण सह पक्वा चाश्वपाके प्रक्षेपार्थं त्रिकटु-

प्रत्येकं त्रिफलाप्रस्थो सार्द्धद्रोणे जले पचेत् ॥
पादशेषे च पूतञ्च पुनरग्नावधिश्रयेत् ।
त्रिकटु त्रिफला मुस्तं विडङ्गामरदारु च ॥
गुडूच्यग्निस्त्रिवृद्दन्ती-चव्यैश्चूर्णमानकम् ।
पारदं गन्धकञ्चैव प्रत्येकं शुक्तिसम्मितम् ॥
सहस्रकानकफलं सिद्धे सञ्चूर्ण्य निक्षिपेत् ।
ततो माषद्वयं जग्ध्वा पिबेत् मस्तकालादिकम् ॥
अग्निञ्च कुरुते दीप्तं वड़वानलसन्निभम् ।
धातुवृद्धिं वयोवृद्धिं बलं सुविपुलं तथा ॥
आमवातं शिरोवातं सन्धिवातं सुदारुणम् ।
जानुजङ्घाश्रितं वातं सकटीपक्षमेव च ॥
अश्मरीं मूत्रकृच्छ्रञ्च भगन्दरतिमिरोदरे ।
अम्लपित्तं तथा कुष्ठं प्रमेहं शुक्रनिर्गमम् ॥
कासं पञ्चविधं श्वासं क्षयञ्च विषमज्वरम् ।
श्लीपदं शोथं गुल्मं पाण्डुरोगं सकामलम् ॥
शोथान्त्रवृद्धिशूलानि शुदजानि विनाशयेत् ।
मेदःकफाममहातं व्याधिवारणदर्पहा ॥
सिंहनाद इति ख्यातो योगोऽयममृतोपमः ॥ २१ ॥

बृहत्सैन्धवाद्यं तैलम्—

सैन्धवं त्रिफला रास्ना पिप्पली गजपिप्पली ।

टीका चूर्णं तोलक ८; शोधित जयपालबीज तोला १०००, [illegible] शीतोष्णे दातव्यो इति दृढः ॥ २१ ॥

सर्जिका मरिचं कुष्ठं शुण्ठी सौवर्चलं विड़म् ॥
यमान्यौ पुष्कराजाजो मधुकं शतपुष्पिका ।
पलार्द्धिकैः पचेदेतैः प्रस्थमेरण्डतैलतः ॥
प्रस्थास्तु शतपुष्पायाः प्रत्येकं मस्तुकाञ्जिके ।
दद्याद् द्विगुणिते पान-वस्त्यभ्यङ्गप्रयोजितम् ॥
आमवातहरं श्रेष्ठं सर्ववातघ्नमग्निदम् ।
कटीजानूरुसन्धिस्थे पार्श्वहृद्ग्रहवाश्रये ।
शस्तं वाताश्मवृद्धौ च सैन्धवाद्यमिदं महत् ॥ २४ ॥

अजमोदाद्यवटकः—

अजमोदामरिचपिप्पलिविड़ङ्गसुरदारुचित्रकशताह्वाः ।
सैन्धवपिप्पलिमूलं भागा नवकस्य पलिकाः स्युः ॥
शुण्ठी दशपलिका स्यात् पलानि तावन्ति वृद्धदारस्य ।
पथ्यापञ्चपलानि सर्वमेकत्र कारयेच्चूर्णम् ॥
समगुड़वटकान् खादन्पूर्णं वाप्युष्णवारिणा पिबतः ।
नश्यन्त्यामानिलजाः सर्वरोगाः सुकष्टास्तु ॥
विश्वाचिकाप्रतितूणीतूणीहृद्रोगाश्च गृध्रसी चोग्रा ।
कटिवस्तिगुदस्फुटनं चैवास्थिजङ्घयोस्तीव्रम् ॥
श्वयथुस्तथाङ्गसन्धिषु ये चान्येऽप्यामवातसम्भूताः ।
सर्वे प्रयान्ति नाशं तम इव सूर्यांशुविध्वस्तम् ॥ २५ ॥

(१) मस्तोदनम्—नागरक्षारकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥

---

अजमोदाद्यवटके ।—अजमोदा यमानी । नवकस्येति ।—अजमोदादि नवकस्य प्रत्येकं पलिका भागा इत्यर्थः । पलानि तावन्तीति ।—दश पलानीत्यर्थः । समगुड़वटकानिति ।—समेनैव गुड़ेन विमिश्रयं दत्वा वटिकाबन्धात् द्विटङ्केन वटकाः कार्याः ; अथवा वटकमात्रोऽत्र प्रकारः । चूर्णं वेति ।—गुड़वर्ज्जं विना ॥ १४ ॥१५ ॥

वातश्लेष्मप्रशमनमग्निसन्दीपनं परम् ।
नागरं घृतमित्युक्तं कव्यामशूलनाशनम् ॥ २६ ॥

(१) शुण्ठीघृतम्—सर्पिर्नागरकल्केन सौवीरकचतुर्गुणम् ।
सिद्धमग्निकरं श्रेष्ठमामवातहरं परम् ॥ २७ ॥

गुडूचीघृतम्—अमृतायाः कषायेण कल्केन च महौषधात् ।
मृद्वग्निना घृतं सिद्धं वातरक्तहरं परम् ॥
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि ।
अर्शांसि गुल्मांश्च तथा नाशयत्याशु योजितम् ॥ २८ ॥

काञ्जिकषट्पलकं घृतम्—

हिङ्गु त्रिकटुकं चव्यं माणिमन्थं तथैव च ।
कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत् ॥
आरनालाढकं दत्त्वा तत् सर्पिर्जठरापहम् ।
शूलं विबन्धमानाहमामवातं कटीग्रहम् ॥
नाशयेद् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम् ॥
पुष्ट्यर्थं पयसा साध्यं दध्ना विण्मूत्रसंग्रहे ।
दीपनार्थं मतिमता मस्तुना च प्रकीर्त्तितम् ॥ २९ ॥

---

शुण्ठीघृते ।—चतुर्गुणेन तेनेति ।—नागरक्वाथेन ; केचित्तोयेनेति वदन्ति ।—क्वाथस्थाने चतुर्गुणं जलं दत्त्वेत्यर्थः ॥ २६ ॥

शुण्ठीघृतं—स्पष्टम् ॥ २७ ॥

अमृताया इत्यादौ ।—"कल्केन च"—इति पदं महौषधादित्यनेन सम्बध्यते । आढ्य-वात.—ऊरुस्तम्भः ॥ २८ ॥

काञ्जिकषट्पलके ।—त्रिकटुकं प्रत्येकं पलिकम् । माणिमन्थं सैन्धवम् । पुष्ट्यर्थ-मित्यादि ।—उक्तमेव काञ्जिकषट्पलकं यदि पुष्ट्यर्थं क्रियते, तदा काञ्जिक-स्थाने पयो दत्त्वा साध्यम् ; विण्मूत्रसंग्रहे कार्ये दध्ना साध्यम् ; दीपनार्थं यदि, तदा मस्तुना साध्यमित्यर्थः ॥ २९ ॥

पिप्पलीपिप्पलीमूलमजाजीकुष्ठचित्रकम्।
नागरं मरिचं चव्यं चूर्णितञ्चाद्यसम्मितम्॥
समाहात् परतः पेया वातरोगामनाशिनी।
क्रिमिकुष्ठक्षयानाह-गुल्मार्शःश्लीपदमेहनुत्।
अग्निसन्दीपनी चैव पाण्डुरोगविनाशिनी॥ ३२॥

सिद्धार्थकखलीप्रस्थं सुधौतं निस्तुषं जले।
अण्डप्रस्थं विनिक्षिप्य स्थापयेद्दिवसत्रयम्॥
धान्यराशौ ततो दद्यात् सचूर्णं पलिकानि च।
बलस्त्वचा गोक्षुरकं शतपुष्पीपुनर्नवे॥
प्रसारणी वरुणत्वक् शुण्ठी मदनमेव च।
सम्यक् पाकन्तु विज्ञाय सिद्धा तण्डुलमिश्रिता॥
भृष्टा सर्षपतैलेन हिङ्गुसैन्धवसंयुता।
भक्षिता लवणोपेता जयेदामं महारुजम्।
एकजं द्वन्द्वजं साध्यं सान्निपातिकमेव च॥
कच्यूरुवातमानाह-जानुजं त्रिकमागतम्।
उदावर्त्तहरी पेया बलवर्णाग्निकारिणी॥ ३३॥

---

घटे घटमध्ये पिपेदित्यन्वयः। ततोऽर्द्धेन रसोनमिति।—पञ्चामग्लमित्यर्थः। संयुतमिति।—त्वक्‌शिरारहितम्॥ ३२॥

सिद्धार्थकखलीप्रस्थमित्यादि।—सर्षपखलीं चूर्णीकृत्य जलेनाप्लाव्य क्षालयित्वा निस्तुषीकृत्य आतपे संशोष्य ग्राह्यं; पल १६, अण्ड ४ गराय, मिश्रयित्वा धान्यराशौ दिनत्रयं स्थाप्यम्। तत इति।—धान्यराशेराकृष्यात्वक्‌प्रभृतिचूर्णं प्रत्येकं पलिकं दद्यात्। ततोऽम्लत्वेन सम्यक् पाकं सम्यक् परिणतमिति विज्ञाय व्यापनीयम्। ततः पचई पात्रे कर्ष २, तण्डुलचूर्णं पल १, पाकार्थं जल पल ८, "पचतु षड्‌गुणेऽम्भसि" इत्युक्तेः; भर्ज्जनार्थं सर्षपतैल कर्ष १, हिङ्गु रति ५, सैन्धव माषा २; ततः पुनरपि किञ्चिद्द्रवं दत्त्वा भक्षयेदिति परिपाटी कथिता। सिद्धा तण्डुलमिश्रितेति।—

# अथ शूल-चिकित्सा।

वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः।
क्षारचूर्णानि गुडिकाः शस्यन्ते शूलशान्तये ॥ १ ॥
पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः।
पायसैः कृशरैः पिष्टैः स्निग्धैर्वा पिशितोत्करैः ॥ २ ॥

## वातशूल-चिकित्सा।

वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः।
ससैन्धवो व्योषयुतः सलावः सहिङ्गुसौवर्चलदाडिमाढ्यः ॥ ३ ॥
बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः।
सहिङ्गुलवणं पीतं सद्यो वातरुजापहम् ॥ ४ ॥
शूली निरन्नकोष्ठोऽद्भिरुष्णाभिर्घूर्णिताः पिबेत्।
हिङ्गुप्रतिविषाव्योषवचासौवर्चलाभयाः ॥ ५ ॥
तुम्बुरूण्यभया हिङ्गु पौष्करं लवणत्रयम्।
पिबेद् यवाम्बुना वात-शूलगुल्मापतन्त्रकी ॥ ६ ॥

---

आमवातवत् शूलस्याप्यामसम्बन्धेन तदनन्तरं शूलचिकित्सामाह, वमनमित्यादि।—सुगमम्। वमनमुत्क्लिष्टकफे, लङ्घनमामपाचनार्थं, स्वेदः पित्तं विहाय। क्षार इति।—क्षारयोगाः क्षारप्रयोगे वा। चूर्णगुडिके इहैव वक्ष्यमाणे; पुंस इत्यत्र सर्वेषामिति पाठान्तरम्। कृशरस्तिलयवागूः। पायसादिभिः पिण्डस्वेद-सम्बन्धात् स्वेदो बोध्यः। पिशितेति।—मेकादिमांसैः॥ १। २॥

वातात्मकमित्यादि।—यूष इति।—कुलत्थलावमांसयोर्मिलित्वा पलं, जलं षोडश-पलं, पचनचतुर्थावशिष्टे विमर्द्य वस्त्रेण छानयित्वा हिङ्गुमरिचेन घृतेन भर्जनीयं, तदनन्तरं सैन्धवादीनां चूर्णं निक्षिप्य, कर्षः प्रक्षेपः, पश्चाद्दाडिमबीजरसो ग्राह्यः। कुलत्थकर्षं २, लावमांसकर्षं २, पाकार्थं पानीयं प्र० १, शेषं पल ४, एतत् विमर्द्य वस्त्रेण छानयित्वा घृते भर्जनीयम्। सैन्धवव्योषादिभिः यथायोग्यं संस्कारः॥ ३॥

बलेत्यादि।—योगोऽयं क्वाथविधिना। हिङ्गु लवणञ्च प्रक्षेप्यम्। लवणमत्र सौवर्चलं, वातशूलघ्नत्वादित्याहुः॥ ४॥

निरन्नकोष्ठ इति।—अभुक्त इत्यर्थः। अन्ये तु—पदम् पर्याप्तं तन्नुन्नकोष्ठ इत्याहुः। प्रतिविषा आतिविषा; तच्च क्षुद्रनामख्यातं; यवाम्बुनेति।—यवक्वाथेन। यवैरुद्धृताम्बुना। पिबेदिति तु पाठान्तरं, तेन शब्दादीन क्वाथः॥ ५। ६॥

श्यामा त्रिवृद्‌ शिग्रुफलानि पथ्या विडङ्गकम्पिल्लकमश्वमूत्रौ।
कल्कं समं मद्ययुतञ्च पीत्वा शूलं निहन्याद्‌निलात्मकन्तु ॥७॥

यमानीहिङ्गुसिन्धूत्थ-क्षारसौवर्च्चलाभयाः।
सुरामण्डेन पातव्या वातशूलनिसूदनाः ॥ ८ ॥

विश्वमेरण्डजं मूलं क्वाथयित्वा जलं पिबेत्।
हिङ्गुसौवर्च्चलोपेतं सद्यः शूलनिवारणम् ॥ ९ ॥

हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्च्चलेन वा।
विश्वैरण्डयवक्वाथः सद्यः शूलनिवारणः ॥ १० ॥

तद्वद्‌वृयवक्वाथो हिङ्गुसौवर्च्चलान्वितः ॥ ११ ॥

हिङ्गूग्रकृष्णालवणं यमानी क्षाराभयासैन्धवतुल्यभागम्।
चूर्णं पिबेद्दारुविमण्डमिश्रं शूले महद्देऽनिलजे शिवाय ॥ १२ ॥

(१) नारिकेलखण्डम् —

सुपक्वनारिकेलस्य प्रस्थं पलचतुष्टयम्।
पिष्ट्वा घृतपले भृष्ट्वा विपेत् खण्डचतुःपलम् ॥
नारिकेलस्य च प्रस्थे किञ्चित्कृत्वथतो जले।
धन्याकं पिप्पलीं मुस्तं हिङ्गोरं वंशलोचनाम् ॥
शाणमानं चतुर्जातं चूर्णं शीते विपेद्‌ बुधः।
हन्त्यम्लपित्तमरुचिं रक्तपित्तं क्षयं वमिम् ॥

---

श्यामेत्यादि।—श्यामा त्रिवृदरुणः; कम्पिल्लकी गुण्डारोचनी, अश्वमूत्री मल्लकौ ॥ ७ ॥

यमानीत्यादी।—क्षारो यवक्षार.। सुरामण्डेनेति।—सुरायाः उपरितनभागस्त्र- भागेन, एवमन्यत्रापि ॥ ८ ॥

विश्वमित्यादि।—एरण्डमूलस्य मानमत्र, शुण्ठ्यर्थेको भाग इत्यर्थ. ॥ ९ ॥

हिङ्गुपुष्करेत्यादि।—"हिङ्गुपुष्करमूलाभ्यां" "हिङ्गुसौवर्च्चलेन वा" इति।—उभयत्र- सहार्थे तृतीया। तद्वदिति।—सद्य. शूलहर इत्यर्थः ॥ १० । ११ ॥

हिङ्ग्वग्रेत्यादि।—चार्थोऽत्राविवक्षितः; कृष्णा पिप्पली; लवणमिह सौवर्च्चलं, विशेषत. शूलहन्तृत्वात्। क्वचित् कृष्णामर्कमिति पाठः, स च विषमार्थोऽदर्शितः।

शूलञ्च पृष्ठशूलञ्च पित्तरुग्घ्नं रसायनम् ।
त्रिशेषाढ्लकद्रव्यं पुष्टिकौजस्करं स्मृतम् ॥ १३ ॥
सौवर्चलाम्लिकाजाजी-मरिचैर्द्विगुणोत्तरैः ।
मातुलुङ्गरसैः पिष्टा गुडिकानिलशूलनुत् ॥ १४ ॥
हिङ्ग्वम्लवेतसव्योष-यमानीलवणत्रिकैः ।
बीजपूररसोपेतैर्गुडिका वातशूलनुत् ॥ १५ ॥
बीजपूरकमूलञ्च घृतेन सह पाययेत् ।
जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः ॥ १६ ॥
बिल्वमूलतिलैरण्डं पिष्ट्वा चाम्लतुषाम्भसा ।
गुडिकां भ्रामयेदुष्णां वातशूलविनाशिनीम् ॥ १७ ॥
तिलैश्च गुडिकां कृत्वा भ्रामयेज्जठरोपरि ।
गुडिका शमयत्येषा शूलञ्चैवातिदुःसहम् ॥ १८ ॥
नाभीलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः ।
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलनुत् ॥ १९ ॥

पित्तशूल-चिकित्सा—

गुडः शालिर्यवाः क्षीरं सर्पिःपानं विरेचनम् ।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥ २० ॥

---

त्रिवृत्त्—हरीतकीत्रिवृच्च श्यामत्रिवृतमिति पठति, हारीतसंवादात् । कल्कोऽमहोऽपि नामतः, चक्रदत्तात् पठनमस्येति व्याचष्टे ॥ १२।१३ ॥

सौवर्चलेत्यादौ ।—अम्लिका तिन्तिडी । द्विगुणोत्तरैरिति ।—यथोत्तरं द्विगुणै-र्द्रव्यैः । एषा गुडिका चतुर्माषकमिता उष्णोदकानुपानेन सेवनीया, एवं वक्ष्यमाणा गुडिकापि । बीजपूरेत्यादि ।—केवलवातजे ॥ १४—१६ ॥

बिल्वमूलेत्यादि ।—अम्लतुषाम्भः अम्लकाञ्जिकम् ॥ १७ ॥

तिलैरिति ।—पिष्टैः । गुडिकेयं कोष्णा उदरे भ्रामयितव्या ॥ १८ ॥

जीवन्तीमूलकल्केनापि लेपः ॥ १९ ॥

सम्प्रति पित्तशूलचिकित्सामाह, गुड इत्यादि ।—गुडोऽत्र पुराणः, उपद्रवमपथ-

पैत्ते तु शूले वमनं पयोऽम्बुरसैस्तथेक्षोः सपटोलनिम्बैः।
शीतावगाहाः पुलिनाः सवाताः कांस्यादिपात्राणि जलप्लुतानि ॥ २१॥

विरेचनं पित्तहरञ्च शस्तं रसाश्च शस्ताः शशलावकानाम्।
सन्तर्पणं लाजमधूपपन्नं योगाः सुशीता मधुरप्रयुक्ताः ॥ २२॥

छर्द्यां ज्वरे पित्तभवेऽपि शूले
घोरे विदाहे त्वतितर्षिते च।
यवस्य पेयां मधुना विमिश्रां
पिबेत् सुशीतां मनुजः सुखार्थी ॥ २३॥

धात्र्या रसं विदार्य्या वा त्रायन्ती-गोस्तनाम्बु वा।
पिबेत् सशर्करं सद्यः पित्तशूलनिसूदनम् ॥ २४॥
शतावरीरसं क्षौद्र-युतं प्रातः पिबेन्नरः।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥ २५॥
बृहत्यौ गोक्षुरश्चैव कुशकाशेक्षुवालिकाः।
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ॥ २६॥

---

मेव, तच्च वातपित्तहरत्वेन शीतिकत्वात्। तत्र हि सुश्रुते,—"पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः। पुराणश्चाधिकगुणः, घृत. पथ्यतमो गुडः॥"इति ॥ २०॥

पैत्ते तु शूले वमनमित्यादि।—पित्तजेऽपि वमनमामाशयस्थपित्तहरणार्थम्। सपटोलनिम्बैरिति।—पटोलनिम्बकल्कयुतैः। मदनफलयोगमप्यत्र केचिदिच्छन्ति॥ २१॥

विरेचनं पित्तहरमिति।—पित्तहरमधुरगणोपेतम्। सन्तर्पणं लाजमधूपपन्नमिति।—लाजशक्तुमधुभ्यां निर्मितं सन्तर्पणम्। यवस्य पेयामिति।—यवस्य यवागूम्॥ २२॥ २३॥

धात्र्या रसमित्यादि।—श्लोकद्वयम्। धात्र्याः स्वरसः, विदार्य्या अपि स्वरसः, त्रायन्तीगोस्तन्यौ क्वाथः; शर्करा च सर्वत्र प्रक्षेप्या बोध्या॥ २४॥

शतावरीरसमित्यादि।—स्पष्टम्॥ २५॥

बृहत्यावित्यादि।—इक्षुवालिका काशभिदा॥ २६॥

मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथापरः।
सक्षारो मधुना पीतः पार्श्वहृद्बस्तिशूलनुत् ॥ ३९ ॥
आमशूले क्रिया कार्य्या कफशूलविनाशिनी।
सेव्यमामहरं सर्वं यदग्निबलवर्द्धनम् ॥ ४० ॥
हिङ्ग्वादि—सहिङ्गुतुम्बुरुव्योष-यमानीचित्रकाभयाः।
सक्षारलवणाश्चूर्णं पिबेत् प्रातः सुखाम्बुना।
विण्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम् ॥ ४१ ॥
धात्रीलौहम्—षट्पलं शुद्धमण्डूरं यवस्य कुडवं तथा।
पाकाय नीरप्रस्थार्द्धं दद्यात् पादावशेषितम् ॥
शतमूलीरसस्याष्टावामलक्या रसस्तथा।
तथा दधिपयोभूमि-कुष्माण्डस्य चतुष्पलम् ॥
चतुष्पलं सर्पिरिक्षु-रसं दद्याद्विचक्षणः।
प्रक्षिपेज्जीरकं धान्यं त्रिजातं करिपिप्पलीम् ॥
मुस्तं हरीतकीञ्चैव अभ्रं लौहं कटुत्रयम्।
रेणुकं त्रिफलाञ्चैव तालीशं नागकेशरम् ॥
प्रत्येकं कार्षिकं चूर्णं पेषयित्वा विनिक्षिपेत्।
भोजनादौ तथा मध्ये चान्ते चैव समाहितः ॥
तोलैकं भक्षयेत्तानु पेयं नित्यं पयस्तथा।
शूलमष्टविधं हन्ति साध्यासाध्यमथापि वा।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
परिणामसमुत्थांश्च अन्नद्रवसमुद्भवान्।
द्वन्द्वजान् परिशूलांश्च अम्लपित्तं सुदारुणम्।
सर्वशूलहरं श्रेष्ठं धात्रीलौहमिदं स्मृतम् ॥ ४२ ॥

---

मातुलुङ्गरस इति।—मातुलुङ्गमूलकाथः। पीतस्त्वेषोऽपि मधुयवक्षारौ प्रक्षेप्यौ ॥३९॥
आमशूल इत्यादौ।—आमहरं भूत्वा यदग्निवृद्धिकरं भवति यवक्षारादि, तत् सेव्यं, न तु घृतादि ॥ ४० ॥
तुम्बुरु—धन्यकसदृशफलविशेषः ॥ ४१ ॥ ४२ ॥

चित्रकग्रन्थिकैरण्ड-शुण्ठीधान्यं जलैः शृतम् ।
शूलानाहविबन्धेषु सहिङ्गु विड्सैन्धवम् ॥ ४२ ॥
दीप्यकं सैन्धवं पथ्या नागरञ्च चतुःसमम् ।
घ्नं शूलं जयत्याशु मन्दस्याग्नेश्च दीपनम् ॥ ४४ ॥
समाश्रितं बृहत्यादिं पिबेत् पित्तानिलात्मके ।
व्यामिश्रं वा विधिं कुर्याच्छूले पित्तानिलात्मके ॥
पित्तजे कफजे वापि या क्रिया कथिता पृथक् ।
एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे ॥ ४५ ॥
पटोलत्रिफलारिष्ट-क्वाथं मधुयुतं पिबेत् ।
पित्तश्लेष्मज्वरच्छर्दि-दाहशूलोपशान्तये ॥ ४६ ॥
रसोनं मद्यसंमिश्रं पिबेत् प्रातः प्रकाङ्क्षितः ।
वातश्लेष्मभवं शूलं निहन्त्यं वह्निदीपनम् ॥ ४७ ॥

बृहद्विल्वादि —बिल्वोरुबूकदशमूलयवाम्भसा तु
हिंस्राहिङ्गुलवणत्रयपुष्कराणाम् ।
चूर्णं पिबेद् हृदयपार्श्वकटीग्रहाम-
पक्वाशयासगुदशूलज्वरगुल्मशूली ॥

---

चित्रकेत्यादौ ।—ग्रन्थिकं पिप्पलीमूलम् । सहिङ्गु विडसैन्धवमित्यत्र सहिङ्गु-विडङ्गाजिनमिति केचित् पठन्ति ॥ ४२ ॥

दीप्यकं—यमानी, मन्दस्याग्निमन्दस्य ॥ ४४ ॥

समाश्रितं बृहत्यादिमिति ।—बृहत्यो गोक्षुरेरण्डेत्यादिना पूर्वमुक्तम् ; अन्ये तु—सन्निपातज्वरोक्तं बृहत्यादिकमाहुः । व्यवहारस्तु पूर्वेणैव । द्वन्द्वजशूलचिकित्सा-माह,—व्यामिश्रमित्यादि ॥ ४५ ॥

पटोलेत्यादौ ।—अरिष्टो निम्बः ॥ ४६ ॥

रसोनमित्यादि ।—निस्तुषपिष्टरसोन माषा ६, मद्य पल १ ॥ ४७ ॥

बिल्वोरुबूकेत्यादि ।—अम्भसेति ।—क्वाथेन । अत्र हिङ्ग्वादीनामंशसमित्यादि वचनमात्रयोर्मे समुदितदशमूलयवयोर्द्वयोः प्रत्येकं तुल्यभागेन 'हन्तारं व्यवहारदर्शनादथापि' तदेव मानमाह चीरकः । तेन बिल्वोरुबूकदशमूलानां मिलितानामेको भागः, यवस्य

क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता ।
प्रवर्त्तते न तेनात्र चूर्णाच्चो चतुर्द्रवः ॥ ४८ ॥

यवक्षारादिः—चूर्णं समं रुचकहिङ्गुमहौषधानाम्
शुण्ठ्यम्बुना कफसमीरणसम्भवासु ।
हृत्पार्श्वपृष्ठजठरार्त्तिविसूचिकासु
पेयं तथा यवरसेन तु विड्विबन्धे ॥

समं शुण्ठ्यम्बुनेत्येवं योजना क्रियते बुधैः ।
तेनाल्पमानमेवात्र हिङ्गु सम्परिदीयते ॥ ४९ ॥

हिङ्गु सौवर्चलं पथ्या विडसैन्धवतुम्बुरु ।
पौष्करञ्च पिबेच्चूर्णं दशमूलयवाम्भसा ॥
पार्श्वहृत्कटिपृष्ठांस-शूले तन्द्रापतानके ।
शोथे श्लेष्मप्रसेके च कर्णरोगे च शस्यते ॥ ५० ॥

एरण्डादिकम्—एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटुमूलकृतः कषायः ।
सक्षारहिङ्गुलवणोरुबुतैलमिश्रः
श्रोण्यंसमेढ्रहृदयस्तनरुक्षु पेयः ॥ ५१ ॥

---

चतुर्थो भाग इति । यवक्षारोऽपि द्रव्यमेव । हिङ्ग्वादयस्तु प्रक्षेपविषये प्रयोज्याः, न तु "पानस्य चतुर्द्रव." इति परिभाषया; एवं बलामात्रेष्वपि । एतदेवाह—क्वाथेन चूर्णपानं यदित्यादि ।—चक्रस्त्वत्र ज्वरातीसारचिकित्सा-निर्दिष्टः इति ॥ ४८ ॥

चूर्णं समित्यादि ।—रुचकं सौवर्चलम् । शौषकेन शुण्ठ्याः कर्षोऽष्टाम्बुना क्वाथः । प्रक्षेपः सौवर्चल माषा १, महौषधं माषा २, हिङ्गु रति ६ । एवं यवरसेनेति यवक्वाथेन । समं शुण्ठ्याम्बुनेति ।—समशब्दस्य तुल्यार्थत्वे हिङ्गुनोऽपि रुचकमहौषधसमानत्वेन बहुमानता स्यादतः समिति पदं सहार्थे एवेत्यर्थः ॥ ४९ ॥

हिङ्गुसौवर्चलमित्यादौ ।—दशमूलयवाम्भसेति ।—दशमूलयवयोर्द्वयोः क्वाथः; तेन प्रक्षेपं दशमूल १ माषा ७ रति, यवताम्र १ कर्षः, पाकार्थं जल शराव १, शेष पल २ । अत्र विधिरिति हिङ्ग्वादीनां प्रक्षेपः ॥ ५० ॥

एरण्डेत्यादौ ।—मातुलुङ्गं मातुलुङ्गस्य मूलं, पाषाणभित् पाषाणभेदी; त्रिकटो गोक्षुरस्य मूलम् । लवणमत्र 'सैन्धवं, न तु सौवर्चलं, सैन्धवसार-

हिङ्गु त्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम्।
मातुलुङ्गरसोपेतं प्लीहशूलापहं रजः ॥ ५२ ॥
दग्धमनिर्गतधूमं मृगशृङ्गं गोघृतेन सह पीतम्।
हृदयनितम्बजशूलं हरति शिखी दारुनिवहमिव ॥ ५३ ॥
क्रिमिरिपुचूर्णं लीढं सहितं स्वरसेन वङ्गसेनस्य।
क्षपयत्यचिराद्नियतं लीहाजीर्णोद्भवं शूलम् ॥ ५४ ॥
विदारीदाड़िमरसः सव्योषलवणान्वितः।
क्षौद्रयुक्तो जयत्याशु शूलं दोषत्रयोद्भवम् ॥ ५५ ॥

एरण्डद्वादशकम्—

एरण्डफलमूलानि बृहतीद्वयगोक्षुरम्।
पर्णिन्यः सहदेवा च सिंहपुच्छीक्षुवालिका ॥
तुल्यैरेतैः शृतं तोयं यवक्षारयुतं पिबेत्।
पृथग्दोषभवं शूलं हन्यात् सर्वभवं तथा ॥ ५६ ॥

---

सैन्धवसैलैरेरण्डकास्य चेति माधवग्रन्थसंवादात्। अयं योग तालपत्रे चन्द्रटेन लिखित.। अतस्तत्रापि युज्यते ॥ ५१ ॥

हिङ्गु त्रिकटुकमित्यादौ।—मातुलुङ्गरसो—मातुलुङ्गमूलकषाय.। अन्ये तु—मातुलुङ्गफलरसमित्याहु. ॥ ५२ ॥

दग्धमित्यादि।—मृगशृङ्ग—हरिणशृङ्गम्, तच्च पुटेनान्तर्धूमं यथा स्यात् तथा दग्धव्यमित्यर्थ ॥ ५३ ॥

क्रिमिरिपुचूर्णमित्यादौ।—स्वरसेनेति—वङ्गसेनस्य यवपत्रस्य स्वरसेनेत्यर्थः ॥ ५४ ॥

विदारीत्यादि।—विदारी-पक्वदाडिमफलयोः स्वरसः; भूमिकुष्माण्डरस पक्वदाडिमफलरस. प्रत्येक कर्ष २, त्रिकटु चैषाम् प्रत्येक माषा १, मधु माषा ४ ॥ ५५ ॥

एरण्डेत्यादि।—एरण्डस्य फलं मूलञ्च। पर्णिन्यश्चतस्र', शालपर्णी मुद्गपर्णी पृश्निपर्णी-माषपर्णीभेदात्। सहदेवा—दण्डोत्पलभेदः। सिंहपुच्छी—पृश्निपर्णीभेदः, सा च कलम्बुतदेशे काटवासिंहपुच्छीति ख्याता। इक्षुवालिका सटा वा मड इति नाम्ना ख्याता खागडी। चक्रस्तु इक्षुवालिकास्थाने इक्षुरकं पठति। एवं सुश्रुतमतानुवादी चन्द्रटोऽपि ॥ ५६ ॥

गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम् ।
विलिहन् मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ५७ ॥
शङ्खचूर्णं सलवणं सहिङ्गु व्योषसंयुतम् ।
उष्णोदकेन तत् पीतं शूलं हन्ति त्रिदोषजम् ॥ ५८ ॥
तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ।
प्रयोज्यं मधुसर्पिर्भ्यां सर्वशूलनिवारणम् ॥ ५९ ॥
मूत्रान्तःपाचितां शुष्कां लौहचूर्णसमन्विताम् ।
सगुड़ामभयामद्यात् सर्वशूलप्रशान्तये ॥ ६० ॥

दाधिकं घृतम्—

पिप्पली नागरं बिल्वं कारवी चव्यचित्रकम् ।
हिङ्गुदाड़िमवृक्षाम्ल-वचाक्षाराम्लवेतसम् ॥

---

गोमूत्रशुद्धेत्यादि।—गोमूत्रे सप्तधा निर्वापणेन शुद्धं मण्डूरं मिलितत्रिफलाचूर्णसमं पञ्च-षट्-सप्तमाषकाणामन्यतममानेनोपयोज्यम् ॥ ५७ ॥

शङ्खचूर्णमित्यादि।—मन्दाग्नौ दग्धस्य शङ्खस्य चूर्णं शङ्खमिति। अत्र मात्रा कर्षिकं किञ्चिदधिकं वा, लवणव्योषयोः मिलित्वा माषद्वयं, हिङ्गुनो रक्तिद्वयं त्रयं वा विवेचितव्यः। अन्ये तु—भागानुक्तेः सर्वमेव सममिति वदन्ति। श्लेष्मोत्तरेऽयं योगः ॥ ५८ ॥

तीक्ष्णाय इत्यादि।—मारितशुद्धितस्य लौहचूर्णं कर्षं १, मात्रा ८, त्रिफलाचूर्णं प्रत्येकं मात्रा ८; मिलितचूर्णस्य मात्रा रति ४। एतन्मधुनो दत्त्वा लौहमुद्गरेण सम्मर्द्य भक्षयोग्यम्। मात्रादिविधिश्च लौहान्तरवत्। अन्ये तु—त्रिफलायाः एकभागसमं लौहचूर्णमिति वदन्ति। त्रिफलाक्वाथभावितलौहपत्रिकया चूर्णं योगो यदि क्रियते, तदा त्रि-त्रि-चतुर्माषकोपयोगः ॥ ५९ ॥

मूत्रान्तःपाचितामिति।—गोमूत्रेणोत्स्विन्नाम्। लौहचूर्णेन सहैव मूत्रे पाचितामित्यन्ये। शुष्कामित्यातपयोगात्। लौहचूर्णसमन्वितामिति—लौहचूर्णञ्च हरीतकीचूर्णसमम्। सगुड़ामिति—चूर्णद्वयसमगुड़ाम्। अन्ये तु—लौहचूर्णगुड़हरीतकीनां प्रत्येकं समत्वमित्याहुः ॥ ६० ॥

दाधिकघृते।—बिल्वं—बिल्वस्य मूलम्। क्षारश्चात्र सौवर्चलभेदः। उक्तं हि,—

वर्षाभूत्र्यूषणलवणमजाजी बीजपूरकम् ।
दधि त्रिगुणितं सर्पिस्तत्सिद्धं दाधिकम् घृतम् ॥
गुल्मार्शःप्लीहहृत्पार्श्व-शूलयोनिरुजापहम् ।
दोषसंशमनं श्रेष्ठं दाधिकं परमं स्मृतम् ॥
कम्बलाप्लुतगात्रस्य प्राणायामं प्रकुर्वतः ।
कटुतैलाक्तशक्तूनां धूपः शूलहरः परः ॥ ६२ ॥
व्यायामं मैथुनं मद्यं लवणं कटु वैदलम् ।
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान् नरः ॥ ६३ ॥

इति शूल-चिकित्सा ॥

---

## अथ परिणाम-शूलचिकित्सा ।

वमनं तिक्तमधुरैर्विरेकश्चापि शस्यते ।
बस्तयश्च हिताः शूले परिणाम समुद्भवे ॥ १ ॥

---

"न कालनवणे मद्यः शौचर्वलगुणो हि सः" इति । त्र्यार्द्र—महार्द्रकम्, बीजपूरकं—बीजपूरकमूलम् । दध्ना त्रिगुणेनैव पाकः । खरस्वीरसाग्रपर्णे-त्यादि परिभाषावचनन्तु चतुर्गुणजलदानार्थमुक्तम्, किन्तु प्रायो न समाद्रियन्ते ॥ ६१ ॥

कम्बलेत्यादि ।—प्राणायामनिश्वासावरोधनम् ॥ ६२ ॥

कटु वैदलमित्यत्र क्वचित् वैदलमिति पाठे—सर्वं जम्बलेन दद घ्नतीति युक्ति, वैदलविशेषणम् ॥ ६३ ॥

इति शूलचिकित्सा विवृतिः ।

---

शूलविशेषत्वात् परिणामशूलमाह, वमनमित्यादि ।—चकाराल्लङ्घनमपि बोध्यम् । तथा बस्तयोऽपि माधुतैलिकादयोऽत्र ज्ञेयाः । उक्तं हि—"लङ्घनं वमनं शस्तं विरेकानुवासनम् । निरूहो वाजिगन्धादिर्माधुतैलिकबस्तयः" इति । माधुतैलिकबस्तयश्च मधुतैलप्रधानाः सुश्रुतोक्ताः । उक्तं हि—"दशाम्बु च तैलञ्च प्राधान्येन

विडङ्गादिमोदकः ।

विडङ्गतण्डुलव्योषं त्रिवृद्दन्तीसचित्रकम् ।
सर्वाण्येतानि संहृत्य सूक्ष्मचूर्णानि कारयेत् ॥
गुडेन मोदकं कृत्वा भक्षयेत् प्रातरुत्थितः ।
उष्णोदकानुपानन्तु दद्यादग्निविवर्द्धनम् ॥
जयेत् त्रिदोषजं शूलं परिणामसमुद्भवम् ॥ २ ॥
नागरगुडतिलकल्कं पयसा संसाध्य यः पुमानद्यात् ।
उग्रं परिणतिशूलं तस्यापैति सप्तरात्रेण ॥ ३ ॥
शम्बूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात् ।
पक्तिजं विनिहन्त्येतच्छूलं विष्णुरिवासुरान् ॥ ४ ॥
अक्षधात्र्यभयाकृष्णा-चूर्णं मधुयुतं लिहेत् ।
दध्नालूनसरेणाद्यात् सतीनयवशक्तुकान् ॥
अचिरान्मुच्यते शूलान्नरोऽन्नपरिवर्त्तजात् ॥ ५ ॥
तिलनागरपथ्यानां भागं शम्बूकभस्मनाम् ।
द्विभागगुडसंयुक्तां गुडीं कृत्वाक्षभागिकाम् ॥
शीताम्बुपानं पूर्वाह्णे भक्षयेत् क्षीरभोजनः ।

---

प्रहीयते । माधुर्ये निकलितयेवं भिषग्भिर्विनिवध्यते ॥" तथामाशयस्थे दोषे लङ्घनवमने ; पक्वाशयस्थे तु विरेकनिरूहौ ; पक्वाशयस्थे चानुवासनमिति विषयविवेकः ॥ १ ॥

विडङ्गेत्यादौ ।—विडङ्गतण्डुलं—विडङ्गस्य निस्तुषसारभागः । मोदकत्वादत्र द्विगुणो गुडः । नागरेत्यादि ।—नागरादिकल्कमुत्कारिकावद् यवागूवद् वा क्षीरेण साधयित्वा भक्षयेत् । शुण्ठीचूर्णं कर्षं १, पुरातनगुड कर्षं १, तिलचूर्णं पल १, गव्यदुग्ध शराव २ ॥ २ ॥ ३ ॥

शम्बूकजमित्यादि ।—निर्मांसं शम्बूकमेकं दग्ध्वा भस्मीकृत्य उष्णाम्बुना घोलयित्वा सुतामप्यामुखकुहरेण पेयम् । अयं योगः कर्षे ॥ ४ ॥

अक्षेत्यादौ ।—अलूनसरेण अखण्डितसरभावेनेत्यर्थः । अनूनसरेणेति पाठे—अ एवार्थः । सतीनो वर्त्तुलकलायः । अन्नपरिणामोऽन्नपरिणामः ॥ ५ ॥

सायाह्ने रसकं पीत्वा नरो मुच्येत दुर्जयात्।
परिणामसमुत्थाच्च शूलाच्चिरभवादपि ॥ ६ ॥

शम्बूकं त्र्यूषणञ्चैव पञ्चैव लवणानि च।
समांशां गुडिकां कृत्वा कलम्बूकरसेन वा ॥
प्रातर्भोजनकाले वा भक्षयेत् तु यथाबलम्।
शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥ ७ ॥

यः पिबति सशरावं शष्कुलिकान् कलाययूषेण।
स जयति परिणामरुजं चिरजामपि किमुत नूतनजाम् ॥ ८ ॥

लौहचूर्णं वरायुक्तं विलीढं मधुसर्पिषा।
परिणामरुजं भक्षयेत् तन्मलं वा प्रयोजितम् ॥ ९ ॥

---

तिलेत्यादि।—तिलादीनां सम्भूयसमस्तानां समभागः। मिलितचर्णपादिकया च गुडस्य भागकम्। रसकमिति काढ़ारसम् ॥ ६ ॥

शम्बूकमित्यादौ।—कलम्बूकरसेन वेति—शम्बूकं पूर्वोक्तविधया। शम्बूकादिचूर्णं कलम्बूकरसेन संमर्द्य चतुर्माषिका गुडिका कार्या। अत्र केचिच्छम्बूकशब्देन शम्बूकभस्म वदन्ति, युक्तञ्चैतत् गन्धाकरमेवाहात्। तथाच—"मुषपञ्चलवणे व्योषचूर्णे शम्बूकभस्मनि। गुडिका पञ्चिरच्यधी कलम्बीरसर्दिता॥" इति। यमूमिति—यवक्षुद्। एकामिति—कियन्तम्। कलाययूषं वर्तुलकलाययूषः। अयं योगः पित्तकफयुक्ते शूले युक्तः ॥ ७ ॥ ८ ॥

लौहचूर्णमित्यादि।—वरा—त्रिफला। लौहचूर्णस्यैको भागः ३ त्रिफलायाश्च प्रत्येकं लौहचूर्णसमभागत्वम्। तन्मलं वेति।—लौहमलं, तदपि वरायुक्तमिति बोध्यम्। लौहमलस्य तु मिलितत्रिफलातुल्यभागः। मारितपुटितलौहचूर्णं मात्रा ८, त्रिफलाचूर्णं प्रत्येकं मात्रा ८। मध्ये तु लौहचूर्णस्य महावीर्यत्वात् व्याधिप्रत्यनीकत्वाच्च प्राधान्यमिति कृत्वा मिलितत्रिफलाचूर्णसमत्वमित्याहुः। तन्मते—लौहचूर्णं कर्षं १ तोला १, त्रिफलाचूर्णं प्रत्येकं तोला १, मिलितचूर्णात् प्रथमतो रक्तिचतुष्टयं गृहीत्वा घृतमधुभ्यां सममर्दं लेह्यम्। लौहान्तरवत् क्षीरं षड्गुणं चतुःषड्गुणं वाऽनुपेयम्। दिनद्वयानन्तरं रक्तिद्वयेन वृद्धिर्माषकद्वयं यावत्। सर्वमपरं लौहान्तरवत्। तथा शोधितमण्डूरं पल १, मिलितत्रिफलाचूर्णं पल १, ततो मिलितचूर्णात् ८ मात्रा मधुघृताभ्यां लेह्यम् ॥ ९ ॥

त्र्यूषणाभयालौहचूर्णं गुडेन सह भक्षयेत्।
पक्तिशूलं निहन्त्येतज्जठराण्यग्निमन्दताम्॥
आमवातविकारांश्च शोथञ्चैवापकर्षति॥ १०॥
पथ्यालोहरजःशुण्ठी-चूर्णं माक्षिकसर्पिषा।
परिणामरुजं हन्ति वातपित्तकफात्मिकाम्॥ ११॥

सामुद्राद्यं चूर्णम्—

सामुद्रं सैन्धवं क्षारो रुचकं रौमकं विड्म्।
दन्ती लौहरजः किट्टं त्रिवृच्छूरणकं समम्॥
दधिगोमूत्रपयसा मन्दपावकपाचितम्।
तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा।
जीर्णेऽजीर्णे तु भुञ्जीत मांसादि घृतसाधितम्॥
नाभिशूलं यकृच्छूलं गुल्मप्लीहकृतञ्च यत्।
विद्रध्यष्ठीलिकां हन्ति कफवातोद्भवं तथा॥
शूलानामपि सर्वेषामौषधं नास्ति तत्परम्।
परिणामसमुत्थस्य विशेषेणान्तकान्तकम्॥ १२॥
नारिकेलं सतोयञ्च लवणेन प्रपूरितम्।

---

त्र्यूषणेत्यादि।—प्रत्येकं समो भाग इति नियमः। अन्ये तु—मिलितत्र्यूषणचूर्णसमं लौहचूर्णमित्याहुः॥ १०॥

पथ्येत्यादि।—अत्रापि हरीतकीशुण्ठीमिलितचूर्णेन समं लौहचूर्णं ग्राह्यम्। प्रयोगश्च नवायसादिवदित्याहुः। नियमस्तु पथ्यादीनां त्रयाणां प्रत्येकं समभागतामाह॥ ११॥

सामुद्रमित्यादौ।—सामुद्र—करकचं, रुचकं—सौवर्चलं; रौमक—शमानदीभवं, तदभावे शाकम्भरीलवणम्। लौहरजश्च मारितपुटितं लौहचूर्णम्। किट्टञ्च गोमूत्रशोधितमण्डूरचूर्णम्। दधिगोमूत्रपयसेति।—दध्यादित्रयं मिलित्वा चतुर्गुणं मिलितचूर्णसमं वा दत्त्वा सर्वमेव चूर्णमेकीकृत्य पक्तव्यम् न चूर्णाभावात्। व्यवहारस्तु दध्यादिना चतुर्गुणेनैव॥ १२॥

विपाचयत्यग्निना सम्यक् परिणामजशूलनुत् ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ १३ ॥

सप्तामृतं लौहम्—

मधुकं त्रिफलाचूर्णमयोरजः समं भिषक् ।
मधुसर्पिर्युतं सम्यग् गव्यं क्षीरं पिबेदनु ॥
छर्दिं सतिमिरां शूलमम्लपित्तं ज्वरं क्लमम् ।
आनाहं मूत्रसङ्गञ्च शोथञ्चैव निहन्ति सः ॥ १४ ॥

गुड़पिप्पलीघृतम्—

सपिप्पलीगुड़ं सर्पिः पचेत् क्षीरचतुर्गुणे ।
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम् ॥ १५ ॥

पिप्पलीघृतम्—

क्वाथेन कल्केन च पिप्पलीनाम्
सिद्धं घृतं माक्षिकसम्प्रयुक्तम् ।
क्षीरानुपानञ्च निहन्त्यवश्यम्
शूलं प्रवृद्धं परिणामसंज्ञम् ॥ १६ ॥

कोलादिमण्डूरम्—

कोलाग्निचव्यकत्र्यूषणवेरचपलानागरैः समं चूर्णितम्
मण्डूरं सुरभीजलेऽष्टगुणिते पक्त्वाथ सान्द्रीकृतम् ।
तं खादेदशनादिमध्यविरतौ प्रायेण दुग्धान्नभुग्-
जीर्णं वातकफामयान् परिणतौ शूलञ्च गुल्मानि च ॥ १७ ॥

---

[illegible] ।—[illegible] दुरहम् ॥ १३ ॥

[illegible] ।—[illegible] क्षीरम् । [illegible] ॥ १४ ॥

[illegible]—[illegible] ॥ १५ ॥

[illegible] ।—[illegible] ॥ १६ ॥

[illegible] ।—कोला—[illegible]; [illegible]—[illegible]; [illegible]—[illegible] । [illegible]
[illegible] ।—[illegible] मण्डूरम् । सुरभीजले—गोमूत्रे । [illegible]

### भौमघटकमण्डूरम् ।

कोलाग्र्यग्निकसहितैर्विश्वौषधमागधीयचव्यैः ।
प्रस्थमयोमलरजसां पलिकांशैश्चूर्णितैर्मिश्रैः ॥
अष्टगुणमूत्रयुक्तं क्रमपाकात् पिण्डतां नयेत् सर्वम् ।
कोलप्रमाणवटिकास्तिस्रो भोज्यादिमध्यविरतौ च ॥
रससर्पिर्यूषपयोमांसैरश्नन् नरो निवारयति ।
अन्नविवर्त्तनशूलं गुल्मं प्लीहाग्निसादांश्च ॥ १८ ॥

### क्षीरमण्डूरम्—

लौहकिट्टपलान्यष्टौ गोमूत्रार्द्धाढ़के पचेत् ।
क्षीरप्रस्थेन तत् सिद्धं पक्तिशूलहरं नृणाम् ॥ १९ ॥

### चविकादिमण्डूरम्—

लौहकिट्टपलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत् ।
चविकानागरक्षार-पिप्पलीमूलपिप्पलीः ॥
सचूर्णं निक्षिपेत् तस्मिन् पलांशाः सान्द्रतां गते ।
गुड़िकाः कल्पयेत् तेन पक्तिशूलनिवारिणीः ॥ २० ॥
मण्डूरं भावितं पथ्यैः लौहजा वा गुड़ेन तु ।
भक्षयेन्मुच्यते शूलात् परिणामसमुद्भवात् ॥ २१ ॥

---

इति मण्डूरापेक्षया । आमशपाके कोलादिचूर्णं प्रक्षेप्यम् । समुदितचूर्णापेक्षयाऽष्टगुणं गोमूत्रमित्याहुरन्ये । शूलमिति—आग्निमारुतिकं, शूलानि चेति वातजादीनि ॥ १७ ॥

भौमघटकमण्डूरे ।—कोलप्रमाणा इति ।—मिलित्वा अष्टमाषकमानाः । तेनाष्टमाषकेनैव तिस्रो वटिकाः कार्याः । व्यवहारस्तु हि त्रि-चतुर्माषकैरिति । यद्यपि मूत्रस्याष्टगुणत्वं पूर्ववत् । अन्नविवर्त्तनशूलं—परिणामशूलम् ॥ १८ ॥

क्षीरमण्डूरं स्पष्टम् ॥ १९ ॥

लौहकिट्टेत्यादौ ।—चविकास्थाने चव्यपाठेऽपि चविकैवार्थः, हस्तिपिप्पली इत्यन्ये ॥ २० ॥

शतावरीमण्डूरम्—

संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम्।
शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः।
विपचेत् सर्वमेकध्यं यावत् पिण्डत्वमागतम्॥
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा।
वातात्मकं पित्तभवं शूलञ्च परिणामजम्।
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः॥ २२॥

तारामण्डूरगुडः—

विडङ्गं चित्रकं चव्यं त्रिफलात्र्यूषणानि च।
नवभागानि चैतानि लौहकिट्टसमानि च॥
गोमूत्रं द्विगुणं दत्त्वा मण्डूराच्छर्कगुडान्वितम्।
शनैर्मृद्वग्निना पक्त्वा सुसिद्धं पिण्डतां गतम्॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत् कोलमात्रया।
माद्यश्चाम्लक्रमेणैव भोजनस्य प्रयोजितः॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्।
कामलां पाण्डुरोगञ्च शोथं मन्दाग्नितामपि॥
अर्शांसि ग्रहणीदोषं क्रिमिगुल्मोदराणि च।
नाशयेदम्लपित्तञ्च स्थौल्यञ्चैवापकर्षति॥

---

मण्डूरमित्यादौ।—षोडश पलो अश्वगन्धादिना सामान्यषोडशा वा पलो पुटादि-शोधिता ग्राह्या॥ २१॥

शतावरीमण्डूरे।—अग्रतोऽपि वेति।—वाशब्दः समुच्चये, तेन भोजनान्ते भोजनमध्ये भोजनस्याग्रतश्च भक्षयेत् इत्यर्थः॥ २२॥

तारामण्डूरे—नवभागानि चैतानीति।—विडङ्गादीनां प्रत्येकमेकभागतया नव भागा ग्राह्याः, द्रव्यसंस्कारात्; ते चासन्नपाके प्रक्षेप्याः। लौहकिट्टसमानि चेति।—लौहकिट्टस्यापि नवभागत्वम्। गोमूत्रं द्विगुणमिति।—मिलितचूर्णात्। अत्र पलो-

वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च ।
पक्तिशूलान्तको ह्येष गुडो मण्डूरसंज्ञकः ॥
शूलार्त्तानां कृपाहेतोस्तारया परिकीर्त्तितः ॥ २३ ॥

राममण्डूरम्—

वह्निरं श्वेतवाट्यालं मधुपर्णी मयूरकम् ।
तण्डुलीयञ्च कर्षांशं दत्त्वाधश्चोर्द्ध्वमेव च ॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनद्वयम् ।
भस्त्रवायुमदग्धञ्च तथा स्थाप्यं दिनत्रयम् ॥
विचूर्ण्य द्विगुणेनैव गुडेन सुविमर्द्दितम् ।
भोजनस्यादिमध्यान्ते भक्ष्यं कर्षं त्रिभागतः ॥
तक्रानुपानं वर्ज्यञ्च वार्य्यमन्नकमत्र तु ।
अम्लपित्ते च शूले च हितमेतद् यथाऽमृतम् ॥ २४ ॥

बृहच्छतावरीमण्डूरम्—

शतावरीरसप्रस्थे प्रस्थे च सुरभीजले ।
अजायाः पयसः प्रस्थे प्रस्थे धात्रीरसस्य च ॥
लौहकिट्टपलान्यष्टौ शर्करायाश्च षोड़श ।
गन्धाश्मकुड़वञ्चैव पचेन्मृदग्निना शनैः ॥
सिद्धशीते घटे नीते चूर्णानीमानि दापयेत् ।
विड़ङ्गत्रिफलाव्योष-यमानीगजपिप्पली-
द्विजीरकघनानाञ्च श्लक्ष्णचूर्णसमानि च ।

---

भिक्षागतमानत्वात् तदेव व्यवहारात्र देयुक्तम्। मूत्रादिकगुडान्वितमिति ।—सर्वचूर्णसमो गुड इत्यर्थः। कोलमात्रमिति अष्टमाषकमात्रेण ॥ २३ ॥

वह्निरमित्यादि ।—वह्निरं—सूर्य्यावर्त्तः ; मधुपर्णी—गुड़ूची ; मयूरकम्—अपामार्गः । "पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनद्वयम्" इति ।—गोमूत्रमष्टगुणं दत्त्वा दिनद्वयं पक्तव्यं, यथा मण्डूरं न दह्यते। गोमूत्रन्तु एकदैव अष्टगुणं न देयं, तथा सत्युत्थान-धारणं कर्त्तुमशक्यमिति। अवतार्य्य शरावेण पिधाय दिनत्रयं स्थाप्यम् ; तदनु प्रक्षाल्य

खादेदग्निबलापेची भोजनादौ विचक्षणः ॥
निहन्ति पक्तिशूलञ्च अम्लपित्तं सुदारुणम्।
रक्तपित्तञ्च शूलञ्च पाण्डुरोगं हलीमकम् ॥ २५ ॥

रसमण्डूरम्—

कुडवं पथ्याचूर्णं द्विपलं गन्धाभ्र लौहकिट्टञ्च।
शुद्धरसस्यार्द्धपलं भृङ्गस्य रसञ्च केशराजस्य॥
प्रस्थोन्मितञ्च दत्त्वा लौहे पात्रेऽथ दण्डसङ्घृष्टम्।
शुष्कं घृतमधुयुक्तं मर्दितं स्थाप्यञ्च भाजने स्निग्धे॥
उपयुक्तमेतदचिराद्विहन्ति वातकफपित्तजान् रोगान्।
शूलं तथाऽम्लपित्तं ग्रहणीञ्च कामलासुग्राम् ॥ २६ ॥

त्रिफलालौहः—

पथ्यामलकशिवानां स्वरसैर्यत् पक्वं सलोहजश्चूर्णम्।
सगुडं यद्युपभुङ्क्ते मुञ्चति शूली त्रिदोषजं शूलम् ॥ २७ ॥

---

शोधयित्वा ग्राह्यम्। अस्य कथं विभागत इति।—वर्णमेव मापमेव कृत्वा खादेत्; व्यवहारस्तु माषकचतुष्टयेन। माषांमषकमिति—बदरीतिन्तिडीफलादिकम्। रामकृत-वाहुम्मण्डूरमेतत् ॥ २४। २५॥

कुडवमित्यादौ।—गन्धाभ्र—शोधितगन्धकचूर्णं द्विपलं, तथा शोधितलौह-मलञ्च द्विपलमित्यर्थः। रसगन्धकौ कज्जलीकृत्य हरीतकीमण्डूरचूर्णाभ्यां सह मिश्रीकृत्य भृङ्गराजस्वरसं केशराजस्वरसञ्च प्रत्येकं प्रस्थमानं दत्त्वा लौहपात्रे लौहदण्डेनैव तावद्घर्षणीयं यावत् शुष्कप्रायं भवति। ततः पश्चात्, रक्तिचतुष्टयं वटिका घृतमधुभ्यां सम्मर्द्य सेव्यम्। क्षीरादिकमनुपेयम्। क्रमशः रक्तिद्वयं कृत्वा वृद्धिमांषकद्वय यावत् ॥ २६ ॥

पथ्यामलकेत्यादौ।—स्वरसैरिति।—मिलिता चतुर्गुणैः; प्रत्येकमित्यन्ये। व्यव-हारस्तु पूर्ववत्; स्वरसाभावे क्वाथः। सगुडमिति।—लौहरजःसमगुडम्। पाकश्चास्य मृदुः। तदुक्तं,—"गुडादि प्रविशेद्यत्र तत्र पाकश्च मृदुना"। लौहान्तरवद्विधिरत्र ॥२७॥

लौहगुड़िका ।

लौहस्य रजसो भागस्त्रिफलायास्त्रयस्तथा ।
गुड़स्याष्टौ तथा भागा गुड़ान्मूत्रं चतुर्गुणम् ॥
एतत् सर्वञ्च विपचेद्गुड़पाकविधानवित् ।
लिहेच्च तद् यथाशक्ति क्षये शूले च पाकजे ॥ २८ ॥

धात्रीलौहम्—

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य ।
यष्टीमधुकरजश्च द्विपलं दद्यात्कुपले घृतम् ॥
अमृताक्वाथेनैतच्चूर्णं भाव्यञ्च सप्ताहम् ।
चण्डातपेषु शुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम् ॥
घृतमधुना सह युक्तं भक्तादौ मध्यतोऽन्ते च ।
त्रीनपि वारान् खादेत् पथ्यं दोषानुबन्धेन ॥
भक्तस्यादौ नाशयति व्याधीन् पित्तानिलोद्भवान् ।
मध्येऽन्नविष्टम्भं जयति नृणां विदह्यते नान्नम् ॥
पानान्नकृतान् दोषान् भुक्तयन्ते शीलितं जयति ।
एवं जीर्य्यति चान्ने शूलं नृणां सुकष्टमपि ॥
हरति सहसा युक्तो योगश्चायं जरत्पित्तम् ।
चक्षुष्यः पलितघ्नः कफपित्तसमुद्भवान् जयेद्रोगान् ।
प्रसादयत्यपि रक्तं पाण्डुत्वं कामलां जयति ॥ २९ ॥

लौहामृतम्—

तनूनि लौहपत्राणि तिलोत्सेधसमानि च ।

---

लौहस्येत्यादि ।—भाग इति ।—एको भागः, त्रिफलायास्त्रय इति निश्चिता । लिहेच्च रक्तिचतुष्टयादिक्रमेणेत्याहुः ॥ २८ ॥

धात्रीत्यादि ।—अमृताक्वाथेन—आमलकीक्वाथेन । अन्ये त्वमृतां गुडूचीमाहुः । व्यवहारस्तु पूर्ववत् । जरत्पित्तम्—अम्लपित्तम् ॥ २९ ॥

दर्शयति, मुष्टिं बध्नाति दिवारात्रावुत्थानं भवति, ऊर्द्धं निरीक्षते।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पिष्टकेन पुत्तलिकां कृत्वा शुक्लौदनं, शुक्लपुष्पं, पीतपुष्पं, रक्तपुष्पं, गन्धताम्बूलानि, दश दीपाः, दश पीतध्वजाः, दश स्वस्तिकाः, दश वटकाः, क्षीरजम्बुड़िकाः, मत्स्यमांससुराः,—आग्नेय्यां दिशि निष्क्रान्ते मध्याह्ने बलिर्दातव्यः; ततः शान्त्युदकेन स्नापयेत्; शिवनिर्माल्यरसोनगुग्गुलुसर्पनिर्मोकनिम्बपत्रघृतैर्धूपं दद्यात्। "ओँ नमो रावणाय, अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ६७॥

सप्तमे दिवसे मासे वर्षे वा यदा गृह्णाति शुष्करेवती नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, मुष्टिं बध्नाति, रोदिति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

रक्तपुष्पं, शुक्लपुष्पं, गन्धताम्बूलं, रक्तौदनं, कृशराः, त्रयोदश स्वस्तिकाः, त्रयोदश शष्कुलिकाः, जम्बुड़िका, मत्स्यमांससुराः, त्रयोदश ध्वजाः, पञ्च प्रदीपाः,—पश्चिमायां दिशि ग्रामनिष्क्रामेऽपराह्णे वृक्षमाश्रित्य बलिर्दातव्यः; ततः शान्त्युदकेन स्नापयेत्; गुग्गुलुमेषशृङ्गीसर्षपोशीरवालकघृतैर्धूपं दद्यात्। "ओँ नमो रावणाय, दीप्ततेजसे अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ६८॥

---

षष्ठ इत्यादौ।—क्षीरजम्बुड़िकाः,—क्षीरमिश्रिताः शिवमाषाः॥ ६७॥

सप्तम इत्यादौ—रक्तौदनं—रक्तशाल्यादिभक्तम्, अलक्तकादिरञ्जितभक्तं वा। कृशरा—तिलतण्डुलनिर्मितयवागूः। ग्रामनिष्क्रामे—ग्रामप्रान्ते॥ ६८॥

अष्टमे दिवसे मासे वर्षे वा यदि गृह्णाति अर्थ्यका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गृध्रगन्धः, पूतिगन्धश्च जायते, आहारं न गृह्णाति, गात्रमुद्वेजयति।

बलिं तस्य प्रवक्ष्यामि यतः सम्पद्यते शुभम्।

रक्तपीतध्वजाः, चन्दनं, पीतपुष्पं, शष्कुल्यः, पर्पटिकाः, मत्स्यमांससुराः, जम्बुड़िकाः,—प्रत्यूषे बलिं दद्यात् प्रान्तरे। "ओँ नमो रावणाय त्रैलोक्यविद्रावणाय चतुर्दिशमोक्षणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च दह दह ओँ क्रीँ फट् स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ६८॥

नवमे दिवसे मासे वर्षे वा यदि गृह्णाति सूतिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। नित्यं छर्दयति, गात्रभेदं दर्शयति, मुष्टिं बध्नाति, निद्राऽतितरा स्यात्।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां निर्माय शुक्लवस्त्रेण वेष्टयेत्। शुक्लपुष्पं, शुक्लौदनं, गन्धताम्बूलं, शुक्लत्रयोदशध्वजाः, त्रयोदश प्रदीपाः, त्रयोदश स्वस्तिकाः, त्रयोदश पुत्तलिकाः, मत्स्यमांससुराः,—उत्तरदिग्विभागे ग्रामनिष्क्रामे बलिं दापयेत्; शान्त्युदकेन स्नापयेत्; गुग्गुलुनिम्बपत्रगोधूमगोशृङ्गश्वेतसर्षपघृतैर्धूपं दद्यात्। "ओँ नमो रावणाय चतुर्भुजाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ७०॥

दशमे दिवसे मासे वर्षे वा यदि गृह्णाति निर्ऋता नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्र-

मुद्वेजयति, आत्कारं करोति, रोदिति, वघ्नाति मूत्रं, पुरीषञ्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पारावारमृत्तिकां गृहीत्वा, पुत्तलिकां निर्माय, गन्ध-ताम्बूलं, रक्तपुष्पं, रक्तचन्दनं, पञ्चवर्णपञ्चध्वजाः, पञ्च प्रदीपाः, पञ्च स्वस्तिकाः, पञ्च पुत्तलिकाः, मत्स्यमांससुराः,—वायव्यां दिशि बलिं दद्यात्; काकविष्ठा-गोमांस-गोशृङ्ग-रसोन-मार्जार-रोम-निम्बपत्र-घृतैर्धूपयेत्। "ओँ नमो रावणाय चूर्णितहस्ताय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ७१॥

एकादशे दिवसे मासे वर्षे वा यदि गृह्णाति पिलिपिच्छिका नाम मातृका; तया गृहीतमात्रेण प्रथमं भवति ज्वरः। आहारं न गृह्णाति, ऊर्द्धदृष्टिर्भवति, गात्रभङ्ग आत्कारश्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पिष्टकेन पुत्तलिकां कृत्वा रक्तचन्दनरक्तञ्च तस्या मुखं दुग्धेन सिञ्चेत्। पीतपुष्पं, गन्धताम्बूलं, सप्त पीतध्वजाः, सप्त प्रदीपाः, अष्टौ वटकाः, अष्टौ शष्कुलिकाः, अष्टौ पूपिकाः, मत्स्यमांससुराः,—पूर्वस्यां दिशि बलिर्दातव्यः; शान्त्युदकेन स्नापयेत्; शिवनिर्माल्यगुग्गुलुगोशृङ्गसर्पनिर्मोकघृतैर्धूपयेत्। "ओँ नमो रावणाय, अमुकस्य व्याधिं मुञ्च मुञ्च स्वाहा"। चतुर्थे दिवसे विप्रान् भोजयेत्। तेन सम्पद्यते शुभम्॥ ७२॥

द्वादशे दिवसे मासे वर्षे वा यदि गृह्णाति कामुका नाम मातृका; तया गृहीतमात्रेण प्रथमं भवति ज्वरः। विहस्य वादयति, अङ्गुल्या तर्जयति, गृह्णाति, क्रामति, निःश्वसिति, मुहुर्मुहुश्छर्दयति, आहारं न करोति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

चौरेण पुत्तलिकां कृत्वा शुक्लकुसुमं, गन्धताम्बूलं, शुक्ल-सप्तध्वजाः, सप्त शष्कुलिकाः, सप्त प्रदीपाः,—करम्भकेण सर्वकर्म-बलिं दद्यात्। शान्त्युदकेन स्नापयेत्। श्वेतसर्षपगुग्गुलु-शिवनिर्माल्यघृतैर्धूपयेत्। "ओँ नमो रावणाय, अमुकस्य व्याधिं मुञ्च मुञ्च हन हन स्वाहा"। चतुर्थे दिवसे विप्रान् भोजयेत्। तेन सम्पद्यते शुभम् ॥ ७१ ॥

इति रावणकृतं कुमारतन्त्रं समाप्तम् ॥

इति बालरोग-चिकित्सा ॥

---

## अथ विष-चिकित्सा।

अरिष्टाबन्धनं मन्त्रप्रयोगश्च विषापहः।
दंशनं दंशकस्याहेः फलस्य मृदुनोऽपि वा ॥ १ ॥

---

अष्टमनवमदशमैकादशाः स्पष्टाः। वादयी—वादयतीति—घण्टावती, दीप्तिनीति पाठान्तरम्। चौरेणेति—पाकात् पिण्डीभूतेन चौरेणेत्यर्थः। करम्भकेण दधिमिश्रित-भक्तेन ॥ ७१ ॥

इति बालरोग चिकित्सा-विवृतिः।

---

इदानीमातुरहितचिकित्सापरिशेषात् विषचिकित्सामाह, अरिष्टेत्यादि।—अरिष्टाबन्धनं—धमनीबन्धः, स च दंशदेशादूर्ध्वं चतुरङ्गुले। यदाह वाग्भटः,—"दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले। क्षौमादिभिर्वल्कलैर्वा सिद्धमन्त्रेण मन्त्रितम् ॥" इति। दंशकस्याहेरिति।—दंशकर्तुः सर्पस्य दंशनं दन्तपंक्तिदर्शनार्थमतिपीडनम्; एवं मृदुफलस्यापि। एतच्च सुकुमारद्रव्योपलक्षणं, तेन रम्भामृणालकाण्डाद्यपि बोध्यम्। तत्र सर्वत्र विषसंक्रमश्च भवतीति भावः। यदुक्तं ग्रन्थे—"धन्यो दष्ट-विषो न भोगिनमसौ प्राप्नोति दष्टो यदा, रम्भाखण्डमृणालकोमलफलं दन्तैर्दशत्याशु यत्। गच्छेत् तत्क्षणमेव तस्य गरलं तद्दष्टवस्त्वन्तरं, दंष्ट्रे भीरसतां नयेत बहुधा सम्मर्द्य हस्तेन वा ॥" इति ॥ १ ॥

मूलं तण्डुलवारिणा पिबति यः प्रत्यङ्गिरासम्भवम्
निष्पिष्टं शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः ।
दर्पादेव फणी यदा दशति तं मोहान्वितो मूलपम्
स्थाने तत्र स एव याति नियतं वक्त्रं यमस्याचिरात् ॥ २ ॥

मसूरं निम्बपत्राभ्यां खादेन्मेषगते रवौ ।
अब्दमेकं न भीतिः स्याद्विषात् तस्य न संशयः ॥
धवलपुनर्नवजटया तण्डुलजलपीतया च पुष्यर्क्षे ।
अपहरति विषधरविषोपद्रवमावत्सरं पुंसाम् ॥ ३ ॥

गृहधूमो हरिद्रे द्वे समूलं तण्डुलीयकम् ।
अपि वासुकिना दष्टः पिबेद्दधिघृताप्लुतम् ॥
कुलिकामूलनस्येन कालदष्टोऽपि जीवति ॥ ४ ॥

श्लेष्मणः कर्णगूथस्य वामानामिकया क्षतः ।
लेपो हन्याद्विषं घोरं नृमूत्रसेचनं तथा ॥ ५ ॥

---

मूलमित्यादौ ।—प्रत्यङ्गिरा—कण्टकीशिरीषः । शुचिरापाढस्तस्य भद्रयोगदिवसे शुभयोगनक्षत्रादियुक्तदिने, पुष्यानक्षत्रादियुक्तदिने इत्यन्ये ॥ २ ॥

मसूरमित्यादि ।—मसूरगुडकमिदं, निम्बस्य द्वे पत्रे, तृतीया सहार्थे । मेषगते रवौ वैशाखे । धवलेत्यादि—स्पष्टम् ॥ ३ ॥

गृहधूम इत्यादौ ।—तण्डुलीयकमिति—केवलतण्डुलीयकमूलमपि बोध्यम् । तदुक्तं विन्दुसारे—"तण्डुलीयकमूलन्तु पीतं तण्डुलवारिणा । तक्षकेणापि संदष्टं निर्विषं कुरुते नरम् ॥" इति । कुलिकेत्यादि ।—कुलिकः,—कालाकडभेदः, स्वल्पफलः कुडकराणि इति ख्यातः । उपदेशात् तण्डुलोदकेन नस्यं कार्य्यम् । केचित् पानं वदन्ति ॥ ४ ॥

श्लेष्मण इत्यादि ।—योगद्वयम् । श्लेष्मण इति—मुखस्थितश्लेष्मण इत्येकः, कर्णगूथस्येति द्वितीयः । वामानामिकया क्षत इति ।—कनिष्ठाङ्गुलीसमीपे या अङ्गुली, सा अनामिकेत्युच्यते । वामहस्तस्य अनामिकाङ्गुल्या क्षत इत्यर्थः । नृमूत्रसेचनं दंशदेशे स्त्रीयमूत्रसेकः । उक्तं हि—"सर्पदष्टप्रदेशे तु स्वयमेव विचक्षणः । मूत्रयेत् तत्क्षणादेव निर्विषत्वमवाप्नुयात् ॥" इति । अयं तृतीयो योगः ॥ ५ ॥

शिरीषपुष्पस्वरसे भावितं मरिचं सितम् ।
सप्ताहं सर्पदष्टानां नस्यपानाञ्जने हितम् ॥ ६ ॥
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतुःपलम् ।
अपि तक्षकदष्टानां पानमेतत् सुखावहम् ॥ ७ ॥
वन्ध्यकर्कोटजं मूलं छागमूत्रेण भावितम् ।
नस्यं काञ्जिकसंयुक्तं विषोपहतचेतसः ॥ ८ ॥

त्रिवृद्विशल्या मधुकं हरिद्रे
मञ्जिष्ठवर्गो लवणञ्च सर्वम् ।
कटुत्रिकञ्चैव विचूर्णितानि
शृङ्गे निदध्यान्मधुसंयुतानि ॥
एषोऽगदो हन्त्युपयुज्यमानः
पानाञ्जनाभ्यञ्जननस्ययोगैः ।
अवार्यवीर्यो विषवेगहन्ता
महागदो नाम महाप्रभावः ॥

---

शिरीषेत्यादि ।—वाग्भटस्य ।—मरिचं सितमिति—श्वेतमरिचम् । अयमेव पाठश्चक्रटीकायां दृश्यते । अत श्वेतसर्षपमिति पाठान्तरमयुक्तम् ॥ ६ ॥

द्विपलमित्यादि ।—वाग्भटस्य ।—षट्पलीय मात्रा सर्पदष्टविषये विशेषविहितत्वात् न दोषावहेति ॥ ७ ॥

वन्ध्येत्यादि ।—वन्ध्य,—फलरहित कर्कोटकः ॥ ८ ॥

त्रिवृदित्यादि ।—सुश्रुतस्य ।—विशल्या—दन्ती, काष्ठपाटला वा ; विशाखेति पाठे—गोरक्षकर्कटी । मञ्जिष्ठावर्गः,—मञ्जिष्ठासहितोऽयमेव त्रिवृदादिवर्ग इत्यर्थः । अन्ये तु—मञ्जिष्ठावर्गं पृथगेव पठन्ति ; तच टीकाकारैर्न व्याख्यातम् । वङ्गसेनस्तु—"त्रिवृद्विशल्या मधुकं हरिद्रे, रक्ता नरेन्द्री लवणश्च वर्गः" इति पठति, व्याचष्टे च—विशल्या—दन्ती, काष्ठपाटला वा ; रक्ता—मञ्जिष्ठा ; नरेन्द्र,—आरग्वधः ; लवणवर्गः,—लवणपञ्चकमिति । शृङ्गे इति—गोशृङ्गे, निदध्यादिति—पक्षमेकं स्थापयेत् । एतच्च गोशृङ्गे पक्षैकं स्थापनं सौश्रुतस्यमानयोगे यथा दर्शनात् । यथा—"शृङ्गे

लेप इव भेकगरलं शिरोपवीजैः स्नुहीपयःसिक्तैः ।
हरति गरलं त्वग्हर्षयिताङ्कोठजटा कुष्ठसम्मिलिता ॥
मरिचमहौषधबालकनागाह्वैर्मक्षिकाविषे लेपः ।
लालाविषमपनयतो मूले मिलिते घटोलनीलिकयोः ॥
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपाद्यपि ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥
वचाहिङ्गुविडङ्गानि सैन्धवं गजपिप्पली ।
पाठा-प्रतिविषा-व्योषं काश्यपेन विनिर्मितम् ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ।
कीटदष्टक्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥ २१ ॥

सर्वविषघ्नोऽगदः,—

पृक्काश्वस्थौणेय-काचीशैलेयरोचनातगरम् ।
ध्यामककुङ्कुममांसी-सुरसाग्रैलालकुष्ठघ्नम् ॥
बृहतीशिरीषपुष्प-श्रीवेष्टकपद्मचारटीविशालाः ।
सुरदारुपद्मकेशर-शावरकमनःशिलाकौन्त्यः ॥
जात्यर्कपुष्पसर्षप-रजनीद्वयहिङ्गुपिप्पलीलाक्षाः ।
जलमुद्गपर्णीचन्दनमधुकमदनसिन्धुवाराश्च ॥

---

भेकविषचिकित्सामाह, लेप इत्यादि ।—भक्षिता—भक्षिता । क्वाथविधया कल्कविधया वा योज्यमेतत् । मरिचेत्यादौ ।—नागाह्वं—नागकेशरम् । लालाविषमिति—लालैव विषं लालाविषम् । नीलिका—रञ्जनद्रव्यविशेषः । सोमवल्कः,—कट्फलम् ; अश्वकर्णः,—शालभेदः, गर्दभाण्डी वा । गोजिह्वा—दार्वीशाकः, हंसपादी—हंसपादाकृतिः स्वनामख्याता । कीटविषचिकित्सामाह, वचेत्यादि ।—दशाङ्गस्य । पीत्वेति ।—क्वाथविधया कल्कविधया वा योज्यम् । अतिदेशेन जलौकाविषचिकित्सामाह, कीटदष्टेत्यादि ॥ २१ ॥

पृक्केत्यादौ ।—स्थौणेयं—ग्रन्थिपर्णम्, काची—सौराष्ट्रमृत्तिका, ध्यामकं—गन्धतृणम् ; सुरसाद्यं—निर्गुण्डीमञ्जरी, चार्लं—हरितालं, कुष्ठघ्नम्—एडगजः, श्रीवेष्टकः,—गन्धविरोजा, पद्मचारटी—कुष्माण्डलता । पद्मस्य केशरं किञ्जल्कः, शावरकः,—लोध्रः ; कौन्ती—रेणुका । जात्यर्कपुष्पमिति—जात्यर्कयोः पुष्पम् ; जल—

सम्पाकलोध्रमयूरक-गन्धफलीनाकुलीविड़ङ्गाय।
पुष्येणोद्धृत्य समं पिष्ट्वा गुड़िका विधेयाः स्युः॥
जन्तुविषघ्नो जयकृद् विषमृतसञ्जीवनो ज्वरनिहन्ता।
प्रेयविलेपनधारणधूमग्रहणैर्गृहस्थस्य॥
भूतविजयस्त्वलक्ष्मी-कार्मणमन्त्राम्न्यमन्यरीन् हन्यात्।
दुःस्वप्नस्त्रीदोषानकालमरणाम्बुचौरभयम्॥
धनधान्यकार्य्यसिद्धि-श्रीपुष्ट्यायुर्विवर्द्धनो धन्यः।
मृतसञ्जीवन एष प्रागमृताद् ब्रह्मणाभिहितः॥ २२॥

इति विष-चिकित्सा।

---

## अथ रसायनाधिकारः।

यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्॥ १॥

---

शालकम्, निर्गुण्ड्याकारः ग्रन्थिपत्र सिन्धुवार। सम्पाक,—आरग्वधः, तस्य फलं ग्राह्यम्। लोध्र—लोहितलोध्रम्, मयूर,—अपामार्गः, गन्धफली—प्रियङ्गुः, नाकुली—रास्ना। पुष्ये—पुष्यानक्षत्रयुक्तकाले। जनत्व,—विषत्व, कार्मण—परद्रोहोपायः, मन्त्र,—अभिचारमन्त्र। अशनि,—वज्रम्। स्त्रीदोषाः,—सौभाग्यार्थ-जननादिदोषा. ॥ २२॥

इति विष चिकित्सा-विवृति.।

---

भेषजं तावद्द्विविधम्—आतुरहितं स्वस्थहितञ्च। स्वस्थहितमपि द्विविधं, रसायन वाजीकरणभेदात्। तत्रातुरहितं तावदुक्तमेव, सम्प्रति स्वस्थहितं वाच्यम्; तत्रापि वाजीकरणापेक्षया रसायनस्य सर्वजनप्रयोज्यत्वादिजनकतया महाफलकतया च प्रथमतो रसायनमाह, यदित्यादि।—जराव्याधिविध्वंसि—जराकृतव्याध्युत्पत्तिप्रति-बन्धकम्। एतेन विशिष्टफलजनकत्वे सति व्याधिनिवर्त्तकत्वं रसायनलक्षणमिति लक्षणं सूचितम्। अत्र रसशब्देन रसकार्यत्वात् समानाधिकरणत्वं ग्रहणम्, तत्रादिशब्दग्रहणात् कपालरत्नधीशादिषु नातिव्याप्तिः। ननु कुत्र न रसायनाधिकारी, यस्मात्

पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत् ॥ २ ॥
अविशुद्धशरीरस्य युक्तो रसायनो विधिः।
न भाति वाससि क्लिष्टे रङ्गयोग इवार्पितः ॥ ३ ॥
गुडेन मधुना शुण्ठ्या कृष्णया लवणेन वा।
द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी ॥
सिन्धूत्थशर्कराशुण्ठी-कणामधुगुडैः क्रमात्।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ ४ ॥
त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम्।
तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥

---

च, पूर्वे वयसीत्यादि।—तथा चान्यत्राप्युक्तं—"जरापक्वशरीरस्य व्यर्थमेव रसायनम्" इति। तत् कथं जराप्रशमनाय रसायनस्य? नैवं, जराशब्देनात्र अकालपलितं खालित्यञ्च भाविपलितमुच्यते, अतो नोक्तो दोषः। यत्तु च्यवनप्राशादौ वृद्धोऽभूत् पुनर्युवेति, अनेन वृद्धस्यापि रसायनप्रयोगात् जराप्रशमनमुक्तम्; तत् तपःप्रभावेणानुगृहीतरसायनस्य फलं, न रसायनमात्रस्येति। सुदान्तस्त्वाह—"रसायनञ्च स्वस्थातुरविषयम्। जरा च व्याधिश्च तद्विध्वंसितुं शीलं यस्य तद्रसायनम्। जरा हि स्वस्थत्वेन न पूर्वापरविरोधः अकालजराहरत्वाद्रसायनस्य। यत् तु च्यवनप्राशादौ वृद्धोऽभूत् पुनर्युवेति तत् तपःप्रभावानुगृहीतत्वेनाचिन्त्यसामर्थ्यात्। भेषजपदेन ध्यानमन्त्रादिकं व्यवच्छिनत्ति। ज्वरेति ज्वरातिसारादिभेषजं वाजीकरणं व्यवच्छिनत्ति। व्याधीति कपालरञ्जनकृष्णीकरणादिकञ्च व्यवच्छिनत्तीति" ॥ १ ॥

पूर्वे इत्यादि।—पूर्वे इति—यौवनप्रवेश एव। मध्य इति—यौवनमध्ये। वार्द्धके तु रसायनाविषयो भेषजवीर्य्यासहत्वात् जरापक्वशरीरत्वाच्च। शुद्धकाय इति—वमनविरेचनाभ्यां शुद्धशरीरः ॥ २ ॥

अविशुद्धे तथा फलं नास्तीति मत्वाह, अविशुद्धशरीरस्येत्यादि।—सुश्रुतस्य।—युक्त इति—प्रयुक्तः। क्लिष्ट इति—मलिने ॥ ३ ॥

प्रथमतः हरीतकीरसायनमाह, सिन्धूत्थेत्यादि।—वर्षासु हरीतकी मा ६, सैन्धव मा २ मिलनीया। शरदि हरीतकी मा ५, शर्करा मा ४ खाद्यम्; शीतलजलं पेयम्। हेमन्ते हरीतकी मा ५, शुण्ठी मा २, तप्तजलं पेयम्। शिशिरे हरीतकी मा ३, पिप्पली मा २, तप्तजलं पेयमिति ॥ ४ ॥

प्रभूतस्नेहमशनं जीर्णे तस्मिन् प्रयोजयेत् ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चापि समाः शतम् ॥ ५ ॥
पञ्चाष्टौ सप्त दश वा पिप्पलीः क्षौद्रसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ६ ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षार-भाविता घृतभर्जिताः ॥
प्रयोज्या मधुसम्मिश्रा रसायनगुणैषिणा ।
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयम् ॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ।
वैस्वर्यं पीनसं शोथं गुल्मं वातबलासकम् ॥ ७ ॥
जरणान्तेऽभयामेकां प्राग्भुक्ताद्द्वे बिभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्यामलकानि च ॥
प्रयोजयेत् समामेकां त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ ८ ॥

---

बैभीतकेत्यादौ।—यावतीं पचेदिति—कालादिभिर्यावतीम्, [illegible] निर्मलत्वमपि सूच्यते। जलेनेति—वर्षाम्भसा। [illegible] [illegible]। केचित् चरकव्याने एतन्नपि पठन्ति ॥ ५ ॥

पञ्चाष्टावित्यादि।—समेति वर्ष। [illegible] सूचयतीति यत्र। यद्यपि [illegible] विप्पली [illegible] मिति, तथापि [illegible] पिप्पलीनामभ्यासो [illegible] विरतः, [illegible] [illegible] निषेधो ज्ञेयः। रसायनगुणा- [illegible] ॥ ६ ॥

तिस्र इत्यादौ।—किंशुक,—पलाशः। क्षारमिति—क्षारोदकम्; भाविता इति— [illegible] ॥ ७ ॥

जरणान्त इति—[illegible]। प्राग्भुक्तादिति—भोजनादौ।—मधुसर्पिर्भ्यामिति [illegible] [illegible] सम्बध्यते ॥ ८ ॥

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुकस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण तु शङ्खपुष्पी॥ ८॥

पीताश्वगन्धा पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा।
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य शस्यस्य यथाऽम्बुवृष्टिः॥
धात्रीतिलान् भृङ्गरजोविमिश्रान् ये भक्षयेयुर्मनुजाः क्रमेण।
ते कृष्णकेशा विमलेन्द्रियाश्च निर्व्याधयो वर्षशतं भवेयुः॥

वृद्धदारकमूलानि श्लक्ष्णचूर्णानि कारयेत्।
शतावर्य्या रसेनैव सप्तरात्राणि भावयेत्॥
अक्षमात्रन्तु तच्चूर्णं सर्पिषा सह योजयेत्।
मासमात्रोपयोगेन मतिमान् जायते नरः।
मेधावी स्मृतिमांश्चैव वलीपलितवर्जितः॥ १०॥
हस्तिकर्णरजः खादेत् प्रातरुत्थाय सर्पिषा।
यथेष्टाहारचेष्टोऽपि सहस्रायुर्भवेन्नरः।

---

मण्डूकपर्ण्या इत्यादिना शङ्खपुष्प्या इत्यन्तेन चतुरो योगानाह। समूलपुष्प्या इति—गुडूच्याः शङ्खपुष्प्या वा विशेषणम्॥ ९॥

पीतेत्यादि।—शस्यस्य।—अश्वगन्धायाश्चूर्णं पयसा पिबेत्, घृतेन वातपित्ते, तैलेन वाते, सुखोदकेन वातकफे इत्याहुः। धात्रीत्यादौ।—तिलाश्च कृष्णाः, प्रशस्तत्वात्। भृङ्गरज इति निर्देशात् सान्तो भृङ्गरजःशब्दोऽपि भृङ्गराजवचनोऽस्तीत्युन्नीयते। क्रमेणेति—रसायनक्रमेण॥ १०॥

मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ।
मधुना त्वश्ववेगः स्याद् बलिष्ठः स्त्रीसहस्रगः।
मन्त्रश्चायं प्रयोक्तव्यो भिषजा चाभिमन्त्रणे॥

"ओँ नमो महाविनायकाय अमृतं रक्ष रक्ष, मम फलसिद्धिं देहि रुद्रवचनेन स्वाहा"।

धात्रीचूर्णस्य कंसं स्वरसपरिगतं क्षौद्रसर्पिःसमांशम्
कृष्णामानीसिताष्टप्रसृतयुतमिदं स्थापितं भस्मराशौ।
वर्षान्ते तत् समश्नन् भवति विपलितो रूपवर्णप्रभावै-
र्निर्व्याधिर्बुद्धिमेधास्मृतिबलवचनस्थैर्यसत्त्वैरुपेतः॥ ११॥

गुडूच्यपामार्गविडङ्गशङ्खिनी-
वचाभयाशुण्ठिशतावरी समा।
घृतेन लीढा प्रकरोति मानवम्
त्रिभिर्दिनैः श्लोकसहस्रधारिणम्॥ १२॥

सारस्वत(ब्राह्मी)घृतम्—

समूलपत्रामादाय ब्राह्मीं प्रक्षाल्य वारिणा।
उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत्॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत्।
औषधानि तु पेयाणि तानीमानि प्रदापयेत्॥

---

हस्तिकर्णेति।—हस्तिकर्णः,—हस्तिकर्णपलाशमूलम्। ओँ नम इत्यादिमन्त्रो हस्तिकर्णाद्युदितौषधीनामभिमन्त्रणाय। धात्रीत्यादौ।—कंसं चतुःषष्टिपलानि। स्वरसपरिगतमिति।—आमलकफलस्वरसेन भावितम्; भावना च एकविंशतिवारम्। क्षौद्रसर्पिःसमांशमिति।—धात्रीचूर्णापेक्षया प्रत्येकं समभागमित्यर्थः; तेन मधुघृतयोः प्रत्येकं चतुःषष्टिपलानि; मागध्यष्टौ पलानि; सितायाः शर्करायाः अष्टौ प्रसृतानि षोडश पलानीत्यर्थः। स्थापितं भस्मराशाविति—भस्मराशौ स्थापितं इति शेषः। वर्षान्ते इति—वर्षाकालान्ते, शरदीत्यर्थः॥ ११॥

गुडूचीत्यादौ।—शङ्खिनी—शङ्खपुष्पी। क्वचित् वचास्थाने हरीति पठ्यते, किन्तु वाग्भटे वचैव पठिता॥ १२॥

हरिद्रा मालती कुष्ठं त्रिवृता सहरीतकी।
एतेषां पालिकान् भागान् शेषाणि कार्षिकाणि तु॥
पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करा वचा।
सर्वमेतत् समालोड्य शनैर्मृद्वग्निना पचेत्॥
एतत्प्राशितमात्रेण वाग्विशुद्धिश्च जायते।
सप्तरात्रप्रयोगेण किन्नरैः सह गीयते॥
अर्द्धमासप्रयोगेण सोमराजीवपुर्भवेत्।
मासमात्रप्रयोगेण श्रुतमात्रन्तु धारयेत्॥
हन्त्यष्टादश कुष्ठानि अर्शांसि विविधानि च।
पञ्च गुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत्॥
वन्ध्यानाञ्चैव नारीणां नराणामल्परेतसाम्।
घृतं सारस्वतं नाम बलवर्णाग्निवर्द्धनम्॥ १३॥
कासश्वासातिसारज्वरपिड़ककटीकुष्ठकोठप्रकारान्
मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णशूलाक्षिरोगान्।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः॥
व्यङ्गवलीपलितघ्नं पीनसवैस्वर्य्यकासशोथघ्नम्।
रजनीक्षयेऽम्बु नस्यं रसायनं दृष्टिजननञ्च॥ १४॥

---

ब्राह्मीघृतं सप्तम्॥ १३॥

कासेत्यादौ।—पिड़कः,—पिड़का। यथा; क्रीमल्लीतिवत् कटीशब्देन कटीगता गृध्रस्यादय उच्यन्ते। पय इति—दुग्धं, पानीयं वा; सुश्रुते प्रातः क्षीरपानस्य जलपानस्यापि दर्शितत्वात्। यथा—"शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः। त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः॥"। प्रातरिति—प्रातः। अत्र चतुर्गुणजलशृतगव्यदुग्धस्य धारोष्णस्य वा एकद्वित्रिकर्षप्रभृति षोड़शपलं यावदित्यर्थः। व्यङ्गेत्यादौ।—अम्बुनस्यमिति।—अत्र नासिकया जलपानमष्टमाषकप्रभृति षट्पलं यावदित्याह।
चक्रपाणिना—"प्रसृतत्रयन्तु पातव्यं नासया नाधिकं मतम्" इति॥ १४॥

साध्यसाधनपरिमाणम्—

नागार्जुनो मुनीन्द्रः शशास यल्लोहशास्त्रमतिगहनम् ।
तस्यार्थस्य स्मृतये वयमेतद्विशदाक्षरैर्ब्रूमः ॥
मेने मुनिः स्वतन्त्रे यः पाकं न पलपञ्चकादर्वाक् ।
सुबहुप्रयोगदोषादूर्ध्वं च पलत्रयोदशकात् ।
तत्रायसि पचनीये पञ्चपलादौ त्रयोदशपलकान्ते ॥
लौहात् त्रिगुणा त्रिफला ग्राह्या षड्भिः पलैरधिका ।

---

यद्यपि सर्वरसायनश्रेष्ठत्वात् प्रथममेवामृतसारलौहाभिधानमुचितं तथापि सूचीकटाहन्यायेन रसायनान्तराण्यभिधाय बहुप्रपञ्चतया सम्प्रत्यमृतसारलौहमाह, नागार्जुन इत्यादि ।—तत्र मारणादिविधेरप्रशस्तत्वेन प्रथमं तदभिधानमनुचितम्; तथा दुरवबोधत्वेन साध्यसाधनपरिमाणविधेरेव गरीयस्त्वम्, अतः प्रथमं साध्यसाधनपरिमाणविधिर्वक्तव्यः । तत्र क्रियमाणलौहः पक्तव्य इत्याह, मेने मुनिरित्यादि ।—पलपञ्चकादर्वागित्यत्र संस्कारस्याल्पकालव्यापकतया बहुगुणत्वं न स्यादित्येव हेतुरुन्नेयः । ननु "पलादर्वाङ् न पक्तव्यं, ऊर्ध्वमपि पलाष्टकात्" इति योगरत्नाकरैरभिहितं, तत्कथं पलपञ्चकादर्वागित्याद्यभिहितम्? इत्यत आह, स्वतन्त्र इति ।—स्वतन्त्रे स्वीयशास्त्र एव, नान्यत्र, तेनायमर्थो न्यूनमानमपि शास्त्रान्तरीयं न विरोधमावहतीति भावः । अत एवाग्रे स्वयमपि पञ्चपलादिग्रहणनियमभङ्गं वक्ष्यति, एतेन यथा यथा मानस्यापकर्षस्तथा तथा वीर्यस्यापकर्षः, यथा यथा च परिमाणोत्कर्षस्तथा तथा च वीर्योत्कर्षः इति भावः । लौहसंस्कारकषायसाधनार्थं क्वाथपरिमाणमाह, तत्रायसीत्यादि ।—पचनीयेऽयसीति ।—पञ्चपलादित्रयोदशपलान्तलौहे यावत्परिमाणं लौहं पुटपक्व पलं यत्र तावत्परिमितलौहापेक्षया मिलिता त्रिगुणा त्रिफला ग्राह्याः । क्षिता पचनीय इति पाकार्थे, तेन पालिकादीनां ग्रहणं, न तु फलकुड्यालादीनाम् । षड्भिः पलैरधिकेति ।—एतेन लौहापेक्षया त्रिगुणोत्कर्षं प्रकृता या त्रिफला सा त्रिफला षट्पलैरधिका ग्राह्या; तेन पञ्चपले लौहे साध्ये लौहापेक्षया त्रैगुण्येन त्रिफलायाः पञ्चदश पलानि षट्पलेन सह मिलित्वा एकविंशतिपलानि भवन्ति । एवं षट्पललौहे साध्ये लौहापेक्षया त्रैगुण्येन त्रिफलाया अष्टादशपलानि षट्पलेन सह चतुर्विंशतिपलानि भवन्ति । एवं सप्तपलादिष्वपि बोध्यम् । ननु लौहस्य तावन्मारणस्थालीपाकपुटपाकनिष्पत्तिपाकाः सन्ति, तत्र कुत्र कियत् त्रिफलापरिमाणं कर्तव्यम्? इत्यतो विभज्य त्रिफलापरि-

मारणपुटनस्थालीपाकास्त्रिफलैकभागसम्पाद्याः ॥
त्रिफलाभागद्वितयं ग्रहणीयं लौहपाकार्थम् ॥ १५ ॥
सर्वत्राय: पुटनाद्यर्थेऽंशे शरावसंख्यातम्।
प्रतिपलमेव त्रिगुणं पाथः क्वाथार्थमादेयम् ॥ १६ ॥
सप्तपलादौ भागे पञ्चदशान्तेऽम्भसां शरावैश्च।
त्र्याद्यैकादशकान्तैरधिकं तद्वारि कर्त्तव्यम् ॥

---

मापं दर्शयति, मारणपुटनेत्यादि।—लौहमपेक्ष्य कृतत्रिगुणत्रिफलाद्रव्यं भुवषट्पलसहितमेव त्रिभागं कृत्वा तत्र भागद्वयं प्रधानभिषक्पाकार्थमवस्थाप्यम्; अपरैकभागेन लौहमारणस्थालीपाकपुटनानि कर्त्तव्यानीत्यर्थः ॥ १५ ॥

तदिह लौहमारणपुटनस्थालीपाकार्थगृहीतैकभागत्रिफलाक्वाथार्थं कियज्जलं देयमित्याह, सर्वत्रेत्यादि।—आदिशब्दान्मारणस्थालीपाकौ ग्राह्यौ। सर्वत्रेति।—पञ्चपलादित्रयोदशपलान्तनिखिलमाने। पुटनाद्यर्थेऽंशे इति।—पुटनमारणस्थालीपाकार्थगृहीतत्रिफलैकभागे प्रतिपलं शरावैरेव त्रिगुणं वारि देयमित्यर्थः। तत्र पञ्चपललौहे पुटनादिकर्मयथार्थस्थापितत्रिफलैकभागः सप्तपली भवति, तत्र जलमेकविंशतिशरावा इत्यर्थः। एवं षट्पलादिलौहेऽपि त्रिफलैकभागा अष्टौ पलादयः, तथा जलमपि चतुर्विंशतिशरावादय उन्नेयाः ॥ १६ ॥

किन्तु त्रिगुणतया अधिकमपि जलं देयं, तदर्थमाह सप्तपलादावित्यादि।—अस्यार्थः,—पञ्चमीयपञ्चपललौहादारभ्य त्रयोदशपलान्तलौहापेक्षया त्रैगुण्येन भुवषट्पलाधिकतया फलत्रयस्यैकविंशतिपलरूपं चतुर्विंशतिपलरूपं मानं वा; तस्य तृतीयभागैः पुटनादिकर्मयथार्थस्थापितैः सप्तपलाष्टपलादिक्रमगणनया लौहत्रयोदशपलान्तेन त्रिफलायाः पञ्चदश पलानि भवन्ति; तेषां क्वाथ प्रतिशरावघटाया यत् त्रिगुणं वारि देयं तत् त्रिफलासप्तपलादारभ्य त्रिफला पञ्चदशपलपर्यन्तं क्रमेण जलशरावत्रयमारभ्य एकादशपर्यन्तजलशरावैरधिकं विधेयमित्यर्थः। तेन सप्तपले त्रिफलाद्रव्ये जलशरावत्रयमधिकम्, अष्टपले च शरावचतुष्टयम्; एवं क्रमेण त्रयोदशपलान्तं ज्ञेयम्। एतद्वचनं स्पष्टीकरणार्थं पत्रिकां लिख्यते। लौहपल ५, मारणादिकर्मयथार्थस्थापितत्रिफलैकभाग पल ७, पाया श २१, अधिक श ३, मिलिता श २४। एवं षट्पललौहमारणादिकर्मयथार्थस्थापितत्रिफलैकभाग पल ८, पाया श २४, अधिक श ४, मिलिता श २८।

'तत्र चतुर्थो भागः शेषो निपुणैः प्रयत्नतो ग्राह्यः।
अयसः पाकार्थत्वात् स च सर्वस्मात् प्रधानतमः॥'
पाकार्थमश्मसारे पञ्चपलादौ त्रयोदश पलान्ते।
दुग्धशरावद्वितयं पादैरेकादिकैरधिकम्॥ १८॥
पञ्चपलादिर्मात्रा तदभावे तदनुसारतो ग्राह्यम्।
चतुरादिकमेकान्तं शक्त्यावधिकं त्रयोदशकात्॥ १९॥

---

षोडशपलाष्टादशपलादयस्त्रिंशत्पलान्ता भवन्ति। तत्र त्रिफलायाः प्रतिपलम् एकशरावं जलं दातव्यम्; किन्तु सर्वत्रैव शरावद्वयमधिकं मुख्यत्वेन देयम्; तेन त्रिफलायाश्चतुर्दशपले षोडश वारिशरावाः क्वाथार्थं देयाः; षोडशपले चाष्टादश-जलशरावा इत्यादिक्रमेण बोद्धव्याः। स च क्वाथः कियदवशिष्टः स्थाप्यः?—इत्याह, तत्रेत्यादि।—प्रयत्नतो ग्राह्य इत्यत्र हेतुमाह, अयस इत्यादि।—चतुर्थावशिष्टक्वाथस्य निखिलकर्मप्रधाननिष्पत्तिपाकार्थत्वादित्यर्थः। स चेति—निष्पत्तिपाकः। सर्वस्मा-दिति—मारणपुटनादेः। प्रधाननिष्पत्तिपाकार्थं हि लौहे यथा त्रिफलाक्वाथो दीयते तथा दुग्धमपि; तत्र दुग्धं पञ्चपलादित्रयोदशपलान्तलौहेषु कुत्र कियन्मात्रं देयम्? इत्याह, पाकार्थमित्यादि।—अत्र एक आदिर्येषां पादानां शरावचतुर्थभागानां ते पादत्रयपर्यन्ताः एकादिकाः पादाः, तैरधिकं दुग्धशरावद्वयं पुटनान्तमौषधितःसारे लौहचूर्णे पञ्चपलादि-त्रयोदशपलान्ते पक्तव्ये यथाक्रमं पक्तव्यमित्यर्थः। तेन पञ्च-पललौहे पक्तव्ये सति सपाददुग्धशरावद्वयम्। षट्पले तु—पादद्वयाधिकं दुग्ध-शरावद्वयम्; सप्तपले—पादत्रयाधिकं दुग्धशरावद्वयमित्यादिक्रमेण त्रयोदशपलपर्यन्त-मुन्नेयमिति॥ १८॥

अथ लौहस्य पञ्चपलादिमात्राकरणे यदि शक्तिर्नास्ति, तदा पञ्चपलादर्वागपि एकपलादिचतुःपलपर्यन्तं लौहपाकः कर्त्तव्यः, तथा यथाशक्तिसम्भवे त्रयोदश-पलादुपर्य्यपि चतुर्दशपलादिलौहस्य पाकः कर्त्तव्य इत्यर्थमाह, पञ्चपलादिरित्यादि। चतुरादिकमेकान्तमिति—चतुर्विलोमकम्। अनेन एकपलादिचतुःपलान्ते लौहे तथा त्रयोदशपलादूर्द्ध्वं चतुर्दशपलादौ लौहे मारणादिकर्मनिर्वाहार्थम्, तथा प्रधान-निष्पत्तिपाकार्थञ्च कीदृशं क्वाथत्रिफलाया मानपदद्वयम्?—एतत्क्वाथार्थं जलदानं वा कीदृशम्?—स्थाप्यः शेषो वा कीदृशः?—प्रधाननिष्पत्तिपाकार्थं दुग्धदानं वा कीदृशम्?—तदर्थमाह, तदनुसारतो ग्राह्यमिति।—पञ्चपलादिलौहमारणायुक्त-

क्वाथादिमानानुसारेण इत्यर्थः। इदानीं तदनुसारेण द्रव्यस्य विवरणाय चक्री लिख्यते,— तत्रैकपले लौहे मारणादिकर्मार्थे षड्पलसहितत्रिफलायास्तृतीयभागः पलद्वयं भवति; प्रतिपलञ्च जलशरावत्रयवृद्धिरेवा, ततस्तदनुसारात् प्रतिपलञ्च जलशरावत्रैगुण्यात् क्वाथार्थमपि नव जलशरावा भवन्ति। तथा सप्तपलादौ भाग द्वयेनैव त्रिफलासप्तपलादिभागेषु च क्रमात् त्रिचतुरादिजलशरावव्रद्धिरेवा, ततस्तदनुसारात् पञ्चपलादर्वागपि क्रमेण पादद्वयं ह्रासयेत्। तेनैकपललौहस्य मारणादिकर्मार्थे गृहीतत्रिफलायास्तृतीयभागे चपरोऽपि जलशराव एको मुष्टलेन देयो भवति, अतः पूर्वोक्तनवजलशरावैर्मिलित्वा दश शरावा इति सिद्धम्। तथा द्विपललौहे—कर्मार्थे षड्पलसहितत्रिफलायास्तृतीयो भागः पलचतुष्टयी भवति। प्रतिपलञ्च जलशरावत्रैगुण्यात् द्वादश जलशरावाः, तथा सप्तपलादौ भाग इति वचनानुसारेणापरोऽपि पादद्वयाधिकजलशराव एको मुष्टलेन देयो भवति; अतो मिलित्वा सार्द्धत्रयोदश जलशरावा भवन्ति। एवं त्रिपललौहे—कर्मार्थे षड्पलसहितत्रिफलायास्तृतीयभागे पञ्च पलानि भवन्ति; प्रतिपलञ्च जलशरावत्रैगुण्यात् पञ्चदशजलशरावाः, सप्तपलादौ भाग इति वचनानुसारादपरमपि जलशरावद्वयमधिकं मुष्टलेन देयम्; तेन मिलित्वा सप्तदशजलशरावाः। चतुःपललौहेऽपि कर्मार्थे षड्पलसहितत्रिफलायास्तृतीयभागे पलषट्कं भवति, प्रतिपलञ्च जलशरावत्रैगुण्यादष्टादश जलशरावाः, सप्तपलादौ भाग इत्यनुसारादपरमपि पादद्वयाधिकजलशरावद्वयमधिकं मुष्टलेन देयं भवति; तेन मिलित्वा जलस्य सार्द्धविंशतिशरावा भवन्ति। पञ्चपलादिलौहे च यत् क्वाथादिमानं तत् पूर्ववदेव विज्ञेयम्। त्रयोदशलौहपलादुपरि चतुर्दशपलादौ क्वाथेकादशभागेत्याद्यनुसारात् पूर्वः पूर्वापेक्षया शरावैकेन जलस्य वृद्धिः कर्त्तव्या; क्वाथस्याष्टमांशः शेषः, एवं सर्वत्रैव। प्रधाननिष्पत्तिपाकार्थमपि एकपललौहे च त्रिफलाया भागद्वयी षट्पलानि; "प्रतिपलमष्टगुणं स्यात्" इत्युक्तेः त्रिफलायाः क्वाथार्थं जलस्य षट् शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्याः, इति मिलित्वा अष्टौ जलशरावाः, चतुर्थभागावशेषादस्य क्वाथ्य शरावद्वयम्। पञ्चपललौहस्य प्रधानपाके तु—सपाददुग्धशरावद्वयीलोप एकपले तु लौहे क्रमात् पादह्रासेन सपाददुग्धशराव एको भवति। प्रधानपाकार्थं घृतमपि द्विगुणं त्रिगुणं चतुर्गुणं लौहापेक्षया, यथाप्रकृतिदोषभेदेन; तेन वातप्रकृतौ—एव लौहाच्चतुर्गुणम्, पित्तप्रकृतौ—त्रिगुणम्; श्लेष्मप्रकृतौ—द्विगुणमिति; एवं त्रिपले लौहे। त्रिपललौहस्य प्रधानपाके—त्रिफलाया भागद्वयेऽष्टौ पलानि; "प्रतिपलमष्टगुणं स्यात्" इत्युक्तेः जलस्याष्टौ शरावाः, ते च द्वाभ्यां

त्रिफलात्रिकटुकचित्रककान्तक्रामकविडङ्गचूर्णानि।
जातीफलस्य जाती-कोषैलाककोललवङ्गानाम्।
सितकृष्णजीरकयोरपि चूर्णान्यपसा समानि स्युः॥ २०॥
त्रिफलात्रिकटुविडङ्गा नियताऽन्ये ते यथाप्रकृति बोध्याः॥
कालायसदोषहृतेर्जातीफलादेर्लवङ्गकान्तस्य।
क्षेपः प्राप्त्यनुरूपः सर्वस्योनस्य चैकाद्यैः॥

---

शरावाभ्यामधिकाः कर्त्तव्या, इति मिलित्वा दश जलशरावाः; चतुर्थभागावशेषात् स्थाप्यं सार्द्धशरावद्वयम्; पञ्चपललौहस्य प्रधानपाके तु—सपाददुग्धशरावद्वयोक्तेर्द्विपले तु क्रमात् पादह्रासेन दुग्धञ्च सार्द्धशरावैकं भवति, घृतञ्च प्रकृत्याद्यपेक्षया पूर्ववदेव ज्ञेयम्। त्रिपललौहस्य प्रधानपाके तु—त्रिफलाया दश पलानि; "प्रतिपलमम्बुशरं स्यात्" इत्युक्तेर्जलस्य दश शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्या इति मिलित्वा द्वादश जलशरावाः; चतुर्थभागावशेषात् स्थाप्यं शरावत्रयम्; पूर्वोक्तरीत्या दुग्धञ्च पादोनशरावद्वयम्; घृतञ्च प्रकृत्याद्यपेक्षया पूर्ववदेव ज्ञेयम्। चतुःपललौहस्य प्रधानपाके तु—त्रिफलाया द्वादश पलानि, "प्रतिपलमम्बुशरं स्यात्" इत्युक्तेर्जलस्य द्वादश शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्या इति मिलित्वा चतुर्दश जलशरावाः; चतुर्थभागावशेषात् स्थाप्यन्तु सार्द्धशरावत्रयम्; दुग्धञ्च शरावद्वयं, घृतञ्च पूर्ववदिति। त्रयोदशपलादुपरि चतुर्दशपलादिलौहस्य प्रधानपाके—स्थापितत्रिफलाया भागद्वये पूर्ववदेव जलं देयम्; स्थाप्यञ्च चतुर्थभागम्; पूर्वपूर्वापेक्षया दुग्धस्य एकैकशरावपादवृद्धिः स्यादत्रैव; घृतमपि प्रकृत्याद्यपेक्षया द्विगुणत्रिगुणादिकमेवेति। तदनुसारत इति पन्था विज्ञः॥ १९॥

पञ्चावतारितमात्रे लौहे प्रक्षेपार्थं चूर्णमाह, त्रिफलेत्यादि।—कान्तक्रामकं—काधिकामुक्तकम्। सितकृष्णेति द्वयं जीरकविशेषणम्। पयसा समानीति—यावल्लौहचूर्णं, तावदेव मिलित्वा त्रिफलादिचूर्णमित्यर्थः॥ २०॥

इदानीमेतेषु त्रिफलादिषु मध्ये यदवश्यं प्रक्षेप्यं तदाह, त्रिफलेत्यादि।—कालायसदोषहृत इति छेदः। अन्य इति—जातीफलादयः। तत्र त्रिफलादिग्रहणस्य नियतत्वे हेतुमाह, कालायसदोषहृतेरित्यादि।—कालायसः,—अयपाण्डरादिलौह एव; कालत्वञ्चास्य प्रशस्तत्वेन बोध्यते। यदुक्तं पातञ्जले—"कालायसाः शिरीजाते रसायनविधौ मताः" इति। शिरीजा इति।—पतितदानवशिरसि जाता इत्यर्थः। उक्तं हि पातञ्जले—"कफपित्तानिलमाया दैत्यास्य महीतले। पतिता दानवास्तत्र

एवं धात्वनुसारात् तत्तत् कथितौषधस्य बाधेन।
सर्वत्रैव विधेयस्तत्तत् कथितस्यौषधस्योहः ॥ २२ ॥

इति साध्यसाधनपरिमाणविधिः।

---

तदर्द्धमानत्वं, तच्चतुर्थमानत्वञ्चाभिहितं, तथाप्यमृतसारलौहे प्रक्षेप्यचूर्णानां मिलित्वा लौहचूर्णसमत्वमेवेति वचनादेवावसीयते ॥ २१ ॥

इदानीमुक्तौषधमध्ये यद् यद्दोषादावनुरूपं तत्तदौषधमपनीयं, यत् समीचीनं तदपि विधेयमित्याह, एवमित्यादि।—पूर्वन्तु तत्तद्वचनव्याख्यानाभिव्यक्तिनिमित्तं स्थाने स्थाने पत्रिकात्मनी लिखितः। इदानीं सर्वमेकीकृत्य एकपलादित्रयोदशपल-पर्य्यन्तं पत्रिकाक्रमेण लिख्यते। तत्र एकपललौहे—मारणादिकर्मत्रयार्थं मिलित्वा त्रिफला पल ३, पाथा श १०, शेष श १, पल २; तथा निष्पत्तिपाकार्थं मिलित्वा त्रिफला पल ६, पाथा श ८, शेष श २, दुग्ध श १, पल २, घृतञ्च यथाप्रशस्तमेव, चूर्णमानन्तु स्पष्टमेव। अथ द्विपललौहे—मारणादिकर्मत्रयार्थं त्रिफला मिलित्वा पल ४, पाथा श १२, पल ४, शेष श १, पल ५, कर्ष २; निष्पत्तिपाकार्थं त्रिफला मिलित्वा पल ८, पाथा श १०, शेष श २, पल ४, दुग्ध श १, पल ४; घृतञ्च यथाप्रशस्तमेव, चूर्णमानन्तु स्पष्टमेव। अथ त्रिपललौहे—मारणादिकर्मत्रयार्थं मिलित्वा त्रिफला पल ५, पाथा श १०, शेष श २, पल १; निष्पत्तिपाकार्थं त्रिफला पल १०, पाथा श १२, शेष श ३, दुग्ध श १, पल ६; घृतं चूर्णमानञ्च स्पष्टमेव। चतुःपललौहे—मारणादिकर्मत्रयार्थं त्रिफला पल ६, पाथा श २०, पल ४, शेष श २, पल ४, कर्ष २; प्रधानपाकार्थं त्रिफला मिलित्वा पल १२, पाथा श १४, शेष श ३, पल ४, दुग्ध श २; घृतं चूर्णमानञ्च स्पष्टमेव। पञ्चपललौहे—मारणादिकर्मत्रयार्थं त्रिफला पल ७, पाथा श २४, शेष श ३, प्रधानपाकार्थं त्रिफला पल १४, पाथा श १६, शेष श ४, दुग्ध श २, पल २; घृतादि स्पष्टमेव। षट्पललौहे—मारणादिकर्मत्रयार्थं त्रिफला पल ८, पाथा श २८, शेष श २, पल ४; प्रधानपाकार्थं त्रिफला पल १६, पाथा श १८, शेष श ४, पल ४, दुग्ध श २, पल ४, घृतं चूर्णमानञ्च स्पष्टमेव। सप्तपललौहे—मारणादिकर्मत्रयार्थं त्रिफला पल ८, पाथा श ३२, शेष श ४; प्रधानपाकार्थं त्रिफला पल १८, पाथा श २०, शेष श ५, दुग्ध श २, पल ६; घृतं चूर्णमानञ्च स्पष्टम्। अष्टपललौहे—मारणादिकर्मत्रयार्थं त्रिफला पल १०, पाथा श ३६, शेष श ५, पल ८, प्रधानपाकार्थं त्रिफला पल २०, पाथा श २२, शेष

लौहमारणविधिः,—

कान्तादिलौहमारणविधानसर्वस्वमुच्यते तावत् ॥ २३ ॥
यस्य कृते तल्लौहं पक्तव्यं तस्य शुभदिवसे।
सम्मृदङ्गारकरालितनतभूभागे शिवं समभ्यर्च्य।
वैदिकविधिना वह्निं निधाय दत्त्वाहुतीस्तत्र ॥ २४ ॥

---

द्र ५, पल ४, दुग्ध द्र २; घृतं चूर्णमानस्य स्पष्टम्। नवपललौहे—मारणादिकर्मसंपत्त्यर्थं त्रिफला पल ११, पाथो द्र ३०, शेष द्र ५; प्रधानपाकार्थं त्रिफला पल २२, पाथो द्र २४, शेष द्र ६, दुग्ध द्र ३, पल २, घृतं चूर्णमानस्य स्पष्टम्। दशपललौहे—मारणादिकर्मसंपत्त्यर्थं त्रिफला पल १२, पाथो द्र ४४, शेष द्र ५, पल ४; प्रधानपाकार्थं त्रिफला पल २७, पाथो द्र २६, शेष द्र ६, पल ३, दुग्ध द्र ३, पल ४, घृतं चूर्णमानस्य स्पष्टम्। एकादशपललौहे—मारणादिकर्मसंपत्त्यर्थं त्रिफला पल १३, पाथो द्र ४८, शेष द्र ६, प्रधानपाकार्थं त्रिफला पल २६, पाथो द्र २८, शेष द्र ७, दुग्ध द्र ३, पल ६; घृतं चूर्णमानस्य स्पष्टम्। द्वादशपललौहे—मारणादिकर्मसंपत्त्यर्थं त्रिफला पल १४, पाथो द्र ५२, शेष द्र ६, पल ४, प्रधानपाकार्थं त्रिफला पल २८, पाथो द्र ३०, शेष द्र ७, पल ३, दुग्ध द्र ३, पल २; घृतं चूर्णमानस्य स्पष्टम्। त्रयोदशपललौहे—मारणादिकर्मसंपत्त्यर्थं त्रिफला पल १५, पाथो द्र ५६, शेष द्र ७; प्रधानपाकार्थं त्रिफला पल ३०, पाथो द्र ३२, शेष द्र ८, दुग्ध द्र ४, पल २। तदित्थमेकादित्रयोदशपलान्तलौहस्य साध्यसाधनपरिमाणविधौ पत्रिका लिखिता, एवमुन्नीया च चतुर्दशपलादिलौहेऽपि साध्यसाधनपरिमाणमुह्य-मिति। साध्यसाधनपरिमाणविधिरिति।—साध्यं—लौहं, साधनं—त्रिफलादि, तयोः परिमाणविधिरित्यर्थः ॥ २२ ॥

इति साध्यसाधनपरिमाणविधिः।

इदानीं लौहमारणविधिमाह, कान्तादीत्यादि।—आदिशब्दात् पाण्डिवज्रादयो-ऽपि गृह्यन्ते, यथा वक्ष्यन्ति लौहप्रदीपस्य चतुर्थपरिच्छेदेऽनुक्रमेणैव। लौह-मारणविधानमेव सर्वस्वं तदधीनत्वात् गुणादिकर्मणाम्; किन्तु सुमृतमेव लौहं गुण-वत्; तदुक्तं—"सुमृतस्य यतो लौहस्यायतेन कर्म कृतम्। दुर्मृतं सम्भविती शरीरस्थितिमयतम्। अवेदशीर्षे तस्मात्सम्यक् कुर्यात्शिक्यकर." ॥ २३ ॥

यस्य कृत इति—यस्मै पुरुषाय निमित्तम्; लौहमारणाय भूमिसंस्कारपूर्विकामिति-कर्तव्यतामाह, सम्मृदित्यादि।—सम्मृदा सह अङ्गारमेकीकृत्य चतुरस्रं तेन करालिते

धर्मात् सिध्यति सर्वं श्रेयस्तद्धर्मसिद्धये किमपि।
शक्त्यनुरूपं दद्याद्द्विजाय सन्तोषिणे गुणिने॥
सन्तोष्य कर्मकारं प्रसादपूगादिदानसम्मानैः।
आदौ तदयस्सारं निर्मलमेकान्ततः कुर्यात्॥ २५॥

---

दन्तुरिते, छिन्न इति यावत्; एतेनातितापान्मृत्तिका न गलति; नतभूभागे—मध्यनिम्नभूभागे। श्वभ्रमित्युपलक्षणम्। तदुक्तं योगरत्नसमुच्चये—"अर्चयित्वा विधानेन हेरम्बं गुहभास्करौ। लोकपालान् ग्रहांश्चैव चेन्द्रपालाग्न्यौषधम्॥ आदित्यदैवतायेष्टा धन्वन्तरिं पतञ्जलिम्। दद्याद्बलिञ्च सर्वेभ्यो नानाभक्ष्योपचारतः॥" इति। वह्निमिति—वन्यदिव्यानलं, तदभावे दारुघर्षणोद्भवजमग्निम्। यदाह पतञ्जलिः,—"दिव्यं दावं समादाय लौहकर्म समाचरेत्। यदि दिव्यानलाभावस्ततो घर्षणसम्भवम्॥ आरोप्य कर्मशालायामग्निं यत्नेन पूजयेत्॥" इति॥ २४॥

यद्यपि दृष्टादृष्टरूपेण कारणचक्रेण कार्यं सिध्यति, तथापि दृष्टमप्यदृष्टवशादेव उपतिष्ठते। इत्यदृष्टस्यैव बलीयस्त्वं मन्यमान आह, धर्मादित्यादि।—श्रेय इत्यभिमतप्रयोगफलम्। किमपीति।—धान्यहिरण्याच्छादनाद्यन्यतमं यथाशक्ति दद्यादित्यर्थः। मारणार्थं लौहसंस्कारमेव प्रथममाह, आदावित्यादि।—अयस्सारं—लौहम्; निर्मलमिति—शोधनविधिना कार्यम्। तत्र शोधनविधिर्यथा,—प्रथमं लौहं शिलादिना निर्मलीकृत्य पत्तलं कार्यं, तदनु आङ्केरीमातुलुङ्गाम्लवेतसैर्भावयित्वा सप्तवारं प्रत्येकेन आतपे संशोष्य ततः काञ्जिकादौ दिनत्रयं त्र्यहं वा स्थाप्यम्; एवमम्लभावनां विधाय तदनु गोमूत्रपिष्टत्रिफलाकल्केनालिप्य आतपे शोषणीयम्; ततश्च मनःशिलामाक्षीकमनःशिलाकुठारिकामूलआङ्केरीश्वेतदूर्वासैन्धवैश्च जलपिष्टैः क्रमेण प्रलिप्य आतपे शोषणीयम्। तदुक्तम्—"पत्तलं निर्मलं कृत्वा लौहमम्लीकृतं पुनः। मूत्रपिष्टत्रिफलया वारिपिष्टमनोह्वया॥ भावितं भावयेत् तद्वत् माक्षीकस्य मृदा मनाक्। परशुच्छिन्ना आङ्केरी गन्धदूर्वा ससैन्धवा॥ एभिर्लिप्तं यथाप्राप्ति शोष्य सूर्यातपे क्रमात्॥" गन्धदूर्वा—श्वेतदूर्वेति नाममञ्जरी। तदेवं भावनां विधाय तदनु भस्त्रया वह्नौ ध्मापयित्वा अतितप्तं कृत्वा लौहापेक्षया द्विगुणेषु गव्यदुग्धकाञ्जिकगोमूत्रत्रिफलाक्वाथादिषु वारत्रयं कृत्वा निर्वापणीयम्। उक्तं हि—"क्षीरारनालगोमूत्रत्रिफलाक्वाथवारिणि। प्रतिद्रव्यं निषिञ्च्य त्रिधा त्रिधा विधानतः॥" इति। निषेकमात्रा च—"लौहपलं समाकृतमं द्विगुणे तद्रसे क्षिपेत्। निषेक एव

स्थालीपाकविधिः,—

अथ कृत्वाऽयोभाण्डे दत्त्वा त्रिफलाम्बु शेषमन्यद्वा।
प्रथमं स्थालीपाकं दद्याद्वा तत्क्षयात् तदनु॥
गजकर्णपत्रमूलशतावरीभृङ्गकेशराजरसैः।
प्राग्वत् स्थालीपाकं कुर्य्यात् प्रत्येकमेकं वा॥ ३१॥

इति स्थालीपाकविधिः।

---

क्वाथेनैव सप्तधा सूर्य्यातपे संशोष्येत्यर्थः। उक्तार्थे चक्रपाणिः यथा—"अयोघनेन तत् पिष्टं शिलया दृढयाऽथवा। अयोरजःसमं पिष्टं कृत्वा मुद्गसमं पुनः॥ त्रिफलावारिणा धौतं विशुष्कं चूर्णितं पुनः॥" इत्यादि। योगरत्नाकरेऽप्युक्तं—"हतचौदूखले क्षोदे मुषलेनापि ताड्या। सचूर्णं त्रिफलाऽम्भोभिः सप्तधा सूर्य्यपाचितम्॥ श्लक्ष्णः पुटविधौ योग्यो विज्ञेयो भिषजां वरैः॥" इत्यादि। अत्र लौहमारणार्थं भानुपाकार्थञ्च त्रिफलाक्वाथविधिर्यथा उक्तं योगरत्नाकरे—"गुडार्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा। चतुर्गुणं फलात् तोयमष्टभागावशेषितम्॥ एष एव विधिर्नित्यं ध्मापनेऽपि च शस्यते॥" इति। तथा—"भानुपाकार्थमिच्छन्ति त्रिफलामयसा समाम्। सलिलं द्विगुणं तत्र चतुर्भागावशेषितम्॥" इति॥ ३०॥

इति मारणविधिः।

स्थालीपाकमाह, अथेत्यादि।—अयोभाण्डे—लौहपात्रिकायाम्। शेषं त्रिफलाम्बु।—त्रिफलैकभागकृतक्वाथस्य भानुलौहनिर्वापणावशिष्टम्। अथ यदि तदपि नष्टं स्यात् तदा का गतिः?—इत्याह, अन्यद्वेति।—तत्प्रक्रिययैव क्वाथान्तरं कार्य्यमिति भावः। प्रथमं स्थालीपाकं दद्यादिति।—प्रथमं स्थाल्यां लौहचूर्णं त्रिफलाक्वाथेनालोड्य वह्निना पाकं विधाय त्रिफलाक्वाथक्षयः कर्त्तव्यः। इत्येव स्थालीपाकविधानक्रमः। वा तत्क्षयादिति—त्रिफलाक्वाथशोषपर्य्यन्तम्। तदन्विति।—प्रथमं त्रिफलाक्वाथेन स्थालीपाकं विधाय अनन्तरं हस्तिकर्णपलाशादीनां व्यस्तानां समस्तानां वा स्वरसैरपि पूर्ववत् स्थालीपाकः कार्य्य इत्याह, गजकर्णेत्यादि।—गजकर्णपत्रोऽत्र हस्तिकर्णपलाशः। राजशब्दो भृङ्गकेशाभ्यां सम्बध्यते। प्राग्वदित्यनेनैव यावती त्रिफलाक्वाथस्य स्थालीपाके मात्रा द्रवचयात्मक पाकस्तथा गजकर्णादिस्वरसादीनामपीत्यर्थः; किन्तु यत्र व्याध्यनुरूपस्थालीपाकीयद्रव्याणामभावे यदि

पुटपाकविधिः,—

हस्तप्रमाणवदनं श्वभ्रं हस्तैकखातसममध्यम् ।
कृत्वा कटाहसदृशं तत्र करीषं तुषञ्च काष्ठञ्च ॥
अन्तर्घनतरमवशुषिरं परिपूर्य्य दहनमायोज्यम् ।
पश्चादयसश्चूर्णं शुद्धं पङ्कोपमं कुर्य्यात् ॥
त्रिफलाम्बुभृङ्गकेशरशतावरीकन्दमाणसहजरसैः ॥
भल्लातककरिकर्णच्छदमूलपुनर्नवाखरसैः ॥
पिष्ट्वाऽथ लोहपात्रे मार्दे वा लोहमार्दपात्राभ्याम् ।
तुल्याभ्यां दृढेनाच्छाद्यान्ते रन्ध्रमालिप्य ॥

---

स्वरसप्राप्तिर्नास्ति तत्र स्थालीपाकार्थं त्रिफलाक्वाथानुसारेणैव क्वाथजलादिकं दत्वा क्वाथं विधाय स्थालीपाको विधेय इत्यधिगन्तव्यम् ॥ २१ ॥

इति स्थालीपाकविधिः ।

पुटपाकविधिमाह, हस्तप्रमाणेत्यादि ।—श्वभ्रं—खातम् । हस्तैकखातसममध्यमिति—हस्तैकप्रमाणं खात खननं यस्य, सर्व्वतो हस्तैकखातपरिमाणमित्यर्थः ; समोऽनुन्नतो मध्योऽभ्यन्तरभूभागो यस्य तत् सममध्यम् । कटाहसदृशमित्यनेनैव वर्त्तुलाकारत्वमुक्तं, तेन चतुष्कोणं न कार्य्यमित्यर्थः । तत्र श्वभ्रे अन्तरिति मध्ये, घनतरं बहुतरं, निविडतरमिति यावत् । अवशुषिर परिपूर्य्येति ।—करीषादिभिः श्वभ्रस्यावकाशं परिपूर्य्येत्यर्थः । कैर्द्रवैः पङ्कोपमं कुर्य्यात् ?—इत्याह, त्रिफलेत्यादि ।—त्रिफलाम्बु—त्रिफलाक्वाथ. ; भृङ्गकेशरी—भृङ्गराजकेशराजौ ; कन्दः,—सूरणः । एषां भृङ्गादीनां सहजरस,—स्वरस. । भल्लातकस्य पुनः क्वाथ एव, स च भल्लातकप्रकरणे इव बोध्य । अयश्चूर्णं त्रिफलाक्वाथादिभिः पङ्कोपमं कृत्वा किं कर्त्तव्यम् ?—तदाह,—पिष्ट्वेत्यादि ।—मार्दे इति—मृण्मयस्थालीमयपात्रे ; एतच्च मृत्पात्रं सर्व्वथा लोहपात्राभावे हि बोध्यम् ; किन्तु इदानीन्तनास्तावत् मृण्मयपात्रे सम्पुटे लौहं कृत्वा वस्त्रमृत्तिकाभिरालिप्य पुटपाको दीयते इति व्यवहारः ; अयञ्च पन्थाः साधीयान् भवति, यतो लोहसम्पुटपक्षेऽयस्लोहघटितसम्पुटमात्रस्यापि पुटपाकौषधसंसर्गे-जीर्णतया तदीयरजसोऽनुप्रवेशो दुर्निवार इति । दृढेनाच्छाद्येति ।—यस्य पात्राभ्यन्तरे पङ्कोपमं लोहचूर्णमस्ति तत्सुखमपरतुल्यपात्रस्य कटीभागेन पिधाय इत्यर्थः ।

प्रतिपुटनं तत् पिंष्यात् स्थालीपाकं विधाय तथैव तत्।
तादृशि दृषदि न पिंष्याद् विगलद्रजसा तु युज्यते यत॥
तदयश्चूर्णं पिष्टं दृष्टं घनसूक्ष्मवाससि श्लक्ष्णम्।
यदि रजसा सदृशं स्यात् केतक्यास्तर्हि तद्भद्रम्॥

समानकः प्रोक्तस्त्रिफलादिरयं मया॥ सामान्यपुटपाकार्थमेतानिच्छन्ति सूरयः॥" इति। दोषभेदे तु गणविशेषा विस्तारभयान्न लिखिताः। ते च लौहप्रदीपे प्रथमपरिच्छेदस्यान्तेऽनुसन्धेया इति। किञ्च, यस्मिन् यस्मिन् व्याधौ ये ये योगा अभिहितास्तस्मिन् तस्मिन् व्याधौ तत्तत्क्वाथैरपि पुटो देयः। उक्तं हि—"ये ये यत्र गदे योगास्तेषां तेषाञ्च वारिणा। विधिना क्वथितेनैव पुटो रोगेषु सम्मतः॥" इति। विधिनेति।—साध्यसाधनपरिभाषोक्तपुटपाकार्थत्रिफलाक्वाथविधिना; अथवा यत्र त्रिफलाव्यतिरिक्तक्वाथ्यद्रव्याणामाढ्यकुडवमानानि सन्ति, द्वैगुण्यस्याप्यशेषजल-मानञ्च नोक्तम्, तत्र योगरत्नाकरोक्तव्यवस्थैवानुसर्त्तव्या। यदुक्तं क्वाथविधौ तत्रैव— "कथानि यानि वस्तूनि योज्यानि पुटादिषु। तानि लौहसमान्येव जलं प्रागेव कीर्त्तितम्॥ लभ्यते स्वरसो येषां तेषां क्वाथस्तु नेष्यते। त्रिफलाव्यतिरिक्तेन मतमेतत् मतस्तलेः॥" इति। जलं प्रागेव कीर्त्तितमिति।—मृदौ क्वाथार्थं चतुर्गुणं जलं देयं, स्थाप्यश्चाष्टमो भागः। मध्यद्रव्येऽष्टगुणं जलं देयं, स्थाप्यश्चतुर्थो भागः। कठोरद्रव्ये षोडशगुणं जलं देयं, स्थाप्यश्च षोडशो भाग इति। ननु पुटेन किमत्र क्रियते? उच्यते—दोषनाशगुणोदय इति।—यदुक्तं—"पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदयः। क्रियते हि पुटाल्लौहं पुटाभ्यासात् समाचरेत्॥ यथा यथा प्रदीयन्ते पुटाः सुबहवो यदि। तथा तथाऽभिवर्द्धन्ते गुणा एव सहस्रशः॥ तावल्लौहं पुटेद्वैद्यो यावच्चूर्णीकृतं जले। निस्तरेत् लघुत्वेन समुत्तरति हंसवत्॥ तावच्च चूर्णयेदेनं यावत् कज्जलसन्निभम्। करोति निश्चितो वैद्ये नैव दोषो मनागपि॥" इति। पुटानां कर्मभेदेन सङ्ख्याभेदो यथा—"शतादिषु सहस्रान्तः पुटो देयो रसायने। दशादिशतपर्यन्तो मतः पुटविधिर्भवेत्॥ वाजिकर्मणि विशेषः पुटः पञ्चशताधिकः। दशोत्तरशतान्तस्तु पुटः पुटविचक्षणैः॥" यदा तु पुटितमात्रे लौहे पुटा देयास्तदा एतावद् भूय सङ्ख्याका अपि पुटा दीयन्ते। यदा तु प्रतिपुटान्ते पेषणं वस्त्रपूतत्वञ्च तदा सप्ताष्टाभ्यैव विशिष्टफलदा भवन्तीत्युपदिशन्ति वृद्धाः। प्रतिपुटनं पेषणमाह, प्रतीति।—एतेन पेषणवस्त्रमार्जनवस्त्रपूतत्वाभ्यां भस्मीभूत-पुटार्द्दगनभेषजगिरासोऽपरदेयभेषजद्रव्यसंस्कारासाधनत्वेति भावः; कोमलशिलासु

पुटने स्थालीपाकेऽधिकृतपुरुषे स्वभावरुगधिगमात्।
कथितमपि हेयमौषधमुचितमुपादेयमन्यदपि॥ ३३॥

इति पुटपाकविधिः।

पाकविधिः,—

अभ्यस्तकर्म्मविधिभिर्बालकुमारीयबुद्धिभिरलभ्यम्।
लौहस्य पाकमधुना नागार्जुनमिष्टमभिदध्मः॥ ३४॥
लौहारकूटताम्रकटाहे दृढमृन्मये प्रणम्य शिवम्।
तदयः पचेदचपलः काष्ठेन्धनेन वह्निना मृदुना॥

---

पेयत्वं न कार्य्यमित्याह, तादृशीत्यादि।—एतेन निर्मलद्रवादि पेयत्वं कार्य्यमिति भावः। पिहा च वस्त्रपूतं कार्य्यमित्याह, तदथ इत्यादि।—घनं निबिड़ं, सूक्ष्मञ्च यद्वासः, तत्र इष्टं पूतमित्यर्थः। इदानीमातुरस्य प्रकृत्यादिकं निरूप्य सर्वभैषज्येषु यदनुचितं तस्यापकर्षः कार्य्यः; अनुक्तस्याप्युचितस्यावापः कार्य्यमित्याह, पुटन इत्यादि। अधिकृतेति।—अधिकृतपुरुषचिकित्सात्वेन प्राकृत इत्यर्थः॥ ३३॥

इति पुटपाकविधिः।

इदानीं लौहस्य प्रधानविधिपाकमाह, अभ्यस्तेत्यादि।—अभ्यस्तकर्म्मविधिभिः,—दृष्टकृतलौहपाकैः। बालकुमारमतीव तीक्ष्णं सूक्ष्मञ्च, तेन बालकुमार इव तीक्ष्णा सूक्ष्मा च बुद्धिर्येषां, दुरूहस्यार्थस्य तीक्ष्णसूक्ष्मबुद्धिग्राह्यत्वात् तैरप्यलभ्यं ज्ञातुमशक्यम्। नागार्जुनमिष्टमिति—नागार्जुनेन कथितम्। लौहपाकारम्भेऽपि मङ्गलं कार्य्यम्। उक्तं हि पातञ्जले—"मातृका पूजयेत् सर्व्वा नायिकाञ्च विनायकम्। अथ स्वस्त्ययनं कुर्य्यात् सदा हितमनाः सुधीः॥ यत एव भवेदेव विघ्नध्वंसकरी ध्रुवम्॥" इति॥ ३४॥

लौहपाकार्थं पात्रमाह, लौहेत्यादि।—आरकूटं—पित्तलम्। काष्ठेन्धनेनेति।—काष्ठपदं करीषतुषादिव्युदासार्थम्। वह्निनेत्यत्रोपलक्षणा। उक्तं हि—"मृदुनाग्नि-

निक्षिप्य त्रिफलाजलमुदितं यत् तद्घृतञ्च दुग्धञ्च।
सञ्चाल्य लौहमय्या दर्व्या लग्नं समुत्पाट्य ॥ ३५ ॥
मृदुमध्यमखरभावैः पाकस्त्रिविधोऽत्र वक्ष्यते पुंसाम्।
पित्तसमीरणश्लेष्मप्रकृतीनां मध्यमस्तु समः।
अभ्यक्तदर्वि लौहं सुखदुःखस्खलनयोगि मृदु मध्यम्।
उज्झितदर्वि खरं परिभाषन्ते केचिदाचार्य्याः ॥
अन्ये विलीनदर्वीप्रलेपमाखूत्कराकृतिं ब्रुवते।
मृदु मध्यमक्षचूर्णं सिकतापुञ्जोपमन्तु खरम् ॥ ३६ ॥

---

घृताग्नौ पचाल्लवणधानतः" इति। उक्तामिति त्रिफलाभयायष्टकवक्वाथादिप्रक्षेपार्थमाह, निक्षिप्येत्यादि।—उदितमिष्टुक्तपरिमाणम्। घृतादिदानक्रमस्य भीमराजोक्त, यथा—"घृतेन लौहमाक्षीका चौरेण समनन्तरम्। ततः क्वाथेन संयोज्य मन्देऽग्नौ शनकैः पचेत्॥ ततः सञ्चालयेल्लौह लौहदर्व्यातिदीर्घया॥" इति॥ ३५॥

इदानीं पित्तवातकफप्रकृतिषु क्रमात् पाकत्रयमाह, मृद्वित्यादि।—मध्यमपाकी वातप्रकृतौ हित एव, किन्तु प्रकृत्यन्तरेऽपि योज्य इत्याह, मध्यमस्तु सम इति।—सर्वप्रकृतिसेव्यत्वेन सर्वास्वेव प्रकृतिषु उचित इत्यर्थः। अमीषीऽप्याह—"दार्वीनाश्लिष्यते यत्तु स्वैर स्खलति वा न वा। मृदुपाक विजानीयात् पित्ते तु विहित सदा॥ सिकतापुञ्जोपमं यत्तु मूषिकोत्कारसन्निभम्। तदयः खरपाकं स्यात श्लेष्मण्येव प्रकीर्त्तितम्॥ एकैकगुणयोगत्वात समिच्छन्ति तद्विदः। सर्वप्रकृतिसेव्यत्वान्मध्यमं बहुपूजितम्॥" इति। एकीयमते मृदुमध्यखरपाकाणां क्रमालक्षणमाह, अभ्यक्तेत्यादि।—अभ्यक्ता—घनपङ्कवत् सश्लिष्टा दर्वी येन ईदृशं लौह, मृद्विति—मृदुपाक ब्रुवते। अभ्यक्तदर्वीत्यपि पाठ। तथा सुखदु खस्खलनयोगीति—कदाचित् दर्वीं त्यजति, कदाचित् न त्यजति इत्यर्थः; एतादृशं यल्लौह तन्मध्यमिति मध्यमपाक ब्रुवते। तथा उज्झितदर्वीति यल्लौहं कदाचिदपि दर्वीं न भजति, तत् खरपाक ब्रुवते इति। तथा अन्यतममतमाह, अन्य इत्यादि।—विशेषेण लीनमश्नी दर्वीप्रलेपो येन ईदृशं, यदा आखूत्कराकृति इन्दुरकृतिकासदृशञ्च

त्रिविधोऽपि पाक ईदृक् सर्वेषां गुणकृदेव न तु विफलः ।
प्रकृतिविशेषे सूक्ष्मौ गुणदोषौ जनयतीत्यल्पम् ॥
विज्ञाय पाकमेवं द्रागवतार्य्य क्षितौ क्षणान् कियतः ।
विश्राम्य तत्र लौहे त्रिफलादेः प्रक्षिपेच्चूर्णम् ॥ ३७ ॥
यदि कर्पूरप्राप्तिर्भवति ततो विगलिते तदुष्माल्पे ।
चूर्णीकृतमनुरूपं क्षिपेन्न वा न यदि तल्लाभः ॥

---

यल्लौहं तन्मृदिति मृदुपाकं ब्रुवते ; तथा अर्द्धचूर्णलौहं मध्यमिति मध्यपाकं ब्रुवते। अर्द्धचूर्णमिति—अर्द्धं चूर्णम् अपरमर्द्धञ्च बालुकाराकारमित्यर्थः । तथा सिकतापुञ्जोपमं—बालुकाराशिसदृशं यल्लौहं चक्षुषा दृश्यते न तु स्पर्शेन, तत् खरपाकं ब्रुवते । पातञ्जली तु—स्पर्शादिनापि पाकज्ञानमुक्तं—"तावल्लौहं पचेद्वैद्यो यावत्तन्नैव पीडितम् । समुद्रं जायते व्यक्तं न निःसरति सन्धिभिः ॥ अङ्गुलिभ्यां निघृष्टन्तु यदा चूर्णत्वमागतम् । तदा सिद्धं विजानीयाल्लौहं लौहविशारदः ॥ वर्त्तितो वर्त्तितो वर्त्तिस्वरूपत्वं व्रजेदिति । ताभ्यामेव व्रजेद्धृष्टं सिद्धं विद्याच्चिकित्सकः ॥ मन्दमाहुस्तथा लौहमलक्ष्याखिललक्षणम् । अतिपाकेन तज्ज्ञेयं खरमुज्झितलक्षणम् ॥" इति । जीवनाथोऽप्याह—"मञ्जनाभं घनं स्निग्धं प्रथमूत्तमयोर्हरेत् । अक्लिन्नमश्मसि चिरं सम्यक् पाकस्य लक्षणम् ॥" इति ॥ ३६ ॥

त्रिविधोऽप्ययं पाको न विफल इत्याह, त्रिविध इत्यादि ।—लौहपाकानन्तरं त्रिफलादिचूर्णप्रक्षेपार्थमाह, विज्ञायेत्यादि ।—द्राक्—शीघ्रम् ; क्षितौ,—भाजने । कियतः क्षणान् विश्राम्येत्यनेन सर्वथा तापनिवृत्तिर्न प्रतिपद्यते ; किन्तर्हि, मनाक् तप्तत्वम् ; यदाह पतञ्जलिः,—'अवतार्य्यं मनाक् तप्त' इति । इतिकर्त्तव्यता त्रिवक्रीमरत्नाकरसमुच्चयोक्तानुसर्त्तव्या । यदुक्तं तत्रैव—"अवतार्य्य ततो दर्व्या परिघट्य पुनःपुनः । यदा पाणिसहो भूतो निक्षिपेदौषधं तदा ॥ स्तोकस्तोकेन दर्व्यैव परिघट्य निरन्तरम् ॥" इति ॥ ३७ ॥

लाभे सति सौगन्ध्यार्थं कान्तकामकीयदोषहरणार्थञ्च कर्पूरप्रक्षेपमाह, यदीत्यादि ।—विगलित इति—अपगते । अनुरूपमित्यनेन यावत्तानुत्कटगन्धस्वादोपलम्भो भवति तावन्मानमित्यर्थः । "न वा न यदि तल्लाभ." इति ।—यदि कर्पूरलाभो न

पक्वं तदश्मसारं सुचिरघृतस्थित्यभाविरूक्षत्वे ।
गोदोहनादिभाण्डे लौहभाण्डाभावे सति स्थाप्यम् ॥ ३८ ॥
यदि तु परिस्रुतिहेतोर्घृतमोचेताधिकं ततोऽन्यस्मिन् ।
भाण्डे निधाय रक्षेद्भाव्युपयोगो ह्यनेन महान् ॥
अयसि विरूक्षीभूते स्नेहस्त्रिफलाघृतेन सम्पाद्यः ।
एतत् ततो गुणोत्तरमित्यमुना स्नेहनीयं तत् ।
अत्यन्तकफप्रकृतेर्भक्षणमयसोऽमुनैव शंसन्ति ।
केवलमपौदमशितं जनयत्ययसो गुणान् नियतः ॥ ३९ ॥

स्यात् तदा न वा विदेदित्यन्वयः। पक्वलौहं दिनान्तरे वारद्वयमिति पुनः पेष्टव्यम्। उक्तं हि योगरत्नाकरे—"दिवाग्नं रजनीमेवां पेष्टव्यः शीतलीकृतः। त्रिधा दिवानिशं पश्चाद् शिलापुत्रेण ताडया॥" इति। अथ सिद्धस्य लौहस्य स्थापनार्थं पात्रमाह, पक्वमित्यादि।—सुचिरकालं घृतस्थित्या अभाविरूक्षत्वं यस्य तस्मिन्, बहुदिनं व्याप्य घृतभावितं यत् पात्रं, तस्मिन्नित्यर्थः। गोदोहनादिभाण्डे—दधिदुग्धादिभावितं पात्रम्; लौहभाण्डाभावे इति—कान्तादिलौहपात्राभावे; तदुक्तं—कान्तादिलौहभाण्डे तु सदा तात्रमयी शुभे। चिरात्यभाविते भाण्डे लौहतात्रादासम्भवे॥" इति॥ ३८॥

इदानीमयःपाकार्थं दत्तं घृतमधिकं यद्युपलभ्यते, यदा तदाऽस्य भाविलौहरूक्षत्वनिवृत्यर्थं पात्रान्तरे स्थाप्यमित्याह, यदि त्वित्यादि।—घृतस्याधिक्यमेव कथं ज्ञातव्यम्?—इत्याह, परिस्रुतिहेतोरिति।—परिस्रुतिः,—पात्रादुच्छलितत्वम्। ईदेन—उपलभ्येत। किमर्थं तद्घृतं रक्षणीयम्?—इत्याह, भाव्युपयोग इत्यादि।—हि यतोऽनेन लौहपाकोच्छलितघृतेन महान् उपयोगो महत् प्रयोजनं भावि भवेते, तत् च रूक्षीभूतलौहस्नेहनादिरूपम्। उक्तं हि—"भवेद्यदि कथिलौहे घृतमादधिकं हविः। पृथक्पात्रेऽपि तत् स्थाप्यं स्नेहनार्थं विचक्षणैः॥ अथवा नदेन लौहे यन्मधुसर्पिषोऽयते। तदनेनैव कर्तव्यमिति केचिद्व्यवस्थिताः॥" इति। यदि पुनर्लौहपाकोच्छलितं घृतं न लभ्यते, तदा त्रिफलाक्वाथकल्काभ्यामन्यद्घृतं पक्त्वा रूक्षितलौहस्य स्नेहनं कार्यमित्याह, अयसीत्यादि, किन्तु तत्त्रिफलाघृतात् लौहपाकोच्छलितं घृतमेवोत्कृष्टगुणमित्याह, एतदित्यादि।—एतदिति—लौहपाकोच्छलितं घृतम्। ततः इति—त्रिफलाघृतात्; गुणोत्तरम्—उत्कृष्टगुणमिति। अमुना घृतेन तदयः स्नेहनीयमिति।

अथवा वक्तव्यविधिसंस्कृतकृष्णाभ्रकचूर्णमादाय ।
लौहचतुर्थांशसमद्वित्रिचतुःपञ्चगुणभागम् ॥
प्रक्षिप्यायः प्राग्वत् पचेदुभाभ्यां भवेद्रसो यावत् ॥
तावन्मानानुसृतिः स्यात् त्रिफलादिद्रव्यपरिमाणम् ।

---

तस्यैव घृतस्य प्रयोजनान्तरमाह, अयमित्यादि ।—अमुनेति—लौहपाकोच्छलितघृतेनेत्यर्थः । लौहोच्छलितघृतस्योत्कृष्टगुणत्वमप्याह, केवलमित्यादि ।—केवलं लौहपाकोच्छलितघृतम् । जनयत्ययशो गुणान् कियत इति ।—लौहसम्बन्धेन लौहगुणाधिधानादिति भावः ॥ २९ ॥

इदानीं पित्तदुष्टिं प्रति अत्रैव लौहचतुर्थांशसमादिमात्रतोऽभ्रकप्रवेशेन लौहाभ्रकं पक्तुं विधिमाह, अथवेत्यादि ।—वक्तव्यविधिनेति ।—अथानन्तरमेव कृष्णाभ्रकमभेकवपुरित्यादिना ग्रन्थेन योऽभ्रकसंस्कारस्य विधिरभिधास्यते वक्तव्यत्वेन विधिना संस्कृतमभ्रकचूर्णं निश्चन्द्रीकृतमादाय अयो लौहचूर्णञ्च प्रक्षिप्य पचेदिति । कियन्मात्रम् अभ्रकचूर्णं ग्राह्यम् ?—इति जिज्ञासायामभ्रस्यैव भागक्रममाह, लौहचतुर्थेत्यादि ।—लौहचूर्णमपेक्ष्य निश्चन्द्रीकृताभ्रकचूर्णस्य चतुर्थो भागः पादिक इत्यर्थः । तथा पचनीयैकपलादित्रयोदशपलान्तलौहचूर्णस्य भागद्वयम्, अभ्रकचूर्णस्य पुनरेको भागः, तेन लौहस्य भागद्वयम्, अभ्रस्य तदर्द्धमेको भाग इति अभ्रस्यार्द्धभागत्वम् । तथा एको भागो लौहस्य, अपर एको भागोऽभ्रस्येति लौहसमत्वमभ्रकस्येति । एवमेको भागो लौहस्य, भागद्वयन्तु अभ्रकस्येति द्विगुणत्वमभ्रकस्य । एवमेको भागो लौहस्य, अभ्रस्य भागत्रयमिति अभ्रस्य त्रिगुणत्वम् । तथा लौहस्य एको भागः, भागचतुष्टयन्तु अभ्रकस्येति चतुर्गुणत्वमभ्रकस्य ; तथा एको भागो लौहस्य, पञ्चभागन्तु अभ्रस्येति पञ्चगुणत्वमभ्रकस्य ज्ञेयम् । एवं क्रमेण लौहाभ्रकाभ्यां मिलित्वा एकपलादित्रयोदशपलान्तमात्रव्यवस्थया तत्पाकः कार्य्य इत्याह,—प्राग्वदित्यादि । एवञ्च सति अभ्रकप्रवेशेन प्रधानभिष्यसिपाकार्थं त्रिफलाक्काथदुग्धघृतप्रक्षेप्यचूर्णपरिमाणं कीदृशम् ?—इति निर्णयार्थमाह, उभाभ्यां भवेदित्यादि ।—अयमर्थः,—उभाभ्यां लौहाभ्रकाभ्यां मिलित्वा यावद्रसो भवेत्, तावदेव लौहमानं परिकल्प्य तन्मानानुसारेण त्रिफलादिमानं कल्पनीयम् । पूर्वं केवललौहपाके त्रिफलादीनां यावन्मानमुक्तम् इदानीं मिलितलौहाभ्रकपाकेऽपि तावदेवेत्यर्थः । अत एव लौहरसाभ्रकयोगमपेक्ष्य योगरत्नाकरेऽप्यभिहितं—"यावल्लौहरजस्तस्मात् भवेदर्द्धेन पारदः ।" तदर्द्धेन घनं

इदमाप्यायकमिदमतिपित्तनुदिदमेव कान्तिबलजननम् ।
स्त्रभाति वृद्धुषो परमधिकाधिकमात्रया चिरम् ॥४०॥

इति पाकविधिः ।

अभ्रकविधिः,—

कृष्णाभ्रमभेकवपुर्वज्राख्यञ्चैकपत्रकं कृत्वा ।
काष्ठमयोदूखलके चूर्णं मुषलेन कुर्वीत ॥
भूयो दृषदि च पिष्टं वासः सूक्ष्मावकाशतलगलितम् ।
मण्डूकपर्णिकायाः प्रचुररसे स्थापयेत् त्रिदिनम् ॥
उद्धृत्य तद्रसादथ पिंष्याद्धैमन्तिकधान्यभक्तस्य ।
अचोदात्यम्लात्स्वच्छजलेन प्रयत्नेन ॥

---

प्रोक्त मतमितन्यतमली. ॥ मासेन विलयत्यास्य सिद्धं पाको पलत्रयम् ॥" इति । नतु किमर्थं पुनरस्तरोगरमधिकाधिकमात्रया लौहे अभ्रकोपयोग इत्येतदर्थमाह, इदमाप्यायकमित्यादि।—इदमभ्रकं लौहे अधिकाधिकमात्रया समुपयुक्तं सविधिना आप्यायकत्वादिगुणविशिष्ट भवतीत्यर्थः । आप्याय करणम् अपतसितमिव पुरुषं बलोत्कर्षं करोतीत्यर्थं । स्त्रभाति वद्धुषो परमिति ।—अधिकाधिकमात्रया लौहे चिरमभ्रकं समुपयुक्तं सत् विनाप्याहारकरणमत्तसितमिव पुरुषं बलोत्कृष्टं करोतीति वद्धुषि पुरुषस्य बाधां न जनयत इत्यर्थः, किंवा आहारजातमविकलमखिलं परिणमयत्येव क्षुधातुरस्ये तु न पुरुषमलं कुरुत इत्यर्थः ॥ ४० ॥

इति पाकविधिः ।

अभ्रविधिर्सकलतकृष्णाभ्रकचूर्णमित्युक्तम् ; अतस्तामेवाभ्रकपद्धिमाह, कृष्णाभ्रमित्यादि।—अभेकवपुरिति—भेकस्य वपु हरितपीतादिवर्णवत् भवति, तेन यदभ्रं वर्णेन भेकस्य वपुरिव एकदेशेऽपि न भवति तत्समीचीनं तदेव च वज्राख्यं वक्षीति यस्य प्रसिद्धि । तदुक्तं योगरत्नाकरे—"अभ्रकं वज्रोपाक्षं गृह कज्जलसन्निभम् । यत्र प्रध्मायते वह्नौ भेकोच्छूनं भवेदपि ॥ तदाकारसमुद्भूतं वक्षीति प्रथमं घनम् ॥" इति । तदभ्रकं अनेकपत्रघटितमेव स्वभावतस्तत्प्रथमात् नखरादिभिर्योरयित्वा एकपत्रं कर्तव्यम् ; ततो मुषलेन चूर्णं कुर्वीत, भूयः पुनः दृषदि शिलायां पिष्टं चूर्णीकृत्य घनतरवाससा कामविलाऽधो यद्गलितं तद्ग्राह्यम् । मण्डूकपर्णी—थानकुनीति ख्याता ; तद्रसादिति—मण्डूकपर्णीस्वरसात् । अचोदेति ।—चोदोऽथ खोपंभक्तसिक्थकम्,

मण्डूकपर्णिकायाः पूर्वरसेनैव मोदनं कुर्य्यात्।
स्थालीपाकं पुटनञ्चाद्यैरपि भृङ्गराजाद्यैः॥ ४१॥
ताड़ादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्त्राग्नौ।
तावद्दहेत यावन्नीलोऽग्निर्दृश्यते सुचिरम्॥
निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु।
पिष्ट्वा घृष्ट्वा वस्त्रे चूर्णं निश्चन्द्रकं कुर्य्यात्॥ ४२॥

इति अभ्रकविधिः।

---

अभ्रोद्धरणश्च तद्विरहात्। पेषणानन्तरं यत् कर्त्तव्यं तदाह,—मण्डूकपर्णिकाया इत्यादि। पूर्वरसेनेति।—यस्मिन्नेव मण्डूकपर्णीरसे दिनत्रयं स्थापितमासीत् तेनैव रसेन विमर्द्य मोदनमिति मोदकाकारं कुर्य्यात्; मोदयतीति मोदन इति मोदनशब्दोऽपि मोदकार्थे द्रष्टव्यः। कश्चित्तु मोदकमिति पाठः। स च तत्तदाकारपुस्तकेषु न दृश्यते। मोदकाकारञ्च कृत्वा दिनैकं स्थापयित्वा पश्चात्कुर्य्यादित्युपदेशो बोद्धव्यः। अयमभ्रकशोधनप्रकारः चक्रपाण्याचार्य्यमतानुसारेण निबद्धः। तत्र मण्डूकपर्णीरसेन पुनर्मोदककरणं यद्यपि नास्ति, तथापि केनापि पद्धतिकर्त्ता प्रतिसंस्कर्त्त्रोपदेशादिदं लिखितमिति बोध्यम्। तदनु चास्य अभ्रकस्य चूर्णीकृतस्य स्थालीपाकपुटपाकौ कर्त्तव्यौ, तदर्थं द्रव्याण्याह, स्थालीपाकमित्यादि।—आद्यैर्भृङ्गराजाद्यैरिति, लौहपुटनविधौ पूर्वोक्तैः भृङ्गराजकेशराजशतावरीकन्दमाण्डादिरसैरित्यर्थः। आद्यैरित्यत्र अन्यैरित्यपि पाठः। किन्तु पूर्वपाठ एव टीकाकारसम्मतः॥ ४१॥

एवं पुटादिशोधितस्याभ्रकस्य वक्ष्ये धापनं कार्य्यम्; ततस्तद्विधिमाह, ताड़ादिपत्रेत्यादि।—ताडा—तालनामख्याता, आदिशब्दात् केतकादिपत्रं बोध्यम्। किन्त्विदानीं ताड़ादिपत्रपिहितस्याभ्रस्य धापनं व्यवहरन्ति। पिण्डीकरणञ्चास्य भृङ्गराजादिद्रवालोडनादवगन्तव्यम्। दुग्धं प्रक्षाल्येति।—दुग्धनिर्वापितोत्थापिताभ्रकसंलग्नं यद्दुग्धम्। यद्यपीदानीं ताडादिपत्रपिहितस्य धापनमभ्रकस्य न व्यवहरन्ति, किन्तु पुटैरेवास्य निश्चन्द्रकत्वं क्रियते, तथाप्यध्मानात् बहुधा कृतत्वात् वा सम्यक् निश्चन्द्रकत्वमनेनास्य भवतीत्यवधारितम्। वस्तुतोऽभ्रकस्य निश्चन्द्रीकरणमेव यथोक्तगुणकरणे प्रयोजकमिति, तच्च येन केनापि भेषजेन भवतु। अपरापरेऽप्यभ्रकमारणप्रकारा नानाचार्य्योक्ताः सन्ति, ते च योगरत्नाकरसमुच्चयादधिगन्तव्याः। तत्रैकं प्रसिद्धमतं यथा—"मातभचोदकैः पिष्टमभ्रकं तत्र संस्थितम्। कन्द-

मण्डूकपर्णिकायाः पूर्वरसेनैव मोदनं कुर्य्यात् ।
स्थालीपाकं पुटनस्थाद्यैरपि भृङ्गराजाद्यैः ॥ ४१ ॥
ताड़ादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्माग्नौ ।
तावद्दहेच्च यावन्नीलोऽग्निर्दृश्यते सुचिरम् ॥
निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु ।
पिष्ट्वा घृष्ट्वा वस्त्रे चूर्णं निश्चन्द्रकं कुर्य्यात् ॥ ४२ ॥

इति अभ्रकविधिः ।

---

चमोदकस्य तद्विरहात्। पेषणानन्तरं यत् कर्त्तव्यं तदाह,—मण्डूकपर्णिकाया इत्यादि। पूर्व्वरसेनेति।—पूर्व्वं मण्डूकपर्णीरसे दिनत्रयं स्थापितमाभ्रीम् तेनैव रसेन विमर्द्य मोदनमिति मोदकाकारं कुर्य्यात्; मोदयतीति मोदन इति मोदनशब्दोऽपि मोदकार्थे द्रष्टव्यः। कश्चित्तु मोदकमिति पाठः। स च तत्तदाकारपुस्तकेषु न दृश्यते। मोदकाकारञ्च कृत्वा दिनैकं स्थापयित्वा स्थाल्यांकुर्य्यादित्युपदेशो बोद्धव्यः। अथ-भ्रकशोधनप्रकारः चमीपाचार्य्यमतानुसारेण लिखितः। तत्र मण्डूकपर्णीरसेन पुनर्मोदककरणं यद्यपि नास्ति, तथापि केनापि पद्धतिकर्त्त्रा प्रतिसंस्कृत्योपदेशादिदं लिखितमिति बोध्यम्। तदनु चास्य अभ्रकस्य चूर्णीकृतस्य स्थालीपाकपुटपाके कर्त्तव्ये, तदर्थं इत्याशयात्, स्थालीपाकमित्यादि।—आद्यैर्भृङ्गराजाद्यैरिति, धौत-पुटनविधौ पूर्वोक्तैः भृङ्गराजकेशराजशतावरीकन्दमाषादिरसैरित्यर्थः। आद्यैरित्यत्र अन्यैरित्यपि पाठः। किन्तु पूर्वपाठ एव टीकाकारसम्मतः ॥ ४१ ॥

एवं पुटादिभिः शोधितस्याभ्रकस्य वह्नौ ध्मापनं कार्य्यम्; तत्तद्विधिमाह, ताड़ादि-पत्रेत्यादि।—ताड़ा—तालतरुपत्रात्, आदिशब्दात् केतुकादिपत्रं बोध्यम्। किन्त्विदानीं ताड़ादिपत्रपिहितस्याभ्रस्य ध्मापनं व्यवहरन्ति। पिण्डीकरणञ्चास्य भृङ्ग-राजादिद्रवालोड़नादधिगन्तव्यम्। दुग्धं प्रक्षाल्येति।—दुग्धनिर्वापितोत्थापिताभ्रक-संलग्नं यद्दुग्धम्। यद्यपीदानीं ताड़ादिपत्रपिहितस्य ध्मापनमभ्रकस्य न व्यव-हरन्ति, किन्तु पुटैरेवास्य निश्चन्द्रकत्वं क्रियते, तथाप्यध्मानात् बहुधा हतत्वात् वा सम्यक् निश्चन्द्रकत्वमनेनास्य भवतीत्यवधारितम्। यतोऽभ्रकस्य निश्चन्द्रीकरणमेव यथोक्तगुणकरणे प्रयोजकमिति, तच्च येन केनापि भेषजेन भवतु। अपरापरेऽप्यभ्रक-मारणप्रकारा नानाचार्य्योक्ताः सन्ति, ते च योगरत्नाकरसमुच्चयादधिगन्तव्याः। तत्रैकं प्रसिद्धमतं यथा—"आम्रमत्स्योदकैः पिष्टमभ्रकं तत्र संस्थितम्। कन्द-

लौहभक्षणविधिः,—

नानाविधरुक्शान्त्यै पुष्ट्यै कान्त्यै शिवं समभ्यर्च्य ।
सुविशुद्धेऽहनि पुण्ये तदमृतमादाय लौहाख्यम् ॥
दशरक्तिपलपरिमाणं शक्तिवयोभेदमाकलय्य पुनः ।
इयदधिकं तदधिकतरमियदेव न माढमोदकवत् ॥ ४३ ॥
सममसृणामलपात्रे लौहे लोहेन मर्दयेच्च पुनः ।
दत्त्वा मध्वनुरूपं तदनु घृतं योजयेदधिकम् ।
बन्धं गृह्णाति यथा मध्वघृतयोगेन पङ्कमविर्शिपत् ॥ ४४ ॥

---

मात्रास्त्रिमेवारवह्निकर्पावेरच। शुद्धारवापिष्टेन त्वाक्समारिचजेन च। द्यौरमतौषधलवणाकेशराजकैः॥ पिषयं भावनं कुर्यात् पुटपाकमनेकधा। यावद्विरज्जकत्वं स्यात् ततो मोचरसेन च॥ त्वाक्समारिचजेनापि स्थालीपाकं प्रदापयेत्। यावत्भस्मत्वमायाति पद्धितैव विभावयेत्॥" अत्र द्यौरः,—श्वेतपुनर्नवा; लवणा—स्वनामख्याता, मोचा—रम्भा, त्वक्समगन्धवत्। त्रिलयमेव प्रकारः इदानीं प्रायः क्रियते ॥ ४२ ॥

लौहभक्षणविधिः।

इदानीं निष्पन्नस्य लौहस्य भक्षणविधिमाह, नानेत्यादि।—नानाविधव्याधयः पुराणज्वरातीसारग्रहणीरक्तपित्तराजयक्ष्मप्रभृतयः। अमृतमिति—अमृतमिवामृतम्। तच्च क्रियमाणमुपयोज्यम्।—तदाह, दशेत्यादि।—रक्तिका—रत्ति, तेन चरमतच्च क्रियमाणमुपयोज्यम्। अयच्च दशरक्तिपरिमाणारम्भः उत्तमपुरुषबलवयोऽपेक्षया-मानाम्मायकमित्यर्थः। अयच्च दशरक्तिपरिमाणारम्भः उत्तमपुरुषबलवयोऽपेक्षया-ऽभिहितः, तेन मध्यमाधमपुरुषशक्तिवयोऽपेक्षया इह दशरक्तिपरिमाण यथाक्रमं मध्यमाधमयोरधिकतरच्च भवतीति। नवीनत्वाद्यपेक्षया उक्तपरिमाणादल्पाल्पतरपरिमाणेनाप्यारम्भः। वर्द्धने कर्त्तव्ये न पुनर्दशरक्तिपरिमाणे युक्तमिति कृत्वा तावत्परिमाणमेव कर्त्तव्यमिति माढमोदकवन्नियमो न कार्य इत्यर्थः। तेन "आरम्भो वर्द्धनञ्चापि पचहितोनागुरुषा" तथा पञ्चसप्तनवेतरारक्तिकाः प्रथमदिने; तथा—"रक्तिमेकामुपक्रम्य यावत् सुवर्णरक्तिकाः" इत्यादि यत् तन्त्रान्तरेषूक्तं, तत् सर्वमनेन सङ्गृहीतं ज्ञेयम् ॥ ४३ ॥

लौहमर्दनार्थं पात्रमाह, समेत्यादि।—उत्तानवामकरतलस्थापनार्थं तत् पात्रं भाजनाकारं करणीयम्। लौहेनेति—लौहदण्डेन। मधु तदुचितं दत्त्वा। अधिक-

इदमिह दृष्टोपकरणमेतददृष्टन्तु मन्त्रेण ।
स्वाहान्तेन विमर्दो भवति फडन्तेन लोहवलरक्षा ।
सनमस्कारेण बलिर्भक्षणमयसो हुमन्तेन ॥

"ओँ अमृतोद्भवाय स्वाहा"। "ओँ अमृते हुँ फट्"। "ओँ नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये सुरगुरुविद्यामहाबलाय स्वाहा"। "ओँ अमृते हुँ" ॥ ४५ ॥

जग्ध्वा तदमृतसारं नीरं वा क्षीरमेवानुपिबेत् ।
कान्तक्रामकममलं सन्धार्य्य रसं पिबेद्दिने न तु तत् ।
आचम्य च ताम्बूलं लाभे घनसारसहितमुपयोज्यम् ॥४६॥

---

मिति ।—मध्यपेक्षया किञ्चिदधिकं घृतं निधेयम् । मर्दनविधये वचनमाह,—चर्ममित्यादि । अविभिन्नविदिति ।—सततं मधु अश्मयोगेन एकत्वेनाविभिन्नवत् विशेषमकुर्वन् अत एव घर्ष—घर्षमित्यर्थः ॥ ४४ ॥

दृष्टादृष्टाभ्यां हि कार्य्यसिद्धिरिति दृष्टमुक्त्वा मन्त्रजन्यादृष्टार्थमाह, इदमित्यादि ।—तत्र प्रथमं लोहमर्दनमन्त्रमाह, ओँ अमृतोद्भवायेत्यादि ।—अयं स्वाहान्तो मर्दनमन्त्रः । लोहरक्षणमन्त्रमाह,—ओँ अमृते हुँ फट् इति । बलिदानमन्त्रमाह, ओँ नम इत्यादि ।—भक्षणमन्त्रमाह,—ओँ अमृते हुमिति ॥ ४५ ॥

लौहभिषजपाकार्थमनुपानमाह, जग्ध्वेत्यादि ।—नीरञ्चात्र आकाशगुणबहुभूयिष्ठभूभागाश्रयम्; क्षीरञ्च गव्यं सर्व्वत्र; तत्रोक्तम्—"सर्व्वत्र गव्यमेवेति मतमाह पतञ्जलि" इति । अनुपानञ्च लौहापेक्षया चतुःषष्टिगुणं षष्टिगुणं वा कार्य्यम् । तदुक्तं योगरत्नाकरे—"अनुपानं चतुःषष्टिगुणं प्राहुः सदा बुधाः" इति; तथा अन्यत्रोक्तम्—"अनुपानं प्रयोक्तव्यं लौहात् षष्टिगुणं पयः" इति । अनुपानं कृत्वा लौहदोषनिरासाय निश्चयः कान्तक्रामकस्य स्वरसमात्रं पेयमित्याह, कान्तक्रामकमित्यादि ।—अनुपानादनन्तरं यद्विधेयं तदाह, आचम्येत्यादि ।—आचमनञ्च प्रतप्तशीतजलेन उष्णोदकेन वा । यदुक्तं—"कृत्वाऽनुपानमाचम्य प्रतप्तशीतजलेन वा । यद्वा उष्णोदकेनैव—" इत्यादि ॥ ४६ ॥

इदमिह दृष्टोपकरणमेतददृष्टन्तु मन्त्रेण।
स्वाहान्तेन विमर्दो भवति फडन्तेन लौहवलरक्षा।
सनमस्कारेण बलिर्भक्षणमयसो हुमन्तेन॥

"ओँ अमृतोद्भवाय स्वाहा"। "ओँ अमृते हुं फट्"। "ओँ नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये सुरगुरुविद्यामहाबलाय स्वाहा"। "ओँ अमृते हुं" ॥ ४५ ॥

जग्ध्वा तदमृतसारं नीरं वा क्षीरमेवानुपिबेत्।
कान्तक्रामकममलं सद्यश्च रसं पिबेद्दिने न तु तत्।
आचम्य च ताम्बूलं लाभे घनसारसहितमुपयोज्यम् ॥४६॥

---

मिति।—सम्यक्पेषणाय किञ्चिदधिकं घृत क्षेपणीयम्। मर्दनविध्यर्थं लक्षणमाह,—मध्यमित्यादि। अविशिंषदिति।—स्वतन्त्र मधु अप्रयत्नेन एकत्वेनाविशिंषत् विशेषनकुर्वत् घृत एव पङ्क—पङ्कमिवेत्यर्थः॥ ४४॥

दृष्टादृष्टाभ्यां हि कार्य्यसिद्धिरतो दृष्टमुक्त्वा मन्त्रजन्यादृष्टार्थमाह, इदमित्यादि।—तत्र प्रथमं लौहमर्दनमन्त्रमाह, ओँ अमृतोद्भवायेत्यादि।—अयं स्वाहान्तो मर्दनमन्त्रः। लौहरक्षणमन्त्रमाह,—ओँ अमृते हुं फट् इति। बलिदानमन्त्रमाह, ओँ नम इत्यादि।—भक्षणमन्त्रमाह,—ओँ अमृते हुमिति॥ ४५॥

लौहभेषजपाकार्थमनुपानमाह, जग्ध्वेत्यादि।—नीरञ्चात्र आकाशगुणमयभूयिष्ठभूभागाश्रयम्; क्षीरञ्च गव्यं सर्वत्र; उक्तञ्च—"सर्वत्र गव्यमेवेति मतमाह पतञ्जलि" इति। अनुपानञ्च लौहापेक्षया चतुःषष्टिगुणं षष्टिगुणं वा कार्य्यम्। तदुक्तं योगरत्नाकरे—"अनुपान चतुःषष्टिगुणं प्राहुः सदा बुधाः" इति; तथा अन्यत्रोक्तम्—"अनुपानं प्रयोक्तव्य लौहात् षष्टिगुणं पयः" इति। अनुपानं कृत्वा लौहदोषनिरासाय नित्यशः कान्तक्रामकस्य रसक्षमात्रं पेयमित्याह, कान्तक्रामकमित्यादि।—अनुपानादनन्तरं यद्विधेयं तदाह, आचम्येत्यादि।—आचमनञ्च शृतशीतजलेन उष्णोदकेन वा। यदुक्तं—"कृत्वाऽनुपानमाचम्य शृतशीतजलेन वा। यद्वा उष्णोदकेनैव—" इत्यादि॥ ४६॥

नात्युपविष्टो नात्यतिभाषी नातिस्थितस्तिष्ठेत् ।
अत्यन्तवातशीतातपयानस्नानवेगरोधादीन् ॥
लङ्घ्याध्व दिवानिद्रामहितस्त्र्याकालभुक्तञ्च ।
वातकृतः पित्तकृतः सर्वान् कट्वम्लतिक्तकषायान् ।
तत्त्वचणविनाशहेतून् मैथुनकोपश्रमान् दूरे ॥ ४७ ॥
अशितं तदधः पयात् पततु न वा पाटवं लघु प्रथताम् ।
आर्त्तिर्भवतु न वान्त्रे कूजति भोक्तव्यमव्याजकम् ॥ ४८ ॥
प्रथमं पीत्वा दुग्धं शाल्यन्नं विशदसिद्धमक्लिन्नम् ।
घृतसंप्लुतमश्नीयान्मांसैर्वैष्किरैः प्रायः ॥
उत्तममनूपरभूचरविष्किरमांसं तथाजमैणादिकम् ।

---

अनुपानादिकं कृत्वा यथा स्थातव्यं तदाह, नात्युपविष्ट इत्यादि ।—नातिस्थित इति ।—ऊर्द्ध्वीभूतः दण्डायमानः सन् अति न तिष्ठेत्—चिरं न तिष्ठेदित्यर्थः । अपरं परिवर्ज्जनीयमाह, अत्यन्तेत्यादि ।—अत्यन्तेति—वातादिभिः सम्बध्यते ; यानम्—अश्वादियानम् ; आदिशब्दादीर्ष्याचिन्ताविषमाशनाध्यशनादीनां ग्रहणम् । अकालभुक्तम्—अजीर्णादौ भोजनम् । वर्ज्जनीयरसानाह, वातकृत इत्यादि ।—वातकृत इत्यादिकं हेतुगर्भमेव विशेषणम्, किम्वा वातकृत. पित्तकृत इत्यनेन कट्वम्लतिक्तकषायाः पिप्पल्यामलकगुडूचीहरीतक्यादयो वातपित्ते न कुर्वन्ति, तेषामुपयोगो न विरुध्यत इति दर्शयति । विशेषेण वर्ज्जनीयविहारमाह, तत्त्वचेत्यादि ।—अत्रापि लङ्घ्यादिति पूर्वोक्तं सम्बध्यते ॥ ४७ ॥

प्रातरुपयुक्तं भोजयेत् अतः कस्यामवस्थायां भोक्तव्यम् ?—इत्याह—अशितमित्यादि । अशितं तदधः पयादिति ।—गुदेन पततु प्रवर्त्तताम्, न वा, तथा आर्त्तिरिति बुभुक्षा पीडा भवतु वा न वा, तथापि पाटवम् आलस्यादिराहित्यं लघु भवतु, तथा लोहसन्धिविनदेहे सञ्चरन् वायोः सञ्चरणेनान्त्रकूजनञ्च लघु भवतु ; तदेव अव्याजं निःशङ्कं भोक्तव्यम्, लघु इत्यङ्गीकारविज्ञाने । एतेन पाटवमन्त्रकूजनमित्युभयमेव भोजनं प्रति प्रयोजकमित्यर्थः ॥ ४८ ॥

इदानीं भोजनं येन विधिना कर्त्तव्यं तदाह, प्रथममित्यादि ।—विशदं—पृथक् ; अक्लिन्नमिति—नात्यन्तस्विन्नम् । दुग्धमिति ।—क्षीरस्य प्रकृतायाः कृष्णाया वा प्रकृतवर्णाया ग्राह्यम् । वैष्किरैरिति—लावतित्तिरादिविष्किरपक्षिभिः । प्रायःशब्दादाजैणादिकं बोद्धव्यम् । एतदेवाह, उत्तममित्यादि ।—अनूपभूचराः—आनूपदेशचराः

तेष्वष्टमाषकेषु प्रातर्माषकत्रयमश्नीयात्।
सायञ्च तावदह्नो मध्ये माषद्वयं शेषम् ॥ ५३ ॥

इति भक्षणविधिः।

एवं तदमृतमश्नन् कान्तिं लभते चिरस्थिरं देहम्।
सप्ताहत्रयमात्रात् सर्वरुजो हन्ति किं बहुना ॥
आर्य्याभिरिह नवत्या सप्तविधिना यथावदाख्यातम्।
भ्रमतिविपर्य्ययसंशयशून्यमनुष्ठानसुश्रीतम् ॥
मुनिरचितशास्त्रपारं गत्वा सारं ततः समुद्धृत्य।
निबबन्ध बान्धवानामुपकृतये कोऽपि षट्कर्मा ॥ ५४ ॥

अमृतसारं लौहं समाप्तम्।

---

रिकेत्यादि।—इदानीं पञ्चदिनाधिकसप्तसप्ताहैरष्टमाषकप्रमाणे सञ्जाते सति वत्सराभ्यन्तर एव केन प्रकारेण तल्लौहमुपयोज्यम्? इत्याह, तेष्वित्यादि।—अष्टमाषकेषु मध्ये माषकत्रयं प्रातः। तावदिति—माषकत्रयं सायाह्ने; अह्नो मध्ये—भोजनसमये, शेषं माषकद्वयम्। अन्यत्राप्युक्तं—"प्रातर्माषत्रयं कार्य्यं मध्याह्ने माषकद्वयम्। माषत्रयं दिनान्ते माषकाष्टकभक्षणम् ॥" इति। इदानीन्तु रक्तिकाद्वयमारभ्य दैनिकं प्रति रक्तिकाद्वयवृद्धेन त्रिसप्ताहपञ्चसप्ताहादिभिः किञ्चिदधिकमाषकत्रयं यावत् वृद्धिः, ततो द्विसप्ताहादिभिः रक्तिकाद्वयेनैव ह्रास इति प्रायो व्यवहरन्ति वृद्धाः। उत्तरक्रिया चात्र द्विगुणा कार्य्या; यदुक्तं पातञ्जले—"इति मुख्यक्रियायाः स्याद्द्विगुणा चोत्तरक्रिया"। उत्तरक्रियाऽत्र "नात्युपविष्टो नात्यतिमात्रो नातिस्थितश्चिरं तिष्ठेत्" इत्यादिना उक्तैव ॥ ५३ ॥

इति भक्षणविधिः।

इदानीमस्य लौहस्य फलमाह—एवमित्यादि। उपसंहरति आर्य्याभिरित्यादिना। सप्तविधयश्च—साध्यसाधनपरिमाणविधिः, लौहमारणविधिः, स्थालीपाकविधिः, पुटनविधिः, प्रधाननिष्पत्तिपाकविधिरथकविधिर्भक्षणविधिश्चेति। एषामनुष्ठानं नवत्या आर्य्याभिः कोऽपि षट्कर्मा भ्रमतिविपर्य्ययसंशयशून्यं यथा स्यात् तथा निबबन्ध इत्यर्थः। कोऽपीत्यनिर्दिष्टनामधेयः पुरुषः उत्कृष्टरूपः; षट्कर्मा—श्रोत्रियः; उक्तं हि—"याजनं यजनं दानं विप्रस्यैव परिग्रहः। अध्यापनमध्ययनं श्रोत्रियः षड्भिरेव च ॥" इति। भ्रमतिः,—सर्व्वथाऽज्ञानं, ज्ञानाज्ञानराहित्यं, तद्विसदृशबुद्धिभ्रमः; स च द्विधा—एककोटिकोऽनेककोटिकश्च; तत्राद्यो विपर्य्ययः, द्वितीयस्तु संशय इति।

यत्र तत्रोद्भवं लौहं निःशेषं मारितं यदि ।
त्रिफलाव्योषसंयुक्तं भक्षयेद्वलिनाशनम् ॥
सामान्याद्द्विगुणश्चौड्रं कलिङ्गोऽष्टगुणस्ततः ।
तस्माच्छतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥
वज्रात् षष्टिगुणः पाण्डिर्निरविंशभिर्गुणैः ।
ततः कोटिसहस्रं वा अयस्कान्तं महागुणम् ॥ ५५ ॥

---

अनुष्ठीयत इत्यनुष्ठान, ग्रन्थसन्दर्भ एव । यथावदाख्यातमित्यत्र पूर्वाचार्य्यैरिति शेषः । उदीरितमिति—गुरुपरम्परया उपदेशपूर्वकं कथितमित्यर्थः । मुनिर्नागार्जुन इत्यत्र मुनिः,—नागार्जुनः । मानवानामिति—मनुष्याणाम् । एवं चतुर्थाश्रयत्वेनास्याक्षेपकत्वं तथा च वक्ष्यते, एतेनास्य नियमस्य कर्मविधिपर्य्ययसमर्थनिरासः सर्वदेवेति गुणद्वयमुक्तम् ॥ ५४ ॥

अमृतसारलौहं समाप्तम् ।

इदानीं नागार्जुनोक्तं तारणरसायनलौहमाह, यत्र तत्रेत्यादि—यत्र तत्रोद्भवमिति । —लौहकलिङ्गादियत्किञ्चिद्देशभवं वक्ष्यमाणाद्यादिकमेव निःशेषं सर्वत्रैव मतम् । निःशेषमित्यत्र निरुत्थमिति पाठे—टङ्कणक्षारादियोगेनापि यत्नौ आपनार्थं नोत्तिष्ठते पुनर्लौहभावं नापद्यत इत्यर्थः । त्रिफलेत्यादि ।—व्योषं—त्रिकटुकम् ; त्रिफला-त्रिकटुचूर्णञ्च मिलित्वा लौहसमं बोध्यम् । संयुक्तं—सम्यक् युक्तं, तेन मधुघृताभ्यां लौहपात्रे लौहदण्डेन विमर्द्य भक्षणीयम् । रक्तिकादिक्रमेणेति वदन्ति वृद्धाः ; अन्ये त्वादौ माषकमेकमुपयोज्यमित्याहुः । इत्थं मध्ये वा चाग्निबलमपेक्ष्य यथा-शक्ति कुर्वन् सार्द्धसंवत्सरात् वलीं नाशयेदिति तारणरसायनटीकायामुक्तम् । लौहानां गुणमाह, सामान्यादित्यादि ।—दत्तकान्तिपर्य्यन्तदेशदर्शितयोर्नरादिक्रमेण लौहं सामान्यम्, द्विगुणमिति—सामान्यलौहात् द्विगुणगुणकारकम् । औड्रमिति—औड्रदेशोद्भवम्, भद्रमिति—भद्रदेशोद्भवम् । एषाम् भेदोऽत्र चक्रपाणिटीकायामनु-सन्धेयम्, इह तु विस्तरभयान्न लिखितम् ॥ ५५ ॥

प्रथमताम्रयोगः ।

रसतस्ताम्रं द्विगुणं ताम्रात् कृष्णाभ्रकं द्विगुणम् ।
पृथगेवैषां शुद्धिस्ताम्रशुद्धिस्ततो द्विविधा ॥
पर्वीकृतस्य गन्धकयोगाद्वा मारणं तथा लवणैः ।
आम्ले आपिततास्रे निर्गुण्डीकल्ककाञ्जिकमग्ने ॥
यत् पतति गैरिकाभं तत्पिष्टमर्द्धगन्धकं तदनु ।
पुटपाकेन विशुद्धं शुद्धं स्यादभ्रकन्तु पुनः ॥
हिलमोचिमूलपिण्डे घिसं तदनु मार्दसम्पुटे लिप्ते ।
तीक्ष्णं दग्धं पिष्टमम्लाम्भसा साधु चन्द्रिकाविरहितम् ॥
रेचितताम्रेण रसः खल्वशिलायां घृष्टः पिण्डिका कार्य्या ।
उत्स्वेद्य गृहसलिलेन निर्गुण्डीकल्कोऽसकृच्छुद्धो ।

---

सम्प्रति ताम्रयोगमाह, रसत इत्यादि ।—रसत इति ।—शोधितात् पारदात् ताम्रं वक्ष्यमाणक्रमेण मारितचूर्णावस्थं द्विगुणं ग्राह्यम् ; कृष्णाभ्रञ्च वक्ष्यमाणरीत्या मारितं चूर्णावस्थं ताम्राद्द्विगुणं ग्राह्यम् । कृष्णेति—अभ्रकविशेषणात् भेकवपुषो निरासः । एषां रसादीनां पृथगेव शुद्धिः कार्य्येति शेषः । तत्र इति ।—तेषु मध्ये ताम्रशुद्धिं द्विधा आह, किं तत्प्रकारद्वयम् ?—इत्याह, पर्वीकृतस्येत्यादि ।—मारणमिति छेद. । एतच्च तनुपत्रीकृतम् । ताम्रमित्यादि ।—अनन्तरमेव वक्ष्यमाणताम्रयोगमभिधास्यमानं सूचितवान् । द्वितीयां शुद्धिमाह, तथा लवणैरित्यादि ।—लवणैः सैन्धवादिभिः पञ्चभिरेव । आम्ल इति—लिप्ते । निर्गुण्डी—सिन्दुवारः, तदीयमूलमवसत्कयुक्तकाञ्जिकमग्न इत्यर्थः ; अत्र द्रुतरूपं यत् ताम्रं पतति तद्गैरिकवर्णोचितमित्यर्थः । ताम्रादर्द्धं गन्धकं दत्त्वा तावदेकीकृत्य पेष्टव्यं, ततः स्थाल्यामारोप्य तुषमृत्तिकया लिप्त्वा लोहवत् पुटो देयः । इति ताम्रशुद्धिः । अभ्रकशुद्धिमाह, अभ्रकन्त्वित्यादि ।—प्रथमतोऽभ्रकम् अम्लाम्भसा काञ्जिकेन पिष्ट्वा, तदनु हिलमोचिकापिण्डे कृत्वा एकमृत्पात्रे निधाय अपरेण पिधाय ( तदनु मृत्तिकापात्रसम्पुटमध्ये छिद्रं कृत्वा तुषमृत्तिकया प्रलिप्य ) तीक्ष्णमिति बहुलं यथा स्यात् तथा दग्धं पुटितं सत् चन्द्रिकारहितं भवति, तदनु पुटादाकृष्य शिलायां पिष्ट्वा चूर्णीकृत्य सत् ग्राह्यमित्यर्थः । अथ जारितताम्रचूर्णमिलितस्य रसस्य शुद्धिप्रकारमाह, रेचितेत्यादि ।—रेचित-

एतत् सिद्धं चितयं चूर्णिततात्म्रादिकैः पृथग्युक्तम् ॥
पिप्पलीविड़ङ्गमरिचैः ग्रहणं द्विनिमाषिकं भक्ष्यम् ।
शूलाम्लपित्तश्वयथुग्रहणीयक्ष्मादिकुक्षिरोगेषु ।
रसायनं महदेतत् परिहारो नियमतो नात्र ॥ ५६ ॥

द्वितीयताम्रयोगः,—

तनुपत्रीकृतं ताम्रं नैपालं गन्धकं समम् ।
दत्त्वा चोर्द्धमधो मध्ये स्थालिकामध्यसंस्थितम् ॥
कृत्वा स्वल्पशरावेण स्थालिमध्ये पिधाय च ।
शर्कराभक्तलेपेन लिप्त्वा सन्धिं तदूर्द्ध्वतः ॥

---

ताम्रेण मारितताम्रेण सह रसं खल्लमिश्रायां मेलयित्वा शुभा पिण्डिका कार्या; अन्योऽन्यविमर्द्दनेन एकीभावं कर्त्तव्य इत्यर्थः। तदनु निर्गुण्डी-कल्कमिश्रिते स्वच्छशिले काञ्जिके सा पिण्डिका चतुर्द्दिनमेकवारमुत् स्वेद्य, शुद्धाविति शुद्धार्थम्। तत्स्वेदनप्रकारस्त्वत्र,—सूतनियामकभार्ग्यादिगणाम्ब-तमद्रवे रसपिण्डितं मिलितरसताम्रचूर्णं दोलापाकेन निर्गुण्डीकल्कमिश्रितकाञ्जि-केनाधो ज्वालया ताप्यमानेन तत्स्वेदनीयमसकृदित्यर्थः। सूतनियामकस्य भार्ग्यादिगणो योगरत्नाकरे यथा—"भार्गी सरपुङ्खा कुठारच्छिन्ना ब्राह्मी मूषिक-पर्णिका पुनर्नवा अपराजिता चक्राकुण्डी मेकाक्षी कदली मयूरशिखा चेति। भार्ग्यादिरेष विख्यातो गणः सूतनियामकः॥" इति। अग्नितापेनापि रस कथञ्चिदपि च लिप्तं न ददातीत्यर्थः। सूतनियामकौषधमध्यगः रस सकानिकदोलायन्त्रे पचेत्। तदनु चितयमिदं रसाभ्रताम्रचूर्णं पिप्पल्यादिमयस्य प्रत्येकं ताम्रचूर्णादी-नान् मर्द्दीला सयोजनीयम्; तत एकीकृत्य अग्निबलाद्यपेक्षया द्विनिमाषकादिक-मुपयोज्यम्। आदिशब्देन अर्शःप्रभृतय.। कुक्षिरोगेष्विति—अग्निमान्द्यादिष्वपी-त्यर्थः ॥ ५६ ॥

ताम्रयोगान्तरमाह, तनुपत्रीकृतमित्यादि।—नैपालमिति—नेपालदेशीयं ताम्रम्। तनुपत्रीकृतमिति।—पत्रल यथा स्यात् तथा पत्रीकृतम्; एतत्तया च कष्टपत्रीध्यास्थो-पादानेन लभ्यत इति। तानि च तनूनि ताम्रपत्राणि अनेकानि कृत्वा अम्लोरादम्ल रसेन सम्मर्द्य प्रचाल्य संशोष्य च, तदनु ताम्रसममेव शोधितगन्धकं सञ्चूर्ण्य, तदन-न्तर स्थालिकायां कियदपि गन्धकचूर्णं दत्त्वा तदुपरि कियदपि तत् ताम्रपत्र निवेश्य

बालुकापूरितस्थाल्यां पिहितायां पुनस्तथा ।
सुलिप्तायाश्च यामैकमधोज्वालां प्रदापयेत् ॥
तत आकृष्टताम्रस्य मृतस्य लिख योजना ।
अथ कर्षं गन्धकस्य वह्निस्थलौहपात्रगम् ॥
शिलापुत्रेण सम्मर्द्य द्रुतं दृष्टं पुनःपुनः ।
क्षत्वा देयं मृतं ताम्रं कर्षमानं ततः पुनः ॥
रसोऽम्लमथितः शुद्धस्तावन्मात्रः प्रदीयते ।
ततस्तथैव संमर्द्य पुनराज्यं प्रदापयेत् ॥
अष्टबिन्दुकमात्रञ्च मर्दयेन्मूर्च्छितं तथा ।
सर्वं स्यात् तत आकृष्य शिलापुत्रादिसङ्गतम् ॥
संहृत्याम्लम्बुपरस-प्रस्रुतेन विलोड़ितम् ।
पुनस्तथैव वह्निस्थ-लौहपात्रे विमर्दयेत् ॥

---

पुनस्तदुपरि गन्धकचूर्णं देयमित्येवंक्रमेण सर्वाणि तानि ताम्रपत्राणि गन्धकचूर्णसहितानि उपर्य्यधोभावेन निवेश्य, ततोऽन्यशरावेण स्थाल्यन्तरनिवेशयोग्येन तत् ताम्रपुञ्ज पिधाय, तच्छरावप्रान्तञ्च शर्करासहितभक्तपिण्डेन लिप्त्वा तस्य शरावस्योपरिभागे बालुकापूर्णं तत् स्थालीपात्रं कृत्वा शरावेण तस्याः स्थाल्याः मुखं पिधाय तेनैव भक्तपिण्डेन लिप्त्वा प्रहरमेकमविच्छेदेनाधो ज्वालां प्रदापयेत्। इति ताम्रमारणम्। ततस्तत् मृतताम्रं स्थाल्याः समाकृष्य चूर्णयित्वा शोधितगन्धकादिभिः सह योजनीयमित्याह,—तत इत्यादि। कथं योजना कर्त्तव्येत्याह, अथेत्यादि।—अथ ताम्रमारणानन्तरं शोधितगन्धकस्यापरचूर्णकर्षमेकं ज्वलदङ्गारस्थलौहपात्रे कृत्वा शिलापुत्रेण सम्मर्द्य पीनपुच्छेन दृष्टा द्रवीभूते तस्मिन् तत् मृतताम्रचूर्णं कर्षमानं देयं, दत्त्वा तथैव शिलापुत्रेण घर्षणीयम्। तत पुनरिति।—ततोऽनन्तरं अग्नितापद्रुत एव अस्मिन् रसः पारदोऽपि तावन्मानः कर्षमान एव देयः। पुनस्तेनैव मर्दनीयः, किन्तु शिष्टो रसः अम्लमथितः सन् शुद्धः, चाङ्गेरीजम्बीराद्यम्लरसमथनाच्च शुद्ध। तदनु अष्टबिन्दुपरिमितं घृतं दत्त्वा पुनर्मर्दयेत् शिलापुत्रेणैव। तथा तेन प्रकारेण सर्वं गन्धकताम्रादिकं संमूर्च्छितमेकीभूतं स्यात्। ततस्ताम्रलौहपात्रात् निःशेषमाकृष्य तथा शिलापुत्रादिसङ्गतं शिलापुत्रादिघर्षितं

यावद्द्रवक्षयं पश्चादाकृष्य सम्प्रपेषितम् ।
अलम्बुषरसेनैव,गुड़कं सम्प्रकल्पयेत् ॥
तत्पिण्डं वस्त्रविस्तीर्णे पिण्डे त्रिकटुजे पुनः ।
वसनान्तरिते दत्त्वा पोट्टलीं कारयेद्बुधः ॥
ततस्तां पोट्टलीमाज्य-मग्नां कृत्वा विधारिताम् ।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलो भिषक् ॥
यदा निष्फेनता चाज्ये गुटिका च दृढ़ा भवेत् ।
तदा पक्वां तमाकृष्य पञ्चगुञ्जातुलाधृतम् ॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत् ।
तक्रं स्यादनुपानन्तु अम्लपित्तोत्क्षये पुनः ॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु ।
सप्तमे दिवसे रक्ति-वृद्धिस्तावत्तु माषकम् ॥

---

सुदृढमपि भस्म संहृत्य वर्त्तुलीकृत्य पञ्चदिनमालम्बुषरसेन विलोड्य रसक्षयपर्यन्तं पुनर्बृहत्स्थालीखपात्रे मर्दयेत्, तत आकृष्य अलम्बुषरसेनैव मिलायां पिष्ट्वा गुड़िकां कल्पयेत् । तदनन्तरं किं विधेयम् ?—इत्याह, तत् पिण्डमित्यादि ।—ततः कतिपयाङ्गुलवस्त्रखण्डे पिण्डानुरूपं त्रिकटुकं दत्त्वा विस्तार्य तदुपरि अपरवितताति निर्मलवस्त्रखण्डे तं रसौषधगुड़कं निधाय ततो दृढ़ा पोट्टलिका बद्धा, घृतपूर्णमार्त्तिकस्थालीपात्रे सूत्रेण दण्डसंलग्नतया दोलापाकविधिना तां पोट्टलीं तत्रारोप्य घृतनिमग्नां कृत्वा पचेत् । पाकमानार्थमाह, यदेत्यादि ।—गुटिका च दृढा भवेदिति ।—गुटिका—पोट्टलिका, तस्या दृढता च दण्डिकया ताड्य ज्ञेया । त्रिकटुत्रिफलाचूर्णयोः मिलितैव पञ्चगुञ्जेति मात्रातुल्यं, प्रातरित्यर्थः । अनुपानमाह, तक्रं स्यादित्यादि ।—अम्लपित्ते तु त्रिकटुचूर्णं परित्यज्य त्रिफलैव मात्रतुल्या देया, तथा तक्रञ्च परित्यज्य उष्णजलमेवानुपेयमित्याह, अम्लपित्तोत्क्षये इत्यादि ।—त्रिफलैव समा देया इति ।—त्रिफलैव मात्रतुल्या देयेत्यर्थः ; तथा कोष्णजलम् अनुपिबेदिति । वृद्धिक्रममाह, सप्तमे इत्यादि ।—सप्तम इत्यत्र वीप्सा ज्ञेया, तेन सप्तमे सप्तमे दिवसे रक्तिकाप्रमाणेन वृद्धिः कार्य्या, माषकमानं यावदयं प्रयोगः कार्य्यः । तेन माषकादूर्द्ध

वालुकापूरितस्थाल्यां पिहितायां पुनस्तथा ।
सुलिप्तायाञ्च यामैकमधोज्वालां प्रदापयेत् ॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना ।
अथ कर्षं गन्धकस्य वह्निस्थलौहपात्रगम् ॥
शिलापुत्रेण सम्मर्द्य द्रुतं घृष्टं पुनःपुनः ।
कृत्वा देयं मृतं ताम्रं कर्षमानं ततः पुनः ॥
रसोऽम्लमर्दितः शुद्धस्तावन्मात्रः प्रदीयते ।
ततस्तथैव संमर्द्य पुनराज्यं प्रदापयेत् ॥
अष्टबिन्दुकमात्रञ्च मर्दयेन्मूर्च्छितं तथा ।
सर्वं स्यात् तत आकृष्य शिलापुत्रादिसङ्गतम् ॥
संहृत्यालम्बुरस-प्रसृतेन विलोड़ितम् ।
पुनस्तथैव वह्निस्थ-लौहपात्रे विमर्दयेत् ॥

---

पुनस्तदुपरि गन्धकचूर्णं देयमित्येवंक्रमेण सर्वाणि तानि ताम्रपत्राणि गन्धकचूर्णसहितानि उपर्यधोभावेन निवेश्य, ततोऽन्यशरावेण स्थाल्यन्तर्निवेशयोग्येन तत् ताम्रपुञ्जं पिधाय, तच्छरावप्रान्तञ्च शर्करासहितमृत्प्रलेपेन लिप्त्वा तस्य शरावस्योपरिभागे वालुकापूर्णं तत् स्थालीपात्रं कृत्वा शरावेण तस्याः स्थाल्याः मुखं पिधाय तथैव मृत्प्रलेपेन लिप्त्वा प्रहरमेकमविच्छेदेनाधो ज्वालां प्रदापयेत्। इति ताम्रमारणम्। ततस्तत् मृतताम्रं स्थाल्याः समाकृष्य चूर्णयित्वा शोधितगन्धकादिभिः सह योजनीयमित्याह,—तत इत्यादि। कथं योजना कर्त्तव्येत्याह, अथेत्यादि।—अथ ताम्रमारणानन्तरं शोधितगन्धकस्यापरचूर्णकर्षमेकं ज्वलदङ्गारस्थलौहपात्रे कृत्वा शिलापुत्रेण सम्मर्द्य पौनःपुन्येन घृष्ट्वा द्रवीभूते तस्मिन् तत् मृतताम्रचूर्णं कर्षमानं देयं, दत्त्वा तथैव शिलापुत्रेण घर्षणीयम्। तत पुनरिति।—ततोऽनन्तरं चाग्नितापद्रुत एव अस्मिन् रसः पारदोऽपि तावन्मानः कर्षमान एव देयः। पुनस्तेनैव मर्दनीयः, किन्तु शिष्टो रसः अम्लमर्दितः सन् शुद्धः, चाङ्गेरीजम्बीराद्यम्लरसमर्दनाच्च शुद्धः। तदनु अष्टबिन्दुपरिमितं घृतं दत्त्वा पुनर्मर्दयेत् शिलापुत्रेणैव। तथा तेन प्रकारेण सर्वं गन्धकताम्रादिकं संमूर्च्छितमेकीभूतं स्यात्। ततस्तस्माल्लौहपात्रात् निःशेषमाकृष्य तथा शिलापुत्रादिसङ्गतं शिलापुत्रादिघर्षितं

यावद्द्रवक्षयं पश्चादाकृष्य सम्प्रपेषितम् ।
अम्लम्बुपरसेनैव गुडकं सम्प्रकल्पयेत् ॥
तत्पिण्डं वस्त्रविस्तीर्णे पिण्डे त्रिकटुजे पुनः ।
वसनान्तरिते दत्त्वा पोट्टलीं कारयेद्बुधः ॥
ततस्तां पोट्टलीमाज्य-मग्नां कृत्वा विधारिताम् ।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलो भिषक् ॥
यदा निष्फेनता चाज्ये गुटिका च दृढा भवेत् ।
तदा पक्वं समाकृष्य पञ्चगुञ्जातुलाधृतम् ॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत् ।
तक्रं स्यादनुपानन्तु अम्लपित्तोदये पुनः ॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु ।
सप्तमे दिवसे रक्ति-वृद्धिस्तावत्तु माषकम् ॥

---

सुदृढमपि मृतं संहृत्य वर्तुलीकृत्य पञ्चदशैनाम्लम्बुपरसेन विलोड्य रसचयपर्यन्तं पुनर्वह्निस्थलौहपात्रे मर्दयेत्, तत आलम्ब अम्लम्बुपरसेनैव मिश्रायां पिष्टा गुडिकां कल्पयेत् । तदनन्तरं किं विधेयम् ?—इत्याह, तत् पिण्डमित्यादि ।—ततः कतिपयाङ्गुलवस्त्रखण्डे पिण्डानुरूपं त्रिकटुकं दत्त्वा विस्तार्य तदुपरि अपरवितस्तारि निर्मलवस्त्रखण्डे तं तावीवधगुडकं निधाय ततो दत्वा पोट्टलिकां बद्धा, घृतपूर्णमार्त्तिकस्थालीपात्रे सूत्रेण दण्डसंलग्नतया दोलापाकविधिना तां पोट्टलीं तत्रारोप्य घृतनिमग्नां कृत्वा पचेत् । पाकज्ञानार्थमाह, यदेत्यादि ।—गुटिका च दृढा भवेदिति ।—गुटिका—पोट्टलिका, तस्या दृढता च दण्डिकया ताव ज्ञेया । त्रिकटुत्रिफलाचूर्णयोश्च मिलितैव पञ्चगुञ्जेति तावत्तुल्यं, प्रातरित्यर्थप्रहरे। अनुपानमाह, तक्रं स्यादित्यादि ।—अम्लपित्ते ॥ त्रिकटुचूर्णं परित्यज्य त्रिफलैव तावत्तुल्या देया, तथा तक्रञ्च परित्यज्य उष्णजलमेवानुपेयमित्याह, अम्लपित्तोदय इत्यादि ।—त्रिफलैव समा देया इति ।—त्रिफलैव तावत्तुल्या देयेत्यर्थः ; तथा कोष्णजलम् अनुपिबेदिति । वृद्धिक्रममाह, सप्तमे इत्यादि ।—सप्तम इत्यत्र वीप्सा ज्ञेया, तेन सप्तमे सप्तमे दिवसे रक्तिकाप्रमाणेन वृद्धिः कार्या, माषकमानं यावदयं प्रयोगः कार्यः । तेन माषकादूर्द्ध

यावत् प्रयोगस्तथैवापकर्षः पुनर्भवेत् ।
योगोऽयं ग्रहणीयक्ष्म-पित्तशूलाम्लपित्तहा ॥
रसायनश्चैतदिष्टं गुदकीलादिनाशनम् ।
न चात्र परिहारोऽस्ति विहाराहारकर्मणि ॥ ५७ ॥

इति ताम्रयोगः ।

शिलाजतुप्रयोगः,—

हेमाद्याः सूर्यसन्तप्ताः स्रवन्ति गिरिधातवः ।
जत्वाभं मृदुमृत्स्नाच्छं यन्मलं तच्छिलाजतु ॥
अनम्लञ्चाकषायञ्च कटुपाकि शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः ॥
हेम्नोऽथ रजतात् ताम्राद्वरं कृष्णायसादपि ॥

---

वृद्धिर्न कर्त्तव्येत्यर्थः । येनैव क्रमेण वृद्धिः कार्य्या तेनैव क्रमेण ह्रासोऽपीत्याह,—तथैवापकर्षः पुनर्भवेदिति । केचित्तु इडवेदाक्षिफलाव्यतिरेकेण विविरक्तिकमिदमौषधं मधुना समालोड्य ददति ; तेनैव महान् विशेषो दृश्यते । गुदकीलादिनाशनमित्यादिशब्दात् पाण्डुरोगादयः ॥ ५७ ॥

इति ताम्रयोगः ।

इदानीं चरकोक्तशिलाजतुरसायनमाह, हेमाद्या इत्यादि ।—गिरिभवा धातवो गिरिधातवः, हेमाद्या इति तद्विशेषणम् । आद्यशब्दात् लौहरूप्यताम्रत्रपुसीसगैरिकमनःशिलादीनामपि ग्रहणम् । अत एवोक्तं हारीते—"सुवर्णरूप्यत्रपुसीसताम्रलौहादिकञ्चापि मनःशिला च" इत्यादि । हेमादिशब्देनेह हेमादिसम्भवस्थानभूताः शिला उच्यन्ते । यतोऽसाधात् सुवर्णादिभ्य एव शिलाजतु भवति । शिलाजतुसामान्यलक्षणमाह, जत्वाभमित्यादि ।—मृत्स्न—मसृणम्, अच्छं—स्वच्छम् । अनम्लमित्यादि विशिष्टप्रतिषेधस्य शेषाद्यनुज्ञाफलकं, तस्मादस्य चतुष्टयस्यात्र विधिः । धातुभ्यश्चतुर्भ्य इति ।—रसायनाधिकारात्, तेन सुवर्णरूप्यत्रपुसीसेत्यादिना हारीतेन यदेव विविधधातुसम्भवत्वमुक्तं तेन समं न विरोधः । नात्युष्णशीतमिति ।—शीतोष्णयोर्बलवत्त्वं निषिध्यते, तेन किञ्चिदुष्णं किञ्चिच्छीतलं वा शिलाजतु भवतीत्यर्थः । ते के चत्वारो धातवः ?—इत्याह हेम्न इत्यादि । क्रमेण हेमादि-

मधुरश्च सतिक्तश्च जवापुष्पनिभश्च यत्।
विपाके कटु तिक्तश्च तत् सुवर्णस्य निःस्रवम् ॥
राजतं कटुकं श्वेतं स्वादु शीतं विपच्यते ॥
ताम्राद्बर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु ॥
यत्तु गुग्गुलुसङ्काशं तिक्तकं लवणान्वितम्।
विपाके कटु शीतश्च सर्वश्रेष्ठं तदायसम् ॥
गोमूत्रगन्धः सर्वेषां सर्वकर्मसु यौगिकः ॥
रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते।
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ॥
विशेषेण प्रशस्यन्ते मला हेमादिधातुजाः ॥ ५८ ॥

---

सम्भवानां चतुर्णां लक्षणमाह, मधुरमित्यादि।—चकारात् स्निग्धत्वादिकं बोद्धव्यम्। यदाह हारीतः,—"स्निग्धं घनं काञ्चनगैरिकाभं सतिक्तशीतं मधुरं सुवर्णात्" इति। अत्र शिलाजतुसामान्यगुणकथने अम्लकषायव्यतिरिक्तरसचतुष्टयमुक्तं, तथा कटुपाकीत्वमुक्तं, तेन विशेषगुणकथने पुनर्यो रसोऽभिधीयते स उत्कर्षवानिति ज्ञेयः, सामान्यगुणोक्तरसोऽनुक्तोऽपि लभ्यत एव। यत्तु रौप्यभवे कटुपाकविरुद्धो मधुरपाक उक्तः, स उत्सर्गापवादन्यायेन समर्थनीयः। अन्ये तु—स्वादु विपच्यत इति, अस्य मधुरविरुद्धं पच्यते इत्यर्थं, तेन कटु पच्यते इत्याहुः; अत एव हारीते विदाहित्वमस्य यदुक्तं तदप्युपपद्यते, यथा—"रौप्याकरोत्थन्तु सपाण्डुवर्णं सक्षारकं तत् कटुकं विदाहि" इति युक्तिमुपवर्णयन्ति। अत्र वीर्ये ताम्रभवस्योष्णमुक्तं, तथाऽन्यत्र राजतस्य शीतमुक्तं, तेन नात्युष्णशीतवीर्यत्वयोः सामान्यगुणोक्तयोरवकाशो नास्तीति केचिदाहुः, तन्न युक्तम्; यतो नात्युष्णशीतपदेन नात्युष्णशीतत्वं विधीयते, किन्तु शीतोष्णवीर्यत्वस्वभावः निषिध्यते, तेन किञ्चिच्छिलाजतु शीतम् उष्णञ्च किञ्चिच्छिलाजतु भवतीति प्रागेव व्याख्यातम्। ताम्रभवशिलाजतुगुणकथने तिक्तोष्णमित्यत्र तीक्ष्णोष्णमिति केचित् पठन्ति, तन्मते—ताम्रजे यद्यपि रसो नोक्तस्तथापि सामान्योक्तकटुरसत्वमेव सानुभवरसभावेन ज्ञेयमित्यर्थमाहुः। पश्चिममित्यायसम्। यथाक्रममिति।—वातपित्ते सौवर्णं, श्लेष्मपित्ते रौप्यजं, कफे ताम्रजं, त्रिदोषजे लौहजमित्यर्थः ॥ ५८ ॥

लौहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि ।
तृणाद्यग्रे कृतं श्रेष्ठमधो गलति तन्तुवत् ॥
मलिनं यद्भवेत् तच्च चालयेत् केवलाम्भसा ।
लौहपात्रेषु विधिना ऊर्द्ध्वीभूतञ्च संहरेत् ॥
वातपित्तकफघ्नैस्तु निर्य्यूहैस्तत् सुभावितम् ।
वीर्य्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा ॥
प्रक्षिप्योद्धृतमावापं पुनस्तत् प्रक्षिपेद्रसे ।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥

---

श्रेष्ठशिलाजतुनो लक्षणमाह, लौहकिट्टायत इत्यादि।—यत् शिलाजतु वह्नौ विगतधूमं सत् संदह्यते, लौहमलवच्च भवति तच्छ्रेष्ठम्। परीक्षान्तरमाह, अम्भसीत्यादि।—अम्भसि कृतं जले क्षिप्तं सत् यच्च प्रथमतः तृणाग्रे—प्लवते, ततः तन्तुवत् गलति—अधस्तात् तन्तुवल्लम्बते, तत् शिलाजतु श्रेष्ठमित्यर्थः। शिलाजतुशोधनमाह, मलिनमित्यादि।—अम्भसा उष्णोदकेन। लौहपात्रेषु—भाजनाकारलौहपात्रेषु; विधिनेति।—हारीतोक्तशिलाजतुशोधनविधिना। ऊर्द्ध्वीभूतं—सरवदूर्द्ध्वमुत्थितं यत् तत्, संहरेत्—संगृह्णीयात्, काचादिनिर्मलपात्रे स्थापयेदित्यर्थः। तत्रायं शोधनविधिः,—प्रथमं केवलं शिलाजतु जले धौतं कृत्वा तदनु कीटादिदुष्टौषधिदोषविनाशाय अगुरुगुग्गुलमरीचिनिम्बपत्रयवगृहधूमैर्धूपयित्वा, तदनु घर्म्मे चूर्णीकृत्य, तदनु भाजनाकारलौहपात्रे कृत्वा दशमूलकषायं त्रिफलाक्वाथं वा केवलोष्णोदकं वा प्रक्षिप्य विमर्द्य लौहमुषलिकया तरलीकृत्य प्रचण्डातपे स्थापनीयम्। तत्र च प्रचण्डातपावस्थानेन सरवदूर्द्ध्वं यदुत्तिष्ठति तत् पुनर्गृहीत्वा काचादिनिर्मलपात्रे स्थाप्यम्; एवम्भूतं शिलाजतु भावनायां योग्यम्; उक्तं हि हारीते—"तदाहरयित्वा क्रमशो विभज्य देशे प्रशस्ते मङ्गलसिद्धियुक्ते। तिथौ च पुण्ये सुदिने च शुक्ले नक्षत्रयोगेन शिवेन चापि॥ लोहाटकौनिम्बगुडूचीसर्षपैर्यवैर्यथावत् परिधूपयेच्च। सन्नाशिकाकीटपतङ्गदग्धदुष्टौषधीदोषविनाशनं तत्॥" इति। इदानीं परकीय-भावनाविधिमाह, वातपित्तेत्यादि।—निर्य्यूहैः,—क्वाथैः। सुभावितमिति—सप्ताहम्। सर्वैरिति—वातघ्नादिक्वाथैः। भावनातः किं स्यात्? इत्याह—वीर्य्योत्कर्षमित्यादि। प्रक्षिप्येत्यादि।—रसे वातघ्नादिक्वाथे कोष्णे शिलाजतु प्रक्षिप्य यथादावापं तपने शुष्कं सत् पुनरपि तद्रसे प्रक्षिपेत्। आवापं—शुष्कं, "शुष्के वानसुषे त्रिषु" इत्य-

तुल्यं गिरिजेन जले चतुर्गुणे भावनीयमौषधं क्वाथ्यम्।
ततः क्वाथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम्।
तत् समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः ॥

पूर्वोक्तेन विधानेन लोहैश्चूर्णीकृतैः सह।
तत् पीतं पयसा दद्याद्दीर्घमायुः सुखान्वितम्।
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम् ॥
मेधास्मृतिकरं धन्यं क्षीराशी तत् प्रयोजयेत्।
प्रयोगः सप्तसप्ताहास्त्रयश्चैकश्च सप्तकः ॥
निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा।
मात्रा पलन्त्वर्धपलं स्यात् कर्षस्तु कनीयसी ॥
शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च।
वर्जयेत् सर्वकालञ्च कुलत्थान् परिवर्जयेत् ॥

---

१८। इदानीं भावनार्थद्रव्यमानादिकमाह, तुल्यमित्यादि।—तत्क्वाथस्य।—गिरिजेन शिलाजतुना तुल्यं भावनीयं द्रव्यमूषकादिकं क्वाथ्यम्। तत् समरसतां यातमिति।—तच्छिलाजतुक्वाथेन सह समरसतामिति व्याधीकरणेन एकीभूय यत् तुल्यरसतां गतमित्यर्थः। एवं द्रव्यं भावितश्च शिलाजतु लौहचूर्णेन सार्द्धमेकीकृत्य दुग्धेन पातव्यमित्याह, पूर्वोक्तेनेत्यादि।—चरकस्य।—पूर्वोक्तेनेति चरके एव रसायनविधिः रसायनपादे पूर्वोक्तो विधिः। अत्र भावनौषधाः शिलाजतुलौहचूर्णयोः समत्वं कश्चिदाह, तत्र; शिलाजतुनोऽधिकृतत्वात् प्राधान्यात् तदपेक्षयैव पादिकस्य लौहचूर्णस्य भाव्यत्वात्; क्वाथोऽप्येवमेवोक्तम्। चतीनिचूर्णेचतुर्भागेरित्यादि। क्षीराशी—क्षीरप्रधानभोजनचारी। इदानीमेतत्प्रयोगस्य कालभेदेन त्रैविध्यमाह, प्रयोग इत्यादि।—सप्तसप्ताहाः—एकोनपञ्चाशद्दिनानि सप्तापचयप्रयोग इत्यर्थः; एवं प्रयत्नेन सप्तक इति बोध्यम्। प्रयत्नार्थे त्रिविधां मात्रामाह, मात्रेत्यादि।—यस्मिन् प्रयोगे वर्ज्यमाह, शिलाजतुप्रयोगेष्वित्यादि।—विदाहीनि—वंशकरीरमरिचराजिकादीनि। शिलाजतुप्रयोगे गुरूण्यभिष्यन्दीनि गुरूणि पिष्टकादिप्रयोगाभिधानम् उपर्यवादनादेव न विरुद्धमिति। कैचित्तु कुलत्थानिति—कुलत्थादीन्, तेन काकमाचीकपोतयोरपि ग्रहणम्। यतो हि वाग्भटे—"कुलत्थं काकमाचीञ्च कपोतञ्च सदा त्यजेत्" इत्याहुः। सर्वकालमिति—यावज्जीवं

पयांसि शुक्लानि रसाः सयूषा-
स्तोयं समूत्रं विविधाः कषायाः।
आलोड़नार्थे गिरिजस्य शस्ता-
स्ते ते प्रयोज्याः प्रसमीक्ष्य कार्य्यम्॥
चरकोक्तशिलाजतुविधानं सोपस्कारमेतत्॥ ५८॥

शिवागुड़िका—

कालेतु रवितापाढ्ये क्वाथयसजं शिलाजतुप्रवरम्।
त्रिफलारससंयुक्तं त्र्यहस्य शुष्कं पुनः शुष्कम्॥
दशमूलस्य गुडूच्या रसे बलायास्तथा पटोलस्य।
मधुकरसैर्गोमूत्रे त्र्यहं त्र्यहं भावयेत् क्रमशः॥
एकाहं क्षीरेण तु तत् पुनर्भावयेच्छुष्कम्।
सप्ताहं भाव्यं स्यात् क्वाथेनैषां यथालाभम्॥

---

यनहिता गुणान्तिष्ठन्ति। केचित्तु—यावज्जीवनं कुलत्थवर्जनमाहुः। कुलत्थस्य सर्वकालवर्जने उपपत्तिश्चरकेणैव उक्ता, यथा—"ते ह्यत्यन्तविरुद्धत्वादश्मनो भेदनाः परम्। लोके दृष्टास्तस्तेषां प्रयोगः प्रतिषिध्यते॥" इति। येर्द्रव्यैरालोड्य शिलाजतु पेयं तान्याह, पयांसीत्यादि।—चरकस्य।—सोपस्कारमिति।—चरके शिलाजतु परीक्षादिकं मोक्तम्, अत्र पुनः "लौहकिट्टायते" इत्यादिना तदप्युक्तमिति सोपस्कारत्वम्॥ ५८॥

चरकोक्तशिलाजतुविधिमभिधाय शिवतन्त्रोक्तमसिद्धशिलाजतुप्रयोगं शिवगुड़िकामाह, काल इत्यादि।—रवितापाढ्ये इति विशेषणाद् ग्रीष्म इति यावत्; अन्ये तु शरदमित्याहुः। शिलाजतुनोऽत्र षोड़शपलमात्रा, वक्ष्यति च "पलानि दश षट् च" इति; तेन तन्मानसम मिलितत्रिफलाद्रव्यं गृहीत्वा क्वाथयित्वा त्र्यहं भावना, कर्त्तव्येत्याह, त्रिफलेत्यादि।—त्रिफलारससंयुक्तं सच्छुष्कं पुनस्त्रिफलारससंयुक्तं तच्छुष्कम्, एवं त्र्यहं भावयेदित्यर्थः। अत्र "तुल्यं गिरिजेन जले" इत्यादि पूर्वोक्तवचनानुसारेण त्रिफलाक्वाथं कृत्वा त्र्यहं भावना कार्य्येत्यर्थः। एवं दशमूलक्वाथादिभिर्गोमूत्रान्तैरपि त्र्यहं त्र्यहं क्रमेण भावयेदित्याह—दशमूलस्येत्यादि। क्षीरेण पुनरेकाहमिति—क्षीरेण एकाहमेव भावयेदित्यर्थः। वक्ष्यमाणकाकोल्यादिक्वाथेन पुनः सप्ताहं भावना कर्त्तव्येत्याह,—सप्ताहं भाव्यं स्यादिति।

काकोल्यौ द्वे मेदे विदारीयुग्मं शतावरी द्राक्षा ।
ऋद्धियुगर्षभवीरामुण्डितिका जीवकोंऽशुमत्यौ च ॥
रास्नापुष्करचित्रकदन्तीभकणाकलिङ्गचव्याब्दाः ।
कटुका शृङ्गीपाठे तानि पलांशिकानि कार्याणि ॥
अब्द्रोणे साधितानां रसेन पलांशिकेन भाव्यानि ।
गिरिजस्यैवं भावितशुद्धस्य पलानि दश षट् च ॥
द्विपलञ्च विश्वमागधिकाकटुकर्कटाख्यमरिचानाम् ।
चूर्णं पलञ्च विदार्यास्तालीशपलानि चत्वारि ॥
षोडश सितापलानि चत्वारि घृतस्य माक्षिकस्याष्टौ ॥

---

पलांशिकानीति ।—वक्ष्यमाणकाकोल्यादीनाम् । यथालाभमिति वचनात् रास्नापुष्करकटुरोहिण्यादिव्यतिरेकेणापि । विदारीयुग्ममिति—विदारी क्षीरविदार्यौ । क्षीरविदार्यास्तु लक्षणं—"क्षीरशुक्ला दीर्घकन्दा चातिमधुरा क्षीरविदारी" इति भवचिकित्सितगन्धतैलव्याख्यायां गदाधरेणोक्तम् ; सा हि सुगन्धा दुर्गन्धा च । ऋद्धियुगं—ऋद्धिवृद्धी । वीरा—माषीति त्रिविक्रमः, जलजमाषमिति रत्नप्रभा । जीवक इति ।—अत्र गुणजीवके, अंशुमत्यौ—शालपर्णीपृश्निपर्ण्यौ ; इभकणा—गजपिप्पली ; कटुकी—कटुरोहिणी ; एतान्यष्टाविंशतिद्रव्याणि लिखितानि । वाग्भटे तु रसायनतन्त्रपठितशिवगुडिकापाठे—ऋद्धिऋषभकादिषड्द्रव्याणि पठ्यन्ते ; तद्यथा—"ऋद्धिऋषभकौ मुण्डिरीन्द्रयवौ कटुरोहिणी कर्कटशृङ्गी च" इति । तदेवमुभयाचार्यप्रामाण्यादुभयथैव प्रयोगप्रकृतिरभ्युपेया । अतः त्रिफलादिवत् तवमर्धविधाया यथालाभवचनादेतानि षोडशद्रव्याणि न रसायनेऽपीति केचित् । एवाशाष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां क्वाथनार्थं द्रोणजलद्रोणसाधितमेतत्क्वाथषोडशशरावैः सप्तधाविभक्तैः सप्तदिनानि भावना सप्त कर्तव्याः ; किन्तु सप्तदिने क्वाथव्याप्तता भवति । ततश्चैषामष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां सप्तदिनविभागेन पलचतुष्टयं मिलित्वा ग्राह्यं, तेन प्रतिदिनं पलचतुष्टयविभागेन काकोल्यादीनां प्रत्येकं माषा ८, रत्तिका २ ग्राह्यम् , एवं जलद्रोणस्यापि सप्तदिनविभागेन दैवजलशराव ८, पल १, माषा ८, रति १, जल पादावशिष्टतया ग्राह्य शर ३, पल ९, कर्ष १, माषा २ ; अस्मिन् क्वाथे पूतोष्णे प्रतिदिनं शिलाजतुभावना, एवं सप्ताहं कर्तव्यम् । दश षट् चेति ।—षोडशेत्यर्थः । यद्यपि निर्देशस्य

तिलतैलस्य द्विपलं चूर्णार्द्धपलानि पञ्चानाम् ।
त्वक्क्षीरिपत्रलवङ्गनागैलानां मिश्रयित्वा तु ।
गिरिजस्य षोडशपलैर्गुडिकाः कार्यास्ततोऽक्षसमाः ।
ताः शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थाप्याः ॥
तासामेका काले भक्ष्या पेयाऽपि वा सततम् ॥
क्षीररसदाड़िमरसाः सुरासवं मधु च शिशिरतोयानि ।
आलोड़नानि तासामनुपाने वा प्रशस्यन्ते ॥
जीर्णे लघ्वन्नपयोजाङ्गलोनिर्य्यूहयूषभोजी स्यात् ।
सप्ताहं यावदतःपरं भवेत् सर्वं सामान्यम् ॥
भुक्ताऽपि भक्षितेयं यदृच्छया नावहेद्भयं किञ्चित् ।
निरुपद्रवा प्रयुक्ता सुकुमारकैः कामिभिश्चैव ॥
संवत्सरप्रयुक्ता हन्त्येषा वातशोणितं प्रबलम् ।
बहुवार्षिकमपि गाढं यक्ष्माणञ्चाढ्यवातञ्च ॥
ज्वरयोनिशुक्रदोषप्लीहार्शःपाण्डुहृद्ग्रहणीरोगान् ।
प्रश्रवमिगुल्मपीनसहिक्काकासारुचिश्वासान् ॥
जठरं श्वित्रं कुष्ठं पाण्डुं क्लैब्यं मदं क्षयशोषम् ।

---

मानमधानत्वात् त्रिफलादीनां मरिचान्तानां मिलितैव पलद्वयं युज्यते, तथापि वाग्-
भटमतानुरोधात् प्रत्येकमेव द्विपलं ग्राह्यम्। पञ्चानामिति।—त्वक्क्षीर्यादीलान्तानां
प्रत्येकमर्द्धपलं वाग्भटदर्शनादेव। त्वक्क्षीरी—वंशलोचना। गिरिजस्य षोडश-
पलैर्मिश्रयित्वेति बोध्यम्। इह सर्वेष्वेव शिलाजतुप्रयोगेषु कर्त्तव्येषु प्रथमं शोधनं
विधाय त्रिफलाकृतं क्वाथं मांसं वापि बलानुरूपमनायं दातव्यं, यथा स्निग्धो भवति ;
तदुक्तं तन्त्रप्रदीपे—"संशुद्धकायी विमलेन्द्रियश्च प्रशान्तचञ्चमुहृत्संयोगी। पिबेद्-
घृतं त्रिफलाकषायसिद्धं क्वाथं मांसं वापि बलानुरूपम्॥" इति ; "यथा हि प्रसर्वं कफवा-
ताद्यं मध्ये न हन्याद्धातुप्रयुक्तम्। येनाधिकत्वापि शिलाजमेव देहं न हन्यात्
बलवर्णदायि" ॥ इति च। पलसमा पाकसमभावा, पलतदनुमानैव
मध्यमाधमपुरुषापेक्षया मात्रोह्या। यदृच्छया इच्छानियमेन ; तेन कदाचित्
भुक्ताऽपि भक्षिता सती विकारं न जनयेदित्यर्थः। आढ्यवात—ऊरुस्तम्भः।
मदनहेतुमक्लैब्यद्वयपरिहारार्थं चार्थ्यं क्लैब्यमित्युभयपदोपादानं बोध्यम्। यद्यपि

उन्मादापस्मारौ वदनाक्षिशिरोगदान् सर्वान् ॥
आनाहमतीसारं सासृग्दरं कामलाप्रमेहांश्च ।
यक्ष्मदर्बुदानि विद्रधिभगन्दरं रक्तपित्तञ्च ॥
अतिकार्श्यमतिस्थौल्यं स्वेदमथ श्लीपदञ्च विनिहन्ति ।
दंष्ट्राविषं समौलं गराणि च बहुप्रकाराणि ॥
मन्त्रौषधिप्रयोगान् विप्रयुक्तान् भौतिकांस्तथा भावान् ।
पापालक्ष्मीं चेयं शमयेद्गुड़िका शिवा नाम्ना ॥
बल्या वृष्या धन्या कान्तियशःश्रीप्रजाकरी चेयम् ।
दद्यान्नृपवल्लभतां जयं विवादे सुखस्था च ॥
श्रीमान् प्रकृष्टमेधाः स्मृतिबुद्धिबलान्वितोऽतुलशरीरः ।
पुष्ट्योजोऽतिविमलेन्द्रियतेजोबलसम्पदुपेतः ॥
वलीपलितरोगरहितो जीवेच्छरदां शतद्वयं पुरुषः ।
संवत्सरप्रयोगाद्द्वाभ्यां शतानि चत्वारि ।
सर्वामयजित् कथितं मुनिगणभक्ष्यं रसायनरहस्यम् ॥
समुद्रभूतामृतमन्थनोत्थः स्वेदः शिलाभ्योऽमृतवद्गिरेः प्राक् ।
यो मन्दरस्यात्मभुवा हिताय न्यस्तः स शैलेषु शिलाजरूपी ॥
शिवागुड़िकेति रसायनमुक्तं गिरीशेन गणपतये ।
शिववदनविनिर्गता यथाम्नाता तस्माच्छिवा गुड़िका ॥६०॥

इति शैवामराभीष्टा शिवागुडिकेयम् ।

इति शिलाजतुविधानम् ।

---

बीभत्सवीर्यत्वप्रसवत्वजङ्गमत्वमसाध्यत्वेनोक्तं, तथापि प्रयोगमाहात्म्यात्साधनार्थमिदमुक्तम्। गराणि—संयोगविषाणि, भौतिकान् भावानिति।—भूतकृताः पीडाः। संवत्सरप्रयोगादिति पूर्वेण सम्बध्यते। द्वाभ्यामिति—संवत्सराभ्यामित्यर्थः। शिलाजतुन उत्पत्तिमाह, समुद्रभूतेत्यादि।—अमृतमन्थनोत्थ इति।—अमृतमन्थनसमयज.। हितायेत्यादि।—हितायैव जगतामिति शेषः॥ ६०॥

इति शिवागुडिका।

इति शिलाजतुविधानम्।

अमृतभल्लातकी—

सुपक्वभल्लातफलानि सम्यग्द्विधा विदार्य्याढकसम्मितानि।
विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषे व्यपनीय तानि॥
पुनः पचेत् क्षीरचतुर्गुणेन
घृतांशयुक्तेन घनं यथा स्यात्।
सितोपलाषोड़शभिः पलैस्तु
विमिश्र्य संस्थाप्य दिनानि सप्त॥
ततः प्रयोज्याग्निबलेन मात्राम्
जयेद्गुदोत्थानखिलान् विकारान्।
कचान् सुनीलान् घनकुञ्चिताग्रान्
सुपर्णदृष्टिं सुकुमारताञ्च॥

---

अमृतभल्लातकीमाह, सुपक्वेत्यादि।—भल्लातकस्यामृतभल्लातकीघृतोत्तरीया व्याख्याति ; यथा—"भल्लातकानां पवनोद्धूतानां शस्त्रक्षुतानामिह आढकं स्यात्। तवेष्टकाचूर्णकणैर्विघृष्य प्रक्षाल्य धीरो विधिवत् प्रभाते॥ पश्चात् पुनश्छिद्रीकृतस्य ततः पचेदप्सु चतुर्गुणासु। पादावशिष्टं परिपूतशीतं क्षीरेण तुल्येन पुनः पचेत्तु॥ तत्पादशिष्टं पुनरेव शीतं घृतेन तुल्येन पचेत् सुशीतम्। तदर्द्धया शर्करयावकीर्य्य ततः क्षौद्रेणोन्मिश्रितं विधाय॥ भाण्डे विशुद्धे त्वथ धान्यराशौ संस्थापयेत् सप्त दिनानि चैव। तस्मात्प्रयोगात् परिजातवीर्य्यम्—" इत्यादि। अत्र भल्लातकानां चतुःषष्टिपलानि, तदपेक्षया चतुर्गुणं जलं ग्रहणार्थं द्रव्यद्वैगुण्यात् षट्शतावपरिमितं यद्यपि भवति, तथापि वस्त्रतापनतन्त्रान्तरीयवाक्यैकवाक्यतानुरोधात् आढके पलद्विशतं विधाय पलोल्लेखागतत्वेन द्वैगुण्यं विधेयं, तथा क्वचित् पलोल्लेखविधानेऽपि तन्त्रान्तरीयवाक्यैकवाक्यताऽनुरोधात् पलोल्लेखागते द्रव्येऽपि कुडवादिविवक्षायां द्वैगुण्यं भवति। तथापि चरके चतरचोपचिकित्सिते—"मधुकाष्टपलं द्राक्षाप्रस्थकाथ." इत्यादिना यः प्रयोग उक्तः, स अनुकर्षं द्राक्षाप्रस्थः मधुकार्द्धप्रस्थकाथ इत्यादि ग्रन्थेन पठितः, तेन अनुकर्षे मधुकस्यार्द्धप्रस्थोल्लेखपाठात् कतद्वैगुण्यमेव जलं भवति, तन्मध्याग्रचरकेऽपि मधुकाष्टपलोल्लेखविहितेऽपि काथे कुडवयविवक्षया कतद्वैगुण्यमेव जलं दीयते। तद्वदत्रापि आढके

